वर्षत्रयान्ते च बभ्रूग्रसेनप्रभृतिभिर्यादवैर्न तद्रत्नं कृष्णेनापहृतमिति कृतावगतिर्विदेहपुरीं गत्वा बलदेवः सम्प्रत्याय्य द्वारकामानीतः॥ ४८॥

अक्रूरोऽप्युत्तममणिसमुद्भूतसुवर्णध्यानपरस्ततो यज्ञानीजे॥ ४९॥

सवनगतौ हि क्षत्रियवैश्यौ निघ्नन् ब्रह्महा भवतीत्यतो दीक्षाकवचं प्रविष्ट एव तस्थौ द्विषष्टिवर्षाणि॥ ५०॥

एवं तन्मणिरत्नप्रभावात् तत्रोपसर्गदुर्भिक्षमरकादिकं नाभूत्॥ ५१॥

अथाक्रूरपक्षीयैर्भोजैः शत्रुघ्ने सात्वतस्य प्रपौत्रे व्यापादिते भोजैः सहाक्रूरो द्वारकामपहाय अपक्रान्तः॥ ५२॥

तदपक्रान्तिदिनादारभ्य तत्रोपसर्गव्यालानावृष्टिमर-काद्युपद्रवा बभूवुः। अथ यादव-बलभद्रोग्रसेन-समवेतोऽमन्त्रयद् भगवानुरगारिकेतनः, कियदिदमेकदैव प्रचुरोपद्रवागमनमेतदालोच्यताम्॥ ५३॥

इत्युक्ते अन्धकनामा यदुवृद्धः प्राह,– अस्याक्ररस्य पिता श्वफल्को नाम यत्र यत्राभूत्, तत्र तत्र दुर्भिक्ष-मरकानावृष्ट्यादिकं नाभूत्॥ ५४॥

काशिराजस्य विषयेऽत्यन्तानावृष्ट्यां श्वफल्कोऽनीयत्, ततस्तत्क्षणादेव देवो ववर्ष। काशिराजस्य पत्न्याश्च गर्भे कन्या पूर्वमासीत्॥ ५५॥

---

तदेवं सर्वज्ञयोः श्रीकृष्ण-बलभद्रयोः मण्यर्थे शपथादिकं भक्तस्याक्रूरस्य च ज्ञात्वा कृष्णाय मण्यप्रदानं धनदोष-प्रदर्शनार्थमेवोक्तम्। बलभद्रागमनमाह— 'वर्षत्रये' ति सम्प्रत्यात्य शपथादिना विश्वास्य॥ ४८॥

[१] सुवर्णध्यानपरः एतावद्भिः सुवर्णैः किं क्रियते इति विचारपरः॥ ४९॥

सवनगतौ दीक्षितौ॥ ५०॥

मरको जनमारी॥ ५१॥

अथ रामादीनां कृष्णे स्यमन्तकापहारशङ्कानिरासं वक्तुमाह— 'अथाक्रूरे' त्यादिना यावदध्यायसमाप्ति॥ ५२॥

उरगारिकेतनो गरुडध्वजः. यद् यत इदं प्रचुरोपद्रवागमनम् एतन्निमित्तमालोच्यतामित्यर्थः॥ ५३॥

श्वफल्कगान्दिन्योर्माहात्म्योक्तिस्तत्पुत्राक्रूरमहिमज्ञापनार्था।।५४।।

गर्भे कन्या पूर्वमासीदिति निश्चयो ज्योतिःशास्त्रादिना॥ ५५॥

सापि पूर्णेऽपि प्रसूतिकाले नैव निश्चक्राम। एवञ्च तस्य गर्भस्य द्वादश वर्षाण्यनिष्क्रामतो ययु:। काशिराजस्तु तामात्मजां गर्भस्थामाह, पुत्रि! कस्मान्न जायसे? निष्क्रम्यताम् आस्यन्ते द्रष्टुमिच्छामि। स्वकाञ्च मातरं किमिति चिरं क्लेशयसि इत्युक्ता सा गर्भस्थैव व्याजहार, तात! यद्येकैकां गां दिने दिने ब्राह्मणेभ्य: प्रयच्छसि, तदाहमन्यैस्त्रिभिर्वर्षैरस्माद् गर्भात् तावदवश्यं निष्क्रमिष्यामीति। एतच्च तद्वचनमाकर्ण्य राजा ब्राह्मणाय दिने दिने गां प्रादात्, सापि तावता कालेन जाता। ततस्तस्या: पिता गान्दिनीति नाम चकार। ताञ्च गान्दिनीं कन्यां श्वफल्कायोपकारिणे गृहागतायार्घ्यभूतां प्रादात्, सा च गान्दिनी प्रतिदिनं यावज्जीवं ब्राह्मणाय गां दत्तवती। तस्यामयमक्रूर: श्वफल्काज्जज्ञे। तस्यैवङ्गुणमिथुनादुत्पत्ति:॥५६॥

तत् कथमस्मिन्नपक्रान्तेऽत्र मरकदुर्भिक्षाद्युपद्रवा न भविष्यन्ति। तदयमानीयतामिति, अलमत्रातिगुणवत्य-पराधान्वेषणेन इति॥५७॥

यदुवृद्धास्याश्धकस्य एतद्वचनमाकर्ण्य केशवोग्रसेनबल-भद्रपुरोगमैर्यदुभि: कृतापराधतितिक्षाभवमभयं दत्त्वा श्वाफल्कि: स्वपुरमानीत:, तत्र चागत एव तत्स्थ-स्यमन्तकमणेरनुभावादनावृष्टि-मरक-दुर्भिक्षव्यालाद्युपद्रव: शशाम। कृष्णश्च चिन्तयामास,– स्वल्पमेतत् कारणं यदयं गान्दिन्यां श्वफल्केनाक्रूरो जनित: सुमहांश्चायमनावृष्टि-दुर्भिक्षमरकाद्युपशमनकारी प्रभाव:॥५८॥

---

एवं पूर्वोक्ता गुणा यस्य मिथुनस्य तस्मात्॥५६॥

इति पूर्वोक्तप्रकारेणातिगुणवत्यक्रूरे इतो निष्क्रान्ततया निमित्ते सति अपनिमित्तानुसरणेनालं व्यर्थमित्यर्थ:॥५७॥

कृष्णश्चिन्तयामासेत्यतो भगवतस्तस्य सर्वज्ञस्य तत्परामर्शेन मणिसम्भावनं लोकवृत्तानुसरणमात्रं न तत्त्वत:, अन्यथा समस्तमङ्गलमूर्तौ भगवति कृष्णे सति तदरिष्टदर्शनमपि दुर्घटमिति। तथाह शुक्र:– "इत्यङ्गोपदिशत्वेके विस्मृत्य प्रागुदाहृतम्। सुनिवासनिवासे किं घटेतारिष्टदर्शनम्.॥" इति। तस्मादेतल्लोकानुसरणं परप्रत्ययेन स्वापवादपरिहारपरमेवेति। अल्पोपादनं स्वल्पजीविकाद्रव्यम्। अन्यत् प्रयोजनं विवाहादिकमुद्दिश्य समाजं समुदायमचीकरत् कारयामास॥५८॥

तन्नूनमस्य सकाशे स महामणिः स्यमन्तकाख्यस्तिष्ठति। तस्य ह्येवंविधाः प्रभावाः श्रूयन्ते। अयमपि यज्ञादनन्तरमन्यत् क्रत्वन्तरं, तस्माद् यज्ञान्तरं यजतीति। अल्पोपादानञ्चास्य। असंशयमत्रासौ वरमणिस्तिष्ठतीति कृताध्यवसोऽन्यत् प्रयोजनमुद्दिश्य सकलयादवसमाजमात्मगेहे एवाचीकरत्। तत्र चोपविष्टेष्वखिलेषु यादवेषु पूर्वप्रयोजनमुपन्यस्य पर्यवसिते च तस्मिन् प्रसङ्गगतपरिहासकथामक्रूरेण सह कृत्वा जनार्द्दनस्तमक्रूरमाह॥ ५९॥

दानपते! जानीम एव वयं,-यथा शतधन्वना अखिलजगत्सारभूतं स्यमन्तकरत्नं भवतः सकाशे समर्पितम्। तदेतद्राष्ट्रोपकारकं भवतः सकाशे तिष्ठतीति तिष्ठतु, सर्व एव वयं तत्प्रभावफलभुजः किन्त्वेषं बलभद्रोऽस्मानाशङ्कितवान्। तदस्मत् प्रीतये दर्शय, इत्यभिहितः सरत्नः सोऽचिन्तयत्। किमत्रानुष्ठेयम्? अन्यथा चेत् ब्रवीम्यहं, तत् केवलाम्बरतिरोधानमन्विशष्यन्तो रत्नमेते द्रक्ष्यन्तीति, अतोऽन्वेषणं न क्षेममिति सञ्चिन्त्य तमखिलजगत्कारणभूतं नारायणमाहाक्रूरः-भगवन्! ममैवत् स्यमन्तकमणिरत्नं शतधनुषा समर्पितम्॥ ६०॥

अपगते च तस्मिन अद्य श्वः परश्वो वा भगवान् मां याचिष्यतीति कृतमतिरतिकृच्छ्रेणैतावन्तं कालमधारयम्, अस्य त धारणक्लेशेनाहमशेषोपभोगेष्वसङ्गिमानसो न वेदिम् स्वसुखकलामपि॥ ६१॥

एतावन्मात्रमशेषराष्ट्रोपकारि धारयितुं न शक्नोतीति मां भगवान् मंस्यत इत्यात्मना न चोदितम्॥ ६२॥

---

यदर्थं यादवाः समाहूतास्तदुपन्यस्य युक्तमयुक्तं वेति पृष्ट्वा॥५९॥

दानपते इति सम्बोधनं साकूतम्॥ ६०॥

धारणाक्लेशेन क्लेशहेतुनियमेन। भोगेषु असङ्गि मानसं यस्य सोऽहं स्वसुखस्य कलां लेशमपि न वेद्मि॥ ६१॥

तर्हि किमिति मयि नोक्तम्? तत्राह,— एतावन्मात्रं स्वल्पमपि अशेषराष्ट्रोपकारकमपि अयं धारयितुं न शक्नोतीत्यशक्त मां भवान् मंस्यते इति भिया आत्मना मया तुभ्यं नोदितञ्च। अस्योशेषराष्ट्रेति पाठेऽस्य उग्रसेनस्येत्यर्थः॥ ६२॥

तदिदं स्यमन्तकरत्नं गृह्यताम्, इच्छया यस्याभिमतं तस्य समर्प्यताम्। ततः सोऽधरवस्त्रनिगोपितातिलघुकनकसमुदगकं प्रकटीकृतवान्॥ ६३॥

ततश्च निष्क्राम्य स्यमन्तकमणिं तत्र यदुसमाजे मुमोच। मुक्तमात्रे च तेनातिकान्त्या तदखिलमास्थान-मुद्द्योतितम्॥ ६४॥

अथाहाक्रूरः,-एष मणिर्यः शतधन्वनास्माकं समर्पितः यस्यायं, स एनं गृह्णात्विति। तन्मणिरत्नमालोक्य सर्वयादवानां साधु साध्विति विस्मितमनसां वाचाऽश्रूयन्त। तमालोक्य ममायमुच्युतेनैव सामान्यः समन्विच्छित इति बलभद्रः सस्पृहोऽभवत्॥ ६५॥

ममैवेदं पितृधनमित्यतीव च सत्यभामापि स्पृहयाञ्चकार। बल-सत्याननावलोकनात् कृष्णोऽप्यात्मानं चक्रान्तरावस्थित-मिव मेने॥ ६६॥

सकलयादवसमक्षञ्चाक्रूरमाह, -एतद्धि मणिरत्नमात्म-शोधनायैषां यदूनां दर्शितम्। एतच्च मम बलभद्रस्य तच्च सामान्यं, पितृधनञ्चैतत् सत्यभामाया नान्यस्य॥ ६७॥

एतच्च सर्वकालं शुचिना ब्रह्मचर्यगुणवता ध्रियमाणमशेषराष्ट्रस्योपकारकम्, अशुचिना ध्रियमाण-माधारमेव हन्ति॥ ६८॥

अतोऽहमस्य षोडशस्त्रीसहस्रपरिग्रहदसमर्थो धारणे॥ ६९॥

---

कनकसमुद्गकं सुवर्णसम्पुटकम्॥ ६३॥

आस्थानं सभा॥ ६४॥

म बलभद्रस्यात्मना सह अयं मणिः सामान्यः साधारण इति अच्युतेन कृष्णेनैव समन्विच्छितः स्वीकृत इति हेतोः सस्पृहोऽभवत्। इच्छेर्लिङ्गधातोःक्तः॥ ६५॥

चक्रयोरन्तरावस्थितमिव संशयितमात्मानं मेने। गोचक्रान्तरेति पाठे शकटचक्रबलीवर्द्धान्तर्गतमिवेत्यर्थः॥ ६६॥

नायस्य एतत्त्रयभिन्नस्य॥ ६७॥

ततः किमत आह—'एतदि'। आधारं धारकमेव हन्ति॥ ६८॥

षोडशस्त्रीसहस्रपरिग्रहादिति ब्रह्मचर्यं नैव घटत इति कल्पनार्थं हेतुः॥ ६९॥

कथञ्चैतत्, सत्यभामा स्वीकरोतु? आर्य्येण बलभद्रेणापि मदिरापानाद्यशेषोपभोगपरित्यागः कथं कार्यः। तदयं यदुलोकोऽयं बलभद्रोऽहं सत्या च त्वां दानपते! प्रार्थयामः, एतद् भवानेव धारयितं समर्थः, त्वत्स्थञ्चास्य राष्ट्रस्योपकारकं, तद्भवानशेषराष्ट्रोपकारनिमित्तमेतत् पूर्ववद् धारयतु। त्वयान्यथा न वक्तव्यमित्युक्ते दानपतिस्तथेत्युक्त्वा जग्राह तन्महामणिरत्नम्। ततः प्रभृति चाक्रूरः प्रकटेनैवातीव तेजसा जाज्वल्यमानेनात्मकण्ठासक्तेनादित्य इवांशुमाली चचार॥७०॥

इत्येतां भगवतो मिथ्याभिशस्तिक्षालनां : स्मरति, न तस्य कदाचिदल्पापि मिथ्याभिशस्तिर्भवति, अव्याहतेन्द्रियश्चा-खिलपापमोक्षमवाप्नोति॥७१॥

इति श्रीविष्णुपुराणे चतुर्थांशे त्रयोदशः अध्यायः॥

---

ततः प्रभृति प्रकटेनेति बलभद्रसत्यभामाद्यभ्यसूयाभावत्। भक्ते अक्रूरे भगवतः स्थापितमिति लोकभयाच्च मणिं गुप्तं भगवदनुमतमेवाधारयत्। इदानीमभिशस्तिपरिहाराय स्वयमेव केवलं प्रकटीकृतमक्रूरो धृतवानित्यर्थः॥७०॥

मिथ्याभिशस्तिक्षालनां मिथ्याभिशापनिवर्त्तनोपायभूतं हरिचरितं यः स्मरति। तस्य मिथ्याभिशापो न भवति। कृष्णेन स्वभक्ते मणिः स्थापित इति कृष्णाभियोगपरिहाराय पूर्वं गुप्त दधार, अनेनैवाभिप्रायेण शतधन्वना मणौ समर्प्यमाणे यद्यन्तावस्यामपि नान्यस्य कथयसि तर्ह्यादास्यामीत्युवाच। न तु सर्वज्ञकृष्णवञ्चनाय। यज्ञकवचधारणञ्च यादवभयादेव न तु कृष्णभयात्। अन्यथा मणिना सह सभाप्रवेशो न घटते। अतोऽक्रूरे महाभागवते मणिस्पृहातिकल्पनमतिमन्दमित्युपेक्षणीयमिति भावः॥७१॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां चतुर्थांऽशे त्रयोदशोऽध्यायः समाप्तः॥

# चतुर्दशः अध्यायः

## (अनमित्रान्धकयोर्वंशवर्णनम्)

पराशर उवाच

अनमित्रस्यानुजः शिनिर्नामाभवत्। तस्यापि सत्यकः सत्यकात् सात्यकिर्युयुधाननामा, ततोऽप्यसङ्गः, तत्पुत्रश्च तूणिः, तूणेर्युगन्धर इति शैनेयाः॥ १॥

अनमित्रस्यैवान्वये पृश्निः तस्माच्च श्वफल्कः। तत्प्रभावः कथित एव। श्वफल्कस्य कनीयांश्चित्रको नामाभवद् भ्राता, श्वफल्कादक्रूरो गान्दिन्यामभवत्। तथोपमद्गु-मृदल-विशारि-मेजय-गिरि-क्षत्रोपक्षत्र-शत्रुघ्न-विमर्द्दनधर्म-धृगद्दष्टशर्म-गन्धमोजावाह-प्रतिवाहाख्याः पुत्राः सुताराख्या च कन्या। देववान् उपदेवश्च अक्रूरपुत्रौ। पृथुविपृथुप्रमुखाश्चित्रकस्य पुत्रा बहवोऽभवन्॥ २॥

कुकुर-भजमान-शुचि-कम्बलबर्हिषाख्यास्तथान्धकस्य चत्वारः पुत्राः॥ ३॥

कुकुलाद् धृष्टः तस्माच्च कपोतरोमा, ततश्च विलोमा, तस्मादपि तुम्बुरुसखा भवसंज्ञकश्चन्दोदकदुन्दुभिः। ततश्चाभिजित्, ततः पुनर्वसुः, तस्याप्याहुकः पुत्रः, आहुकी कन्याभूत्॥ ४॥

---

क्रमागता वृष्णिवंशाः शैनेयाद्याश्चतुर्दश। वर्ण्यन्ते शिशुपालस्य सायुज्यञ्चात्र सूच्यते। सत्यतस्य सप्तमः पुत्रो वृष्णिस्ततपुत्रौ अनमित्र-शिनी। तत्रानमित्रस्य निघ्नतः तस्य प्रसेनसत्रादितावित्येको वंस उक्तः। तत्र प्रसङ्गागतस्यमन्तकोदारणमुक्तम्, इदानीमनमित्रानुजस्यान्यस्य शिनेर्वंश्याः शैनेयाः॥ १॥

पुनश्चानमित्रस्य वंशान्तरमाह—'अनमित्रस्ये' त्यादिना' 'बहवोऽभवन्ति'त्यन्तेन। चित्रकस्य श्वफल्कस्यानुजस्य पृथुप्रमुखाः पुत्राः॥ २॥

अन्धकस्य सात्वत पुत्रस्यकुकुरादयः पुत्राः।।३।।

तत्र कुकुरस्य वंशमाह— '**कुकुरा**' दित्यादिना 'उग्रसेनतनजा' इत्यन्तेन। भवसंज्ञस्यैव उपनाम चन्दनोदकदुन्दुभिरिति॥ ४॥

आहुकस्थ देवकोग्रसेनौ द्वौ पुत्रौ। देववानुपदेवश्च सुदेवो देवरक्षितो देवकस्यापि चत्वारः पुत्राः। तेषाञ्च वृकदेवा उपदेवा देवरक्षिता श्रीदेवाशान्तिदेवा सहदेवा देवकी च सप्त भगिन्यः। ताश्च सर्वा एव वसुदेव उपयेमे। उग्रसेनस्यापि कंसन्यग्रोध-सुनाम-कङ्क-शङ्क-स्वभूमि-राष्ट्रपाल-युद्धमुष्टि-तुष्टिमत्-संज्ञाः पुत्राः, कंसा कंसवती सुतनू राष्ट्रपाली कङ्की चोग्रसेनतनुजाः॥५॥

भजमानाच्च विदूरथः पुत्रोऽभवत्। विदूरथात् शूरः शूरात् शमी शमिनः प्रतिक्षत्रः, तस्मात् स्वयम्भोजः, ततश्च हृदिकः॥६॥

ततश्च कृतवर्मा, तस्मात् शतधनुर्देवमीढुषाद्या बभूवुः॥७॥

देवमीढुषस्य शूरः शूरस्यापि मारिषा नाम पत्न्यभवत्॥८॥

अस्याञ्चासौ दश पुत्रानजनयद् वासुदेवपूर्वान्। वासुदेवस्य जातमात्रस्यैव एतद्गृहे भगवदंशावतारमव्याहतदृष्ट्या पश्यद्भिर्देवैर्दिव्या आनका दुन्दुभयश्च वादिताः॥९॥

ततस्तदैवानकदुन्दुभिसंज्ञामवाप। तस्यापि देवभाग-देवश्रवोऽनाधृष्टि-करुन्धक-वत्सबालकसृञ्जय-श्याम-शमीक-गण्डूषसंज्ञा नव भ्रातरो बभूवुः, पृथा श्रुतदेवा श्रुतकीर्त्तिः, श्रुतश्रवाः राजाधिदेवी च वसुदेवादीनां पञ्चभगिन्योऽभवन्। शूरस्य च कुन्तिभोजनामा सखाभवत्। तस्मै चापुत्राय पृथामात्मजां विधिना शूरोऽददात्। ताञ्च पाण्डुरुवाह। तस्याञ्च धर्मनिलशक्रैयुधिष्ठिर भीमार्जुनाख्यास्त्रयः पुत्राः समुत्पादिताः। पूर्वमनढायाश्च भगवता भास्वता कर्णाख्यः कानीतः पुत्रोऽजन्यत॥१०॥

---

तनुजाः कन्याः॥५॥

भजमानस्य सात्वपुत्रस्य कृमि-कृकण-वृष्ण्य इत्येको वंश उक्तः। इदानीं तस्यैव वंशान्तरमाह— '**भजमाना**' दित्यादिना यावदध्यायसमाप्तिः॥६॥

हृदिकात् कृतवर्मशतधनुर्देवमीढुषाद्याः पुत्रा बभूवुः। देववाहाद्या इति पाटे तु देवपदेन देवमीढुष इत्येवोक्तः॥७॥

देवमीढुषस्य पुत्रो यः शूरस्तस्य मारिषा नाम पत्न्यभूदित्यर्थः॥८॥

आनकाः पटहाः दुन्दुभयो भेर्य्यः॥९॥

तस्याश्च सपत्नी माद्री नामाभवत्। तस्याञ्च नासत्यदस्राभ्यां नकुलसहदेवौ पाण्डोः पुत्रौ जनितौ। श्रुतदेवान्तु वृद्धशर्मा नाम कारूष उपयेमे। तस्यां दन्तवक्रो नाम महासुरो जज्ञे। श्रुतकीर्तिमपि कैकेयराज उपयेमे तस्यां सन्तर्दनादयः पञ्च कैकेयाः पुत्रा बभूवुः। राजधिदेव्यामावन्त्यौ विन्दानुविन्दौ जज्ञाते॥ ११॥

श्रुतश्रवसमपि चेदिराजो दमघोषनामा उपयेमे। तस्यां शिशुपालमुत्पादयामास। स हि पूर्वमप्यनाचारविक्रमसम्पन्नो दैत्यादिपुरुषो हिरण्यकशिपुरभूत्॥ १२॥

यश्च भगवता सकललोकगुरुणा घातितः पुनरप्यक्षतवीर्यशौर्यसम्पत्-पराक्रमगुणः समाक्रान्तसकल-त्रैलोक्येश्वरप्रभावो दशाननोऽभवत्॥ १३॥

बहुकालोपभुक्त-भगवत्सकाशादेवाप्त-शरीर-पातोद्भव-पुण्यफलोऽशऽथ भगवतैव राघवरूपिणा सोऽपि निधनमुपनीतः, पुनश्चेदिराज-दमघोषपुत्रः शिशुपाल-नामाभवत्॥ १४॥

शिशुपालत्वे च भगवतो भूभारावतारणायावतीर्णांशस्य पुण्डरीकनयनाख्यस्य उपरि द्वेषानुबन्धमतितरां चकार। भगवता च निधनमुपनीतस्तत्रैव परमात्मभूते मनसस्तदेकाग्रतया तत्रैव सायुज्यमवाप॥ १५॥

भगवान् हि प्रसन्नो यथाभिलषितं ददाति, अप्रसन्नोऽपि निघ्नन् दिव्यमनुपमं स्थानं प्रयच्छति॥ १६॥

इति श्रीविष्णुपुराणे चतुर्थांशे चतुर्दशः अध्यायः।

---

कानीनः कन्यकावस्थायां जातः॥ १०॥

अनाचारः स्वपुत्रादिद्वेषः, विक्रमः शौर्यं, ताभ्यां सम्पन्नः॥ १२॥

अक्षताः पूर्णा वीर्यादिगु यस्य सः। वीर्यं बलं, शौर्यमुत्साहः पराक्रमः प्रभावः। समाक्रान्ताः त्रैलोक्येश्वरा येन तथाभूतः प्रभावो यस्य सः॥ १३॥

बहुकालमुपभुक्तं भगवत्सकाशादेवाप्तशरीरापातोद्भवपुण्यफलं येन सः॥ १४॥

अवान्तरान्वयात्तत्रशब्दस्य पुनरुक्तिर्न दोषाय॥ १५॥

भगवद्द्वेषादपि सायुज्यमुपपादयति 'भगवान्' इति। दिव्यत्वेऽप्यनुपमस्थानं तथा प्रयच्छतीति॥ १६॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां चतुर्थांऽशे चतुर्दशोऽध्यायः समाप्तः॥

# पञ्चदशोऽध्यायः

## (शिशुपालस्य पूर्व-पूर्वजन्मवृत्तान्तस्य वसुदेवस्य च सन्तानानां वर्णनम्।)

**मैत्रेय उवाच**

**हिरण्यकशिपुत्वे च रावणत्वे च विष्णुना।**
**अवाप निहतो भोगानप्राप्यानमरैरपि॥**
**न लयं तत्र तेनैव निहतः स कथं पुनः।**
**सम्प्राप्तः शिशुपालत्वे सायुज्यं शाश्वते हरौ॥**
**एतदिच्छाम्यहं श्रोतुं सर्वधर्मभृतां वर!**
**कौतूहलपरेणैतत् पृष्टो मे वक्तुमर्हसि॥ १॥**

**दैत्येश्वरस्य तु वधायाखिललोकोत्पत्तिस्थितिविनाश-कारिणा पूर्वतनुं गृह्णता नृसिंहरूपमाविष्कृतम्। तत्र हिरण्यकशिपोर्विष्णुरयमित्येवं न मनस्यभूत्॥ २॥**

**निरतिशयपुण्यजातसम्भूतमेतत् सत्त्वमिति रजोद्रेक-प्रेरितैकाग्रमतिस्तद्भावनायोगात् ततोऽवाप्तवधहेतुकां निरति-शयामेवाखिलत्रैलोक्याधिक्यधारिणीं दशाननत्वे भोगसम्पद-मवाप॥ ३॥**

**नातस्तस्मिन्ननादिनिधने परब्रह्मभूते भगवत्यनालम्बनीकृते मनसस्तत्र लयम्॥ ४॥**

---

हरेर्जनिः पञ्चदशे संख्यानुक्तिश्च यादवे।सायुज्यं शिशुपालस्य सोपपत्तिकमुच्यते। विष्णुनैव निहतत्वात् प्रागजन्मन्येव किं न मुक्त इति। हिरण्यकशिपुत्व इत्यादिप्रश्नार्थः॥ १॥

वस्तुशक्त्या भगवन्नामकीर्त्तन-ध्यानादिना क्षीणकल्पषस्य तत्साक्षात्कारेणैवान्येषामपि मोक्षः। ततः शिशुपालत्वे च तत्सम्भावत् स मुक्तो नातः प्रागित्युत्तरार्थः। सनकाद्यनुग्रहात् तृतीयजन्मन्येवावश्यं भावित्वान्मोक्षस्य तत्रैव तद् हेतुसम्भवमाह—**'दैत्यश्वरस्ये'** त्यादिना 'किमुत सम्यक् भक्तिमता' मित्यन्तेन॥ २॥

रजोद्रेकेति सन्धिरार्षः। निरतिशयपुण्येत्यादिरूपा रजस उद्रेकेण प्रेरिता एकाग्रा तन्मात्रविषयिणी मतिर्यस्य सः। तद्भावनारूपात् योगात् ततोऽवाप्तवध एव हेतुर्यस्य तामखिलत्रैलोक्यमध्ये आधिक्यधारिणीमतिशयितां भोगसम्पदमवापेत्यन्वयः॥ ३॥

अतस्तस्मिन् मनसोऽनालम्बनीकृतेऽविषयीकृते परब्रह्मभूते तदा स्वयं सायुज्यं नावापेत्यनुषङ्गः॥ ४॥

दसाननत्वेऽप्यनङ्गपराधीनतया जानकीसमासक्तचेतसो दाशरथिरूपधारिणस्तद्रूपदर्शनमेवासीत्, नायमच्युत इत्यासक्तिर्विपद्यतोऽन्तःकरणस्य मानुषबुद्धिरेव केवलमभूत्॥ ५॥

पुनरच्युतविनिपात मात्रफलमखिल-भूमण्डलश्लाघ्य-चेदिराजकुलजन्माव्याहतञ्चैश्वर्य्यं शिशुपालत्वे चावाप॥ ६॥

तत्र त्वखिलान्येव भगवन्नामकारणान्यभवन्। ततश्च तत्कारणकृतानां तेषामशेषाणामेवाच्युतनाम्नामनवरत-मनेकजन्मसंवर्द्धितविद्वेषानुबन्धिचित्तो विन्दिन् सन्तर्जनादिषु उच्चारणमकरोत्॥ ७॥

तच्च रूपमुत्फुल्लपद्मदलामलाक्षमत्युज्ज्वलपीतवस्त्रधारि अमल-किरीट-केयूर-कटकोपशोभितमुदारपीवरचतुर्बाहु- शङ्ख-चक्र-गदासिधरमतिप्रौढ़वैरानुभावादटन-भोजन-स्नाना-सनशयनादिष्टवस्थान्तरेषु नैवापययावस्यात्मचेतसः॥ ८॥

ततस्तेमेवाक्रोशेषूच्चारयन् तमेव हृदये धारयनात्मवधाय भगवदस्तचक्रांशुमालोज्ज्वलमक्षयतेजः स्वरूपं परमब्रह्म-स्वरूपमपगतरागद्वेषादिदोषं भगवन्तमद्राक्षीत् तावच्च भगवच्चक्रेणाशु व्यापादितः। तेन तत्स्मरणदग्धाखिलाघसञ्चयो भगवतैवान्तमुपनीतस्तस्मिन्नेव लयमुपययौ॥ ९

---

दशाननत्वेऽपि अस्ये दाशरथिरूपदर्शनमेव पूर्वमासीत्। विपद्यमानस्य च तस्यान्तःकरणे मानुषबुद्धिरेवाभूत। नायमच्युत इत्यासक्तिर्निश्चयोऽभूदित्यर्थः॥५॥

अच्युतविनिपातनमात्रात् फलं श्रेष्ठ जन्म ऐश्वर्य्यञ्चाव्याहतं केवलमभूदिति॥६॥

तदन्ते च मोक्षं सहेतुकमाह—'**तत्र त्वि**' त्यादिना 'लयमुपयया' वित्यन्तेन। तत्र शिशुपालत्वे अच्युतनाम्नाच्चारणमकरोदिति सम्बन्धः। किंविशिष्टानां— भगवन्नामकारणानि केशिकंसवधचक्रधारणादीनि यान्यभवत् तैः कारणैः प्रवृत्तिनिमित्तैः कृतानां सङ्केतितानां केशवं-कंसध्वंसि-चक्रपाणि प्रभृतीनां सन्तर्जनं वाक्‌ताडनं, तदनेन भगवन्नामकीर्त्तनावृत्तिरुक्ता॥७॥

साकारध्याननिष्ठामाह—'तच्चरूपमिति'। तद्रूपमटनादिषु आत्मनः शिशुपालस्य चेतसो नैवापययावित्यन्वयः। 'आत्मनो बुद्धेश्चेतसश्च नैवापययाविति चार्थः॥८॥

ततश्च कीर्तनध्यानाभ्यां शुद्धान्तःकरणस्य मोक्षहेतुसाक्षात्कारमाह—'**तत**' इति। आक्रोशेष्वाक्षेपोक्तिषु भगवता अस्य क्षिप्तं यत् चक्रं तस्यांशुमालाभिरुज्ज्वलम्॥९॥

**एतत् तवाखिलं मयाभिहितम्। भगवानिह कीर्त्तितः संस्मृतश्च द्वेषानुबन्धेनाप्यखिलसुरासुरादिदुर्लभं फलं प्रयच्छति किमुत सम्यग् भक्तिमताम्॥ १०॥**

**वसुदेवस्यानकदुन्दुभेः पौरवी-रोहिणी-मदिरा-भद्रा-देवकी-प्रमुखा बह्वयः पत्नोऽभवन्।**

**बलभद्र-शारण-शठ-दुर्मदादीन् पुत्रान् रोहिण्यामानक-दुन्दुभिरुत्पादयामास। बलभद्रोऽपि रेवत्यां निशठोल्मुकौ पुत्रावजनयत्। मार्ष्टि-मार्षिम-च्छिशिशिशु-सत्यधृतिप्रमुखाः शारणस्यात्मजाः॥ ११॥**

**भद्राश्व-भद्रबाहु-दुर्द्दम-भूताद्या रोहिण्याः कुलजाः॥ १२॥**

**नन्दोपनन्दकृतकाद्या मदिरायास्तनयाः। भद्रायाश्चोपनिधि-गदाद्याः। वैशाल्यां च कौशिकमेकमजनयदानकदुन्दुभिः। देवक्यामपि कीर्त्तिमत्सुषेणोदापि-भद्रसेन-ऋजुदास-भद्रदेहाख्याः षट् पुत्रा जज्ञिरे। तांश्च सर्वानिव कंसो घातितवान्॥ १३॥**

**अनन्तरञ्च सप्तं गर्भमर्द्धरात्रे भगवत् प्रहिता योगनिद्रा रोहिण्या जठरमपकृष्य नीतवती॥ १४॥**

**कर्षणाच्चासावपि सङ्कर्षणाख्यमवाप॥ १५॥**

---

[1] शिशुपालमुक्तिं निगमयति—'**एतदि**' ति सुरादिदुर्लभं फलं मुक्तिरूपम्॥ १०॥

शिशुपालजन्मप्रसङ्गगतं समाप्य प्रकृतवंशमाह—'वसुदेवस्ये' ति। पौरवी पुरुवंशोद्भवेति रोहिण्या विशेषणम्। अत एव पौरव्या न पृथग्वंशकीर्त्तनम्॥ ११॥

रोहिण्याः प्राधान्येन बलभद्रादीन् वंशानुक्त्वा अन्यानपि वंशानाह— '**भद्रश्वे**' ति्। आद्यशब्देन पिण्डारकोषीनरयोर्ग्रहणम्। अत्र पौरव्या इति पाठेऽपि रोहिणीनाम्ना इत्यर्थः। एतेषामेव रोहिण्यास्तनया दशेति हरिवंशे ग्रहणात्। कुलजा वंशाः॥ १२॥

कीर्त्तिमदादीनां प्राग्जन्मसंज्ञयैव कीर्त्तनमकृतनाम्नामेव तेषां कंसेन हननात्॥ १३॥

रोहिण्यास्तनयस्य सतो देवकीपुत्रत्वं बलदेवस्य समर्थयितमाह—'अनन्तरञ्चेति। देवकीजठरादाकृष्य रोहिणीजठरं नीतवती॥ १४॥

अनेनोपाधिना सङ्कर्षणसंज्ञां निर्वक्ति—'**कर्षणचे**'ति॥ १५॥

ततः सकलजगन्मरातरुमूलभूतो भूतातीतभविष्यदादि-सकलसुरासुर-मुनि-मनुज-मनसामप्यगोचरोऽब्जभवप्रमुखै- रनलप्रमुखैश्च प्रणम्यावनि-भारावतारणाय प्रसादितो भगवाननादिमध्यो देवकीगर्भे समवततार वासुदेवः॥ १६॥

तत्प्रसादविवर्द्धितमानाभिमाना च योगनिद्रा नन्दगोपपत्न्या यशोदाया दर्भमधिष्ठितवती॥ १७॥

सुप्रसन्नादित्यचन्द्रादिग्रहमव्यालादिभयं सुस्थमानसमखिल-मेवैतज्जगदपास्ताधर्ममभवत् तस्मिंश्च पुण्डरीकनयने जायमाने॥ १८॥

जातेन च तेनाखिलमेवैतत् सन्मार्गवर्त्ति जगद्क्रियत। भगवतोऽप्यत्र मर्त्यलोकेऽवतीर्णस्य षोडशसहस्त्रण्येकोत्तर-शताधिकानि स्त्रीणामभवन्। तासाञ्च रुक्मिणीसत्यभामा-जाम्बवती जालहासिनी-प्रमुखा अष्टौ पत्न्यः प्रधानाः। तासु चाष्टायुतानि लक्षञ्च पुत्राणां भगवानखिलमुर्त्ति-रनादिमानजनयत्॥ १९॥

तेषाञ्च प्रद्युम्न-चारुदेष्ण-साम्बादयस्त्रयोदश प्रधानाः। प्रद्युम्नो हि रुक्मिणस्तनयां ककुद्वतीं नामोपयेमे। तस्यामस्यानिरुद्धो जज्ञे। अनिरुद्धोऽपि रुक्मिण एव पौत्रीं सुभद्रां नामेपयेमे। तस्यामस्य वज्रोऽभवत्। वज्रस्य प्रतिबाहुः तस्यापि सुचारुः।

एवमनेकशतसाहस्त्रपुरुषसङ्घस्य यदुकुलस्य पुरुषसंख्या वर्षशतैरपि ज्ञातुं न शक्यते। यतो हि श्लोकावत्र चरितार्थौ॥ २०॥

---

सकलं जगदेव महातरुस्तस्य मूलभूतः भूता वर्त्तमानाः अतीताश्च भविष्यन्तश्च आदिशब्दात् तत्तल्लोकवर्त्तिनो महान्तश्च सकला ये सुरासुरादयस्तेषां मनसमाप्यगोचरः। अब्जभवो ब्रह्मा तत्प्रमुखैरीश्वरावताररूपैः अनलप्रमुखैः देवैश्च प्रसादितो वासुदेवो देवकागर्भे समवततार इत्यन्वयः॥ १६॥

मानः सम्मानः, अभिमानो महिमा। तत्प्रसादेन वर्द्धितौ तौ यस्याः सा योगनिद्रा यशोदार्भमधिष्ठितवती प्राप्ता॥ १७॥

तस्मिन् जायमाने सुप्रसन्नादित्यचन्द्रादिग्रहमित्यादि—विशेषणेन विशिष्टं जगदभवदित्यन्वयः॥ १८॥

आसु सर्वासु अष्टायुतानि लक्षञ्चेति। एतेन रुक्मिण्यादीनामष्टपत्नीनां दश दश पुत्रा ज्ञेयाः। अन्यासां यथासम्भवं पुत्रा ज्ञेयाः। अनादिमानदिमद् भिन्नः॥ १९॥

चरितार्थौ यथार्थौ॥ २०॥

तिस्रः कोट्यः सहस्राणामष्टाशीतिशतानि च।
कुमाराणां गृहाचार्याश्चापयोग्यासु ये रताः॥२१॥
सङ्ख्यानं यादवानां कः करिष्यति महात्मनाम्।
यत्रायुतानामयुतं लक्षेणास्ते शताधिकम्॥२२॥
देवासुरहता ये तु दैतेयाः सुमहाबलाः.
ते चोत्पन्ना मनुष्येषु जनोपद्रवकारिणः॥२३॥
तेषामुत्सादनार्थाय भुवि देवो यदोः कुले।
अवतीर्णः कुलशतं यत्रैकाभ्यधिकं द्विज॥२४॥
विष्णुस्तेषां प्रमाणे च प्रभुत्वे च व्यवस्थितः।
निदेशस्थायिनस्तस्य बभूवुः सर्वयादवाः॥२५॥
प्रसूति वृष्णिवीराणां यः श्रृणोति नरः सदा।
स सर्वपातकैर्मुक्तो विष्णुलोकं प्रपद्यते॥२६॥

इति श्रीविष्णुपुराणे चतुर्थांशे पञ्चदशः अध्यायः॥

---

अष्टाशीतिलक्षाधिककोटित्रयपरिमिताश्चापयोग्यासु चापशिक्षासु गृहस्थिता आचार्याः शिक्षकाः। एक आचार्यो बहून् पाठयतीत्यतः शिष्या अधिकाः कृतविद्याः बालाश्च ततोऽधिका इत्यतो यादवा असंख्याता इत्यर्थः॥२१॥

यत्र यदुकुले संख्यानम्। अयुतानां लक्षेण सहायुतं दशोत्तरं शतकोटि तदपि शताम्धकम् आस्ते। सदाहुक इति पाठे आहुक उग्रसेनपिता अयुतानामयुतञ्च तेन दशोत्तरकोटिमितेन विशिष्ट आस्त इत्यर्थः॥२२॥

यादवानामसंख्यत्वे दुर्जयत्वे च हेतुमाह—'देवासुरे' देवासुरसङ्ग्रामे देवैर्हता इत्यर्थः॥२३॥

एकाभ्यधिकं कुलशतं वृष्णिमधुसात्वतेत्यादिभेदेन॥२४॥

प्रमाणे कार्याकार्यनियमे प्रभुत्वे पालकत्वे च निदेशस्थायिनः वचनस्था बभूवुः। ववृधुरिति पाठे पुत्रपौत्रैः वृद्धिं प्राप्ता इत्यर्थः॥२५॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां चतुर्थेऽशे पञ्चदशोऽध्यायः॥

## षोडशोऽध्यायः
## (तुर्वसुवंशकथनम्)

पराशर उवाच

इत्येष समासतस्ते कथितः तुर्वसोर्वंशमवधारय॥ १॥

तुर्वसोर्वह्निरात्मजः वह्नेर्गोभानुः, ततश्च त्रैशाम्बः, तस्माच्च करन्धमः, तस्मादपि मरुत्तः सोऽनपत्योऽभवत्। ततश्च पौरवं दुष्मन्तं पुत्रमकल्पयत्स एवं ययातिशापात् तद्वंशः पौरवं वंशमाश्रितवान्॥ २॥

इति श्रीविष्णुपुराणे चतुर्थांशे षोडशः अध्यायः॥

---

षोडशे तुर्वसोर्वंशो मरुत्तान्तोऽनुवर्ण्यते। ययातिशापाद् दुष्मन्तं पौरवं यः समास्थितः। एष यदोर्वंशः॥ १॥

एवं यदुवंश सविस्तरमभिधाय तदनुजस्य तुर्वसोर्वंशमाह—'**तुर्वसो**'रिति यावत्समाप्तिः। ययातिशापादिति, अत्र यद्यपि राज्यनर्हत्वरूप एव शापः प्रतीयते, तथापि तुर्वसु प्रति विशिष्य सन्तत्युच्छेदलक्षणः शापोऽपीत्येव ज्ञायते॥ २॥

**इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां चतुर्थेऽशे षोडशोऽध्यायः॥**

# सप्तदशोऽध्यायः

## (द्रुह्युवंशविवरणम्)

पराशर उवाच

द्रुह्योस्तु तनयो बभ्रुः॥ १॥

ततः सेतुः सेतुपुत्र आरद्वान् नाम, तदात्मजो गान्धारः, ततो धर्मः, धर्माद् धृतः धृताद् दुर्गमः, ततः प्रचेताः, प्रचेतसः पुत्रशतमधर्मबहुलानां म्लेच्छानामुदीच्यादीना-माधिपत्यमकरोत्॥ २॥

इति श्रीविष्णुपुराणे चतुर्थांशे सप्तदशः अध्यायः॥

---

द्रुह्योः सप्तदशे वंशः संक्षेपादनुवर्ण्यते। म्लेच्छानां य उदीच्यानामाधिपत्यमथाकरोत्। ज्येष्ठानुक्रमवंशात् तुर्वसुकनिष्ठस्य शर्मिष्ठपुत्रस्य द्रुह्योर्वंशमाह—'द्रुह्योरि' ति॥ १॥

म्लेच्छानामिति म्लेच्छाधिपत्यकथनात् ययातिशापपरिणामो म्लेच्छभावः सूचितः॥ २॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां चतुर्थेऽशे सप्तदशोऽध्यायः।

# अष्टादशोऽध्याय:

## (ययातिपुत्रस्यानोर्वंशवर्णनम्)

पराशर उवाच।

ययातेश्चतुर्थस्य पुत्रस्य अनो: सभानर-चाक्षु षपरमेक्षुसंज्ञास्त्रय: पुत्र बभूवु:; सभानरपुत्र: कालनर: कालानरात् सृञ्जय:, सृञ्जयात् पुरञ्जय:, तस्माज्जनमेजय:, ततो महामणि:, तस्माच्च महामना:, तस्मादप्युशीनर-तितिक्षु द्वौ पुत्रावुत्पन्नौ। उशीनरस्यापि शिवि-नृप-नर-कृमिखर्वाख्या: पञ्च पुत्रा बभूवु:। वृषदर्भ-सुवीर-कैकय-मद्रकाश्चत्वार: शिविपुत्रा:, तितिक्षोरुषद्रथ: पुत्रोऽभूत। ततो हेम: हेमात् सुतपा:, तस्माद् बलि:, यस्य क्षेत्रे दीर्घतमसा अङ्ग-वङ्ग-कलिङ्ग-सुह्य-पुण्ड्राख्यं बालेयं क्षत्रमजन्यत॥ १॥

तन्नामसन्ततिसंज्ञाश्च पञ्च विषया बभूवु:॥ २॥

अङ्गसुत: पार: ततो दिविरथ:, तस्माद् धर्मरथ:, ततश्चित्ररथ:। रोमपादसंज्ञो यस्य पुत्रो दशरथो यज्ञे। यस्मै अजपुत्रो दशरथ: शान्तां नाम कन्यामनपत्याय दुहितृत्वे युयोज॥ ३॥

रोमपादाच्च तुरङ्ग: तस्माच्च पृथुलाक्ष: ततश्चम्प: । यश्चम्पां निवेशयामास॥ ४॥

---

अष्टादशेऽनुजस्यानोर्वंश: समनुवर्णित:। प्रातिलोम्यात् समुत्पत्तेर्योऽसौ सूतत्वामागत:। बले क्षेत्रे भार्यायां जातत्वाद् बालेयम्॥ १॥

तन्नामेति—तेषामङ्गादीनां नामानि यासां सन्ततीनां तासां संज्ञा येषां ते विषया देशा बभूवु:॥ २॥

ततश्चित्ररथ इति,—यस्य पुत्रो रोमपादसंज्ञो दशरथो जज्ञे, यस्मै अजपुत्रो दशरथ: स्वकन्यां दुहितृत्वे युयोज दत्तवानित्यर्थ:॥ ३॥

चम्पां पुरीम्॥ ४॥

चम्पस्य हर्यङ्गः, ततो भद्ररथो बृहद्रथो बृहत्कर्मा च। बृहतकर्मणश्च बृहद्भानुः, तस्माद् बृहन्मनाः, ततो जयद्रथः, जयद्रथस्तु ब्रह्मक्षत्रान्तरालसम्भूत्यां पत्न्यां विजयं नाम पुत्रमजीजनत्॥५॥

विजयश्च धृतिं पुत्रमवाप। तस्यापि वृतव्रतः पुत्रोऽभूत्। धृतव्रतात् सत्यकर्मा, सत्यकर्मणस्त्वधिरथः। योऽसौ गङ्गां गतो मञ्जूषागतं पृथापविद्धं कर्णं पुत्रमवाप॥६॥

कर्णाद् वृषसेन इत्येते अङ्गाः॥७॥

अतश्च पुरोर्वंशं श्रीतुमर्हसीति॥८॥

इति श्रीविष्णुपुराणे चतुर्थांशे अष्टादशः अध्यायः॥

---

प्रातिलोम्येन ब्रह्मक्षत्रयोरन्तराले सङ्करे सम्भूतिर्जन्म यस्यास्तस्यां सूतायामित्यर्थः। ''ब्राह्मण्यां क्षत्रियाज्ञातः सूतः'' इति स्मृतेः, अतो 'मातृवदावर्णसङ्करा' इति वचनाद् विजयः सूत एव, अतश्च कर्णोऽपि तद्वंश्यत्वात् सूतत्वेन ख्यातः॥५॥

मञ्जूषागतं काष्ठपिञ्जरस्थं, पृथया कुन्त्या अपविद्धं कन्यावस्थायां जातत्वात् लज्जया परित्यक्तं कर्णं पुत्रमवाप। ''**मातापितृभ्यामुत्सृष्ट तयोरन्यतरेण वा। यं पुत्र परिगृहणीयादपविद्धः स उच्यते**'' इति स्मृतेः॥६॥

इत्येते अङ्गा अङ्गवंश्याः॥७॥

**इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां चतुर्थेऽशे अष्टादशोऽध्यायः।**

# एकोनविंशः अध्यायः

## (पुनवंशकथनम्।)

पराशर उवाच

पुरोर्जनमेजयः पुत्रस्तस्यापि प्रचिन्वान्, प्रचिन्वतः प्रवीरः, तस्मान्मनस्युः, मनस्योश्चाभयदस्तस्यापि सुद्युम्नः, ततो बहुगवः, तस्य सम्पातिः, सम्पातेरहम्पातिस्ततो रौद्राश्वः। ऋतेयु कृतेयु-कक्षेयु-स्थण्डिलेयु-धृतेयु-स्थलेयु-सन्ततेयु-धनेयु-वनेयुनमानो रौद्राश्वस्य दशात्मजा बभूवुः॥ १॥

ऋतेयो रन्तिनारः पुत्रोऽभूत्। तंसुमप्रतिरथं ध्रुवञ्च रन्तिनारः पुत्रानवाप। अप्रतिरथात् कण्वस्तस्यापि मेधातिथिः, यतः काण्वायना द्विजा बभूवुः। तंसोरैनिलः, ततो दुष्मन्ताद्याश्चत्वारः पुत्रा बभूवुः, दुष्मन्ताच्चक्रवर्त्ती भरतोऽभवत्। यन्नामहेतुर्देवैः श्लोको गीयते॥ २॥

माता भस्त्रा पितुः पुत्रो येन जातः स एव सः।
भरस्व पुत्रं दुष्मन्त मावमंस्थाः शकुन्तलाम्॥ ३॥
रेतोधाः पुत्र उन्नयति नरदेव! यमक्षयात्।

---

ऊनविंशे क्रमप्राप्तः पुरोर्वंशी निरूप्यते। दुष्मन्ताद् यत्र भरतो यन्नाम्ना भारतास्त्विमे। ऋृतेयुरित्यादिशब्दाः प्रथमैकवचनान्तानुकरणान्येतानि नामानि येषामात्मजानां ते इत्येते रौद्राश्वास्यात्मजा इति पाठः सुगमः॥ १॥

दुष्मन्तो मृगयार्थंमरण्यं गतो विश्वामित्रान्मेनकायां जातां शकुन्तलां नाम कन्यां कण्वाश्रमे दृष्टवा गान्धर्वेण विवाहेन सङ्गम्य गर्भमाधाय स्वपुरं गतः सर्वं विसस्मार। याञ्च जातपुत्रें कण्वप्रहितेन शिष्येणानीतां स्मृत्वापि लोकापवादभयादस्वींकुर्वन्तं दुष्मन्तं प्रति देवीगीतोऽयं श्लोकंः '**माते**'ति। भस्त्रा चर्मपुटकं, तत्स्थानीया माता वीर्य्याधारमात्रं किन्तु पितुर्निषेक्तुरेव पुत्रः। किञ्च येन पित्रा जातो जनितः स एव पुत्रः तदंशभूतवोर्य्योपादानत्वात् '**आत्मा वै जायते पुत्र**' इति वचनाच्च। अतः पुत्रं भरस्व बिभृहि। शकुन्तलाञ्च निर्दोषा भविमंस्था इति भरतनामनिरुक्तिरपि॥ ३॥

**त्वञ्चास्य धाता गर्भस्य सत्यमाह शकुन्तला॥४॥**

**भरतस्य च पत्नीनां ये नव पुत्रा बभूवुः नैते ममानुरुपाः पुत्रा इत्यभिहितास्तन्मातरो जघ्नुः परित्यागभयात्॥५॥**

**ततोऽस्य पुत्रजन्मनि वितथे पुत्रार्थिनो मरुतस्तोयाजिनो दीर्घतमसा पार्ष्ण्यपास्तबृहस्पतिवीर्य्याद्उतथ्यपत्नी-ममतासमुत्पन्नो भरद्वाजाख्यः पुत्रो मरुद्भिर्दत्तः। तस्यापि नामनिर्वचनश्लोकः पठ्यते॥६॥**

**मूढ़े! भर द्वाजमिमं भर द्वाजं बृहस्पते।**

**यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम्॥७॥इति।**

**भरद्वाजश्च तस्य वितथे पित्रजन्मनि मरुद्भिर्दत्तः, ततो वितथसंज्ञामवाप॥८॥**

---

किञ्च रोतधाः रेतसा धीयते विधीयते रेतोधाः सर्मण्यसुन्। औरसः पित्रोऽयमक्षयात् नरकात् तत्रस्थं पितरम् उन्नयति ऊर्द्ध स्वर्ग नयति. यद्वा रेतोधाः रेतः सेक्ता तह पुत्रम् उन्नयति। ततः किम्, अत आह, त्वं त्वस्य भरतस्य रेतोधाः रेतसेक्ता इति सत्यमेवाह, अतो भरस्वेत्यर्थः। नामानिरुक्तिरूपैककार्य्यपरत्वात् श्लोक इत्येकवचनमविरुद्धम्॥४॥

नैते पुत्रा ममानुरूपा मत्सदृशा भवन्तीति भरतेनोक्तस्तेषां मातरोऽसत्पुत्रमातृत्वेन वेणमातरमङ्ग इवास्मान् परित्यज्य वनं यास्यतीति परित्यागभयात् तान् पुत्रान् जघ्नुः घातितवत्यः॥५॥

वितर्थ व्यर्थे सति। दीर्घतमसेति, अत्रेयं कथा, बृहस्पतेग्रजस्य उतथ्यस्य ममताख्यायां भार्याया बृहस्पतिः कामाभिभूतो रेतोऽसृजित्। तच्च गर्भ प्रविशद् गर्भस्थितेन स्थानसङ्कोचभयात् पाष्णर्याघातेनापास्तं बहिःपातितमपि अमोगवीर्य्यतया भरद्वाजनामा पुत्रोऽभवत्। गर्भस्थश्च बृहस्पतिना शसोऽन्धो दीर्घतमा नाम्नाभवत्। स भरद्वाजो देवैर्दत्तः। तत्र च भरद्वाजनामनिरुक्तिपरस्तन्मातापित्रोर्विवादरुपः श्लोको देवैः पठितः॥६॥

मूढ़े! ममते! द्वाजं द्वाभ्यामावाभ्यां जातिमिमं पुत्रं भर पुषाण एवं ब्रवुन्तं बृहस्पतिं ममताह,— हे बृहस्पते! त्वमेवेमं द्वाजं भर इति रसमपरमुक्त्वा परित्यज्य पितरौ ममता-बृहस्पती यत् यस्मात् यातौ, ततः भरद्वाजशब्दोक्तेर्भरद्वाज-संज्ञोऽभूदित्यर्थः। 'यातौ यदु दिखा' दिति पाठे विवदमानावित्यध्याहार्य्यम्॥७॥

भरद्वाजस्यैव भरतपुत्रस्तवदशायां वितथनाम्नो निरुक्तमाह—'**भरद्वाजश्चे**' ति। पितृभ्यां गते सति मरुदभिर्भृतोऽपि मरुत्स्तोमयागतुष्टैस्तस्य वितथे पित्र जन्मनि यतो दत्तस्ततो वितथसंज्ञामवोपत्यर्थः॥८॥

वितथस्य भवन्मन्युः पुत्रोऽभूत्। बृहत्क्षत्र-महावीर्य-नर-गर्गाद्या भवन्मन्यु-पुत्राः। नरस्य सङ्कृतिः, रुचिरधी-रन्तिदेवौ. गर्गाच्छिनिस्ततो गार्ग्याः शैन्याः क्षत्रोपेता द्विजातयो बभूवुः॥ ९॥

महावीर्य्यदुरुक्षयो नाम पुत्रोऽभूत्। तस्य त्रय्यारुण-पुष्करिण्यौ कपिलश्च पुत्रत्रयमभूत्। तच्च त्रितयमपि पश्चाद् विप्रतामुपजगाम्। बृहत् क्षत्रस्य सुहोत्रः, सुहोत्राद् हस्ती, य इदं हस्तिनापुरमारोपयामास। अजमीढ़-द्विमीढ़-पुरुमीढ़ास्त्रयो हस्तिनस्तनयाः, अजमीढ़ात् कण्वः, कण्वाद् मेधातिथिः, यतः काण्वायना द्विजाः॥ १०॥

अजमीढस्यान्यः पित्रो बहदिषुः बृहदिषोबृहद्वसुः, ततश्च बृहत्कर्म्मा, तस्माज्जयद्रथः। ततोऽपि विश्वजित, ततश्च सेनजित्। रुचिराश्व-काश्य-दृढ़-धनुर्वत्-सहनुसंज्ञाः सेनजितः पुत्राः। रुचिराश्वतः पृथुसेनः, तस्मात् पारः पाराद् नीपः। तस्यैकशतं पुत्राणाम्, तेषां प्रधानः काम्पिल्याधिपतिः समरः॥ ११॥

समरस्यापि पार-सम्पार-सदश्वास्त्रयः पुत्राः। पारात् पृथुः, पृथोः सकृतिः, सुकृतेर्विभ्राजः, ततश्चानुहः स च शुकदुहितरं कीर्त्ति नामोपयेमे॥ १२॥

अनुहाद् ब्रह्मदतः, ततो विष्वक्सेनः, तस्योदकसेनः, ततो भल्लाटः, तस्यात्मजो द्विमीढ़ः, द्विमीढ़स्य यवीनरसंज्ञः, तस्मापि धृतिमान्, ततः सत्यधृतिः, ततश्च दृढ़नेमिः, तस्माच्च सुपार्श्वः ततः, सुमतिः, ततश्य सन्नतिमान्,

---

ततस्ताभ्यां गार्ग्याः शैन्याश्च गर्गवंश्यत्वात् शिनिवंश्यत्वाच्च समाख्याताः क्षत्रिया एव केनचित् कारणेन ब्राह्मणाश्च बभूवुः॥ ९॥

अजमीढस्य कण्वादिरको वंशः बृहदिष्वादिरपरो वंशः, नीलादिरपरः क्षत्रादिश्चापरः॥ १०॥

काम्पिल्यं नगरं तस्याधिपतिः॥ ११॥

शुकस्य व्यापुत्रस्य दुहितरं, हरिवंशे तथैव दर्शनात्।

तथोक्तम्, ''पराशरकुलोत्पन्नः शुको नाम महायशाः। व्यासादरण्यां सम्भूतो विधूमोऽग्नरिव ज्वलन्। स तस्यां पितृकन्यायां पीवर्य्या जनयिष्यति। कृष्णं गौरप्रभुं शम्भुं तथा भूरिश्रुतं जयम् कन्यां कीत्तिमतीं षष्ठी योगिनीं योगमातरम्। ब्रह्मदत्तस्य जननीं महिषीमनुहस्य च॥ '' इति। वायुपुराणेऽपीदमेव वचः॥ १२॥

सन्नतिमतः, कृतोऽभूत। यं हिरण्यनाभो योगमध्यापयामास, यश्चतुर्विंशतिं प्राच्यसामगानां चकारं संहिताः॥ १३॥

कृताद्योग्रायुधः येन प्राचुर्य्येण नृपक्षयः कृतः॥ १४॥

उग्रायुधात् क्षेम्यः तस्मात् सुवीरः, तस्य नृपञ्जयः, ततो बहुरथः। इत्येते पौरवाः। अजमीढ़स्य नीलिनी, नाम पत्नी, तस्यां नीलसंज्ञः पुत्रोऽभवत्। तस्मादपि शान्तिः, शान्तेः सुशान्तिः सुशान्तेः पुरुजानुः ततश्चक्षुः, ततो हर्य्यश्वः, तस्माद् मुद्गलसृञ्जय-बृहदिषु-प्रवीर-काम्पिल्याः। पञ्चानामेतेषां विषयाणां रक्षणायालमेते मत्पुत्राः, इति पित्राभिहिताः, अतस्ते पाञ्चालाः॥ १५॥

मुद्गलाच्च मौद्गल्याः क्षत्रोपेता द्विजातयो बभूवुः। मुद्गलाद् वृद्धश्वः, वृद्धश्वाध् दिवोदासः, अहल्या च मिथुनमभूत्। शरद्वतोऽहल्यायां शतानन्दोऽभवत्। शतानन्दात् सत्यधृतिः धनुर्वेदान्तगो जज्ञे। सत्यधृतेस्तु वराप्सरसमुर्व्वशीं दृष्ट्वा रेतःस्कन्नं शरस्तम्बे पपात॥ १६॥

तच्च द्विधागतमपत्यद्वयं कुमारः कन्यका च अभवत्. मृगयामुपागतः शान्तनुर्दृष्टवा कृपया जग्राह॥ १७॥

ततः स कुमारः कृपः, कन्या चाश्वत्थाम्नो जननी कृपी द्रोणपत्यभवत्। दिवोदासस्य मित्रयुः, मित्रयोश्चयवनो नाम राजा, च्यवनात् सुदासः, ततः सौदासः सहदेवः, तस्यापि सोमकः, ततो जन्तुः शतपुत्रज्येष्ठोऽभवत्। तेषां यवीयान् पृषतः, पृषताद् द्रुपदः, तस्माद धृष्टद्युम्नः, तस्माद् धृष्टकेतुः। अजमीढ़स्यान्य ऋक्षनामा पुत्रोऽभूत। ऋक्षात् संवरणः, संवरणात् कुरुः, य इदं धर्मक्षेत्रं कुरुक्षेत्रं चकार॥ १८॥

---

यः कृतः चतुर्विंशतिं संहिताश्चकार॥ १३॥

नृपाः क्षत्रियाविशेषस्तेषां क्षयः कृतः। पञ्चानां विषचानां मदीयानां देशानाम्॥ १४-१५॥

शरद्वतो गौतमात्। स्कन्नं स्खलितम्। क्षत्रोपेता द्विजातय इति क्षत्रिया एर सन्तः केनचित् कारणेन ब्राह्मणा बभूवुरित्यर्थः॥ १६॥

कृपयेति नाम निरुक्त्यर्थम्॥ १७॥

कुरुणां स्वेनोपलक्षितं क्षेत्रं देवप्रसादाद्धर्मकारणं क्षेत्रं चकार॥ १८॥

सुधनु-जहनु-परिक्षित्-प्रमुखाः कुरोः पुत्रा बभूवुः। सुधनुषः सुहोत्रः, तस्माच्चयवनः, च्यवनात् कृतकः, ततश्चोपरिचरो वसुः। बृहद्रथ-प्रत्यग्र-कुशाम्ब-मावेल्ल-मत्स्यप्रमुखा वसोः पुत्रोः समाजायन्त। बृहद्रथात कुशाग्रः तस्मादृषभः, ततः पुष्पवान्, तस्मात् सुधन्वा, तस्य च जन्तुः। बृहद्रथाच्चान्यः शकलद्वयजन्मा जरया सन्धितो जरासन्धो नाम। तस्मात् सत्यधृतः तस्मात् सहदेवः, ततः सोमापिः ततः श्रुतश्रवाः. इत्येते मागधा भूभृतः॥१९॥

इति श्रीविष्णुपुराणे चतुर्थांशे एकोनविंशः अध्यायः॥

---

शकलद्वयरूपं जन्म यस्य, जरया राक्षस्या सन्धितो योजितः॥१९॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां चतुर्थेऽशे एकोनविंशोऽध्यायः॥

# विंशोऽध्याय:

## (कुरुवंशवर्णनम्)

पराशर उवाच

परिक्षितो जनमेजय-श्रुतसेनोग्रसेन-भीमसेनाश्चत्वार: पुत्रा:॥ १॥

जह्नोस्तु सुरथो नामात्मजो बभूव॥ २॥

तस्य विदूरथ: विदूरथस्य सार्वभौम:, सार्वभौमाञ्जयसेन:, तस्मादारावी, ततश्चायुतायु:, अयुतायोलक्रोधन:, तस्माद् देवातिथि: ततश्च ऋक्षोऽन्य:॥ ३॥

ऋक्षाद् भीमसेन:, ततश्च दिलीप:, दिलीपात् प्रतीप:, तस्यापि देवापि-शान्तनु-बाह्लीकसंज्ञास्त्रय: पुत्रा बभूवु:। देवापिर्बाल्य एवारण्यं विवेश॥ ४॥

यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति स:। शान्तिञ्चाप्नोति येनाग्र्यां कर्मणा तेन शान्तनु:॥ ५॥

तस्य शान्तनो राष्ट्रे द्वादशवर्षाणि देवो न ववर्ष॥ ६॥

ततश्चाशेषराष्ट्रविनाशमवेक्ष्यासो राजा ब्राह्मणानपृच्छत्, भो:! कस्मादस्मिन् राष्ट्रे देवो न वर्षति, को ममापराध इति। ते तमूचु:-अग्रजस्य तेऽर्हैयमवतिस्त्वया भुज्यते, परिवेत्ता त्वम्, इत्युक्त:। स पुनस्तानपृच्छत्, किं मया विधेयमिति। ते तस्मै:- यावद् देवापिर्न पतनादिभिर्दोषैरभिभूयते, तावत्तस्यार्ह राज्यं, तदलमेतेन,

---

विंशे तु कुरुपुत्राणां वंशानाह पराशर:. यत्र स्वपुरसन्तान धृतराष्ट्रादिसन्तति:॥ कुरो: पुत्राणां मध्ये सुधनुषो वंश उक्त:, इदानीं कुरुपुत्रस्यैव परिक्षितो वंश उच्यते। **'परिक्षित'** इति॥ १॥

कुरुपुत्रस्यैव जह्नोर्वंशमाह, --**'जह्नोरि'** ति॥ २॥

पूर्वोक्तात् अजमीढपुत्रादृक्षादन्य:॥ ३॥

देवापेर्वंशो नाभवदित्याशयेनाह--**'देवापिरि'**ति॥ ४॥

यं यं जन्तुं स्पृशति, स स यौवनमेति, शान्तिञ्चाप्नोति। एतावता यौवनादिरूपं शं कल्याणं तनोतीति शान्तनुनामनिरुक्तेति ज्ञेयम्॥ ५॥

प्रसङ्गात् परिवेदनदोषमाह--**'तस्ये'**त्यादिना 'न ववर्ष भगवान् पर्जन्य, इत्यन्तेन॥ ६॥

तस्मै दीयताम्, इत्युक्ते तस्य मन्त्रिप्रवरेणाश्मसारिणा तत्रारण्ये तपस्विने वेदवादविरोधवक्तार: प्रयोजिता:॥७॥

तैरप्यत्यृजुमतेर्महीपतिपुत्रस्य बुद्धिर्वेदविरोधमार्गानुसारि-ण्यक्रियत॥८॥

राजा च शान्तनुर्द्विजवचनोत्पन्नपरिवेदनशोकस्तान् ब्राह्मणानग्रणीकृत्य अग्रजराज्यप्रदानायारण्यं जगाम। तदाश्रममुपगताश्च तमवनीपतिपुत्रं देवापिमुपतस्थुं। ते ब्राह्मणा वेदवादानुबद्धानि वचांसि राज्यमग्रजेन कर्त्तव्यमित्यर्थवन्ति तमूचु:। असावपि वेदवादविरोधियुक्तिदूषितमनेकप्रकारं तानाह। ततस्ते ब्राह्मण: शान्तनुमूचु: आगच्छ भो राजन्! अलमत्रातिनिर्बन्धेन, प्रशान्त एवसावनावृष्टिदोष: पतितोऽयनमादिकाल-महितवेदवचनदूषणोच्चारणात्। पतिते चाग्रजे नैव परिवेद्यं भवति, इत्युक्त: शान्तनु: स्वपुरमागत्य राज्यमकरोत्। वेदवादविरोधवचनोच्चारणदूषिते च ज्येष्ठेऽस्मिन् भ्रातरि देवापावखिलशस्यनिष्पत्तये ववर्ष भगवान् पर्ज्जन्य:॥९॥

वाह्लीकस्य सोमदत्त: पुत्रोऽभूत्। सोमदत्तस्यापि भूरि-भूरिश्रव: शल्य-संज्ञास्त्रय: पित्रा:। शान्तनोरप्यमरनद्यां गङ्गायामुदारकीर्त्तिरशेषशास्त्रार्थविद् भीष्म: पुत्रोऽभूत्। सत्यवत्याञ्च चित्राङ्गदविचित्रवीर्य्यौ पुत्रावजनयत् शान्तनु:। चित्राङ्गदस्तु बाल एव चित्राङ्गदेन गन्धर्व्वेणाहवे विनिहत:। विचित्रवीर्य्यौऽपि काशिराजतनये अम्बिकाम्बालिके उपयेमे। तदुपभोगादिखेदाच्च यक्ष्मणा गृहीत: पञ्चत्वमगमत्। सत्यवतीनियोगाच्च मत् पुत्र: कृष्णद्वैपायनो मातुर्वचनमनतिक्रमणीयमिति विचित्रवीर्य्यक्षेत्रे धृतराष्ट्र-पाण्डू तत्प्रहितभुजिष्यायाञ्च विदुरमुतपादयामास॥१०॥

धृतराष्ट्रोऽपि दुर्य्योधन-दु:शासनादिप्रधानं पुत्रशतं (गान्धार्य्याम्) उत्पादयामास। पाण्डोरप्यरण्ये मृगशापोपहतप्रजाजननसामर्थ्यस्य धर्म्म-

---

अश्मसारिणा अश्मसारिनाम्ना स्वयमेव तपस्विवेशधारिण: प्रव्राजिता:॥७॥

अत्यृजुमते यथाश्रु तार्थग्राहिण:॥८॥

शान्तनोर्वंशमतिविस्तरेणाग्रे वक्ष्यन् प्रथमं बाह्लीकवंशमाह—'बाह्लीकस्ये'ति॥९॥

ममपराशरस्य पुत्र: मतपुत्र: मुजिष्यायां दास्याम्॥१०॥

वायुशक्रैर्युधिष्ठिर-भीमसेनार्ज्जुनाः कुन्त्यां नकुलं-सहदेवौ च अश्विभ्यां माद्रयां पञ्च पुत्राः समुत्पादिताः। तेषां द्रौपद्यां पञ्च पुत्रा बभूवुः। युधिष्ठिरात् प्रतिविन्ध्यः, भीमसेनात् सुतसोमः, श्रुतकीर्त्तिरर्ज्जुनात्, शतानीको नकुलात्, श्रुतकर्म्मा सहदेवात्। अपरे चपाण्डवानामात्मजाः, तद्यथा–यौधेयी युधिष्ठिराद् देवकं पुत्रमवाप। हिडिम्बा घटोत्कचं भीमसेनात् पुत्रमवाप। काशी च भीमसेनादेव सर्वत्रगं पुत्रमवाप। सहदेवाच्च विजया सुहोत्रं नाम पुत्रं प्रासवती। करेणुमयाञ्च नकुलोऽपि निरमित्रमजीजनत्। अर्ज्जुनस्याप्युलूप्यां नागकन्यायामिरावान् नाम पुत्रोऽभूत। मणिपुरपतिपुत्र्यांञ्च पुत्रिकाधर्म्मेण बभ्रु वाहनं नाम पुत्रमाजीजनत्॥ ११॥

सुभद्रायाञ्चार्भकत्वेऽपि योऽसावतिबलपराक्रमसमस्ता-रातिरथविजेता सोऽभिमन्युरजायत। अभिमन्योरुत्तरायां परिक्षीणेषु कुरुष्वश्वत्थामप्रयुक्तब्रह्मास्त्रेण गर्भ एव भस्मीकृतो भगवतः सकलसुरासुरवन्दितचरणयुगलस्यात्मेच्छा-कारणमानुषरूप-धारिणोऽनुभावात् पुनर्ज्जीवितमवाप्य परिक्षित् जज्ञे॥ १२॥

योऽयं साम्प्रतमेतद् भूमण्डलमखण्डितायति धर्म्मेण पालयतीति॥ १३॥

इति श्रीविष्णुपुराणे चतुर्थांशे विंशः अध्यायः॥

---

मणिपुरं नाम नगरं तत्पतेः पुत्र्यां पुत्रिकाधर्मेणं ''अस्या यो जायते पुत्रः स मे पुत्रो भवेदिति'' कन्यादातुर्वाबन्धेन॥ ११॥

परिक्षीणेषु कुरुष्विति भगवतस्तद्रक्षणे परिक्षिन्नामनिरुक्तौ च हेतुः। आत्मेच्छामात्रकारणेन मानुषरूपं धर्त्तुं शीलं यस्य तस्य, पुनर्जीवितमवाप्य परिक्षित् जज्ञे॥ १२॥

साम्प्रतमित्यनेन परिक्षिद्राज्यकाल एव पराशरमैत्रेयसंवाद इति गम्यते। अखण्डिता आयतिः प्रभावो यत्र तद्यथा स्यादिति क्रियाविशेषणम्। 'स्यात् प्रभावेऽपि आयति' रित्यमरः। आयतिरुत्तरफलं धनादि सम्पत् सा अखण्डिता यत्र तद् यथा स्यादिति वा॥ १३॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां चतुर्थेऽशे विंशोऽध्यायः॥

# एकोविंशोऽध्याय:

## (भाविनृपतीनां विवरणम्)

पराशर उवाच

अत: परं भविष्यानहं भूमिपालान् कीर्त्तयिष्ये। योऽयं साम्प्रतमवनीपति:, तस्यापि जनमेजयश्रुतसेनोग्रसेन-भीमसेना: पुत्राश्चत्वारो भविष्यन्ति॥ १॥

तस्यापर: शतानीको भविष्यति। योऽसौ याज्ञवल्क्याद् वेदमधीत्य कृपादस्त्राण्यवाप्य विषयविरक्तवृतिश्च शौनकोपदेशात्मविज्ञानप्रवण: परं निर्वाणमवाप्स्यति॥ २॥

शतानीकादश्वमेधदत्तो भविता, तस्मादप्याधिसीमकृष्ण: अधिसीमकृष्णाद् निचक्षि:, यो गङ्गयापहृते हस्तिनापुरे कौशाम्ब्यां निवत्स्यति। तस्याप्युष्ण: पित्रो भविता। उष्णाचित्ररथ:, तत: शुचिरथ:, तस्माद् वृष्णिमान्, तत: सुषेण:, तस्मादपि सुनीथ:, सुनीथाद्दच:, ततो नृचक्षु:, तस्यापि सुखाबल:, तस्मात् परिप्लव:, ततश्च सुनय:, ततो मेधावी, मेधाविनो नृपञ्जय:, ततो मृदु: तस्मात् तिग्म:, तिग्माद् बृहद्रथ:, तस्माद् वसुदान:, ततोऽप्यपर: शतानीक:॥ ३॥

तस्माच्च उदयन:, उदयनादहीनर:, ततश्च खण्डपाणि:, ततो निरमित्र: तस्माच्च क्षेमक:। तत्रायं श्लोक:।

ब्रह्मक्षत्रस्य यो योनिर्वंशो राजर्षिसत्कृत:।
क्षेमकं प्राप्य राजानं स संस्थां प्राप्स्यते कलौ॥ ४॥

इति श्रीविष्णुपुराणे चतुर्थांशे एकविंशोऽध्याय: अध्याय:॥

---

एकविंशे पुरोर्वंशो भविष्य उपवर्ण्यते। क्षेमकं प्राप्य य: संस्थां कलावुपगमिष्यति। कुरुपुत्र-परिक्षित इवास्यापि जनमेजयादिसंज्ञा एव चत्वार: पुत्रा:॥ १॥

तस्य जनमेजयस्य। आत्मविज्ञानप्रवणस्तत्पर: ॥ २॥

पूर्वोक्ताज्जनमेजयपुत्रादपर: शतानीक:॥ ३॥

ब्रह्मण: ब्राह्मणस्य क्षत्रस्य क्षत्रियस्य च योनि: कारणं क्षत्रियैरेव कैश्चित्तपोविशेषात् ब्राह्मण्यं लब्धमिति पूर्वं तथोक्तत्वात्। संस्थां समाप्तिम्॥ ४॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां चतुर्थेऽशे एकाविंशोऽध्याय:

# द्वाविंशोऽध्यायः

## (भावि-कालीनेक्ष्वाकुवंशीय-नृपाणां वर्णनम्)

पराशर उवाच

अतश्चेक्ष्वाकवो भविष्याः पार्थिवाः कथ्यन्ते। बृहद्बलस्य पुत्रो बृहत्क्षणः॥ १॥

तस्माद् गुरुक्षेपः, ततो वत्सः, वत्साद् वत्सव्यूहः, ततः प्रतिव्योमः, तस्यापि दिवाकरः, तस्मात् सहदेवः॥ २॥

ततो बृहदश्वः, तत्सूनुर्भानुरथः, तस्यापि सुप्रतीकः, ततो मरुदेवः, मरुदेवात् सुनक्षत्रः तस्मात् किन्नरः, किन्नरादन्तरिक्षः, तस्मात् सुवर्णः ततश्चामित्रजित् ततश्च बृहद्राजः, तस्यापि धर्मो, धर्मिणः कृतञ्जयः, कृतञ्जयाद् रणञ्जयः, रणञ्जयात् सञ्जयः, तस्मात् शाक्यः, शाक्यात् शुद्धोदनः, तस्माद् राहुलः, ततः प्रसेनजित्, ततश्च क्षुद्रकः, ततः कुण्डकः, तस्मादपि सुरथः, ततश्च सुमित्रोऽन्यः, इत्येते चेक्ष्वाकवो बृहदबलान्वयाः। अत्रानुवंशश्लोकः.

इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यन्ति।
यतस्तं प्राप्य राजानं स संस्थां प्राप्स्यते कलौ॥ ३॥

इति श्रीविष्णुपुराणे चतुर्थांशे द्वाविंशः अध्यायः॥

---

सोमवंश-भविष्याणां राज्ञामत्र प्रसङ्गतः। द्वाविंशे सूर्यवंश्यानां भविष्यो वंश उच्यते। बृहद्बलस्येति—चतुर्थेऽध्याये अर्जुनतनयेनाभिमन्युना भारते युद्धे क्षयमनीयतेत्यत्र च दर्सितस्तस्येत्यर्थः॥ १॥

यत्र तत्र नाम्नां वैलक्षण्यं दृश्यते, तत्र कल्पयुगादिभेदेन व्यवस्थापनीयम्॥ २॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां चतुर्थांशे द्वाविंशऽध्यायः॥

# त्रयोविंशोऽध्यायः

## (मगधवंशवर्णनम्)

**पराशर उवाच**

**मागधानां बार्हद्रथानां भविष्याणामनुक्रमं कथयामि◆ ॥१॥**

**अत्र हि वंशे महाबला जरासन्धप्रधाना बभूवुः◆ ॥२॥**

**जरासन्धसुतान् सहदेवात् सोमापिः, तस्मात् श्रुतवान्, तस्याप्युतायुः, ततश्च निरमित्रः तत्त नयः सुक्षत्रः, तस्मादपि बृहत्कर्मा, ततश्च सेनजित्, तस्माच्च श्रुतञ्जय, ततो विप्रः, तस्य च पुत्रः शुचिनामा भविष्यति। तस्यापि क्षेम्य, ततश्च सुव्रताद् धर्मः, ततः, सुश्रमः, ततो दृढसेनः, ततः सुमतिः, तस्मात् सुबलः, तस्य सुनीतो भविता। ततः सत्यजित् सत्यजितो विश्वजित्, तस्यापि रिपुञ्जयः पुत्रः इत्येते बार्हद्रथा भूपतयो वर्षसहस्त्रमेकं भविष्यन्ति॥३॥**

**इति श्रीविष्णुपुराणे चतुर्थांशे त्रयोविंशः अध्यायः॥**

---

बार्हद्ररथानां वंशेऽपि भविष्यानवदन् नृपान्। अन्त्यो रिपुञ्जयो यत्र तदन्ते प्राथवत् कलिः। सोम-सूर्यवंशयोर्भविष्यान् नृपानुक्त्वा सोमवंशपल्लवभूतानां बार्हद्रथानां भविष्यानाह— 'मागधाना' मिति। तत्र च सङ्गत्यर्थं कीर्त्तितानामपि जरासन्धादीनामनुवादं कुर्वन्नयुतायुःप्रभृतीन् भविष्यानाह— 'अत्र ही' त्यादिना यावत्समाप्ति॥१-२॥

बार्हद्रथा बृहदरथवंशोदभवाः॥३॥

◆ बृहद्रथस्य अपत्यानि पुमांसः बार्हद्रथाः तेषाम्। बृहद्रथशब्दपत्यार्थेष्णप्रत्ययः।

◆ जरासाधः जरया तदाख्यया राक्षस्या सन्धा सन्धानं भागद्रयस्य मेलनं यत्र सः। वृत्तमेतद् वर्णितमेदाधस्ताद्। स एव प्रधानं येषां ते जरासन्धप्रधानाः।

**इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां चतुर्थांशे त्रयोविंशऽध्यायः॥**

# चतुर्विंशोऽध्यायः

## (कलिकालस्थित-नृपाणां कलिधर्म्मस्य च वर्णनम्। राजवंशवर्णनोपसंहारश्च।)

**पराशर उवाच**

**योऽयं रिपुञ्जयो नाम बार्हद्रथोऽन्त्यः, तस्य सुनिको नामामात्यो भविष्यति॥ १॥**

**स चैनं स्वामिनं हत्वा स्वपुत्रं प्रद्योतनामनमभिषेक्ष्यति। तस्यापि पालकनामा पुत्रो भविता। ततश्च विशाखयूपः, तत्पुत्रो, जनकः, तस्य च नन्दिवर्द्धन, इत्येते अष्टत्रिंशदुत्तरमब्दशतं पञ्चप्रद्योताः पृथिवीं भोक्ष्यन्ति॥ २॥**

**ततश्च शिशुनागः, तत्पुत्रश्च काकवर्णो भविता। तत्पुत्रः क्षेमधर्म्मा, तस्यापि क्षत्रौजाः, तत्पुत्रो विद्मसारः, ततश्चाजातशत्रुः, तस्माच्च दर्भकः, दतर्भकाचोदयाश्वः, तस्मादपि नन्दिवर्द्धनः, ततो महानन्दीस, इत्येते शैशुनागा दश भूमिपालस्त्रीणि वर्षशतानि द्विषष्ट्यधिकानि भविष्यन्ति॥ ३॥**

**महानन्दिसुतः शूद्रागर्भोद्भवोऽतिलुब्धो महापद्मानन्दः परशुराम इवापरोऽखिलक्षत्रान्तकारी भविता॥ ४॥**

---

चुतर्विंशे कलेर्धर्मसंख्ये क्षुद्रास्तथा नृपाः। भूमेर्गीतावशिक्षा च वैराग्याय निरूपिताः। इदानीन्तु तद्वंश्यानेव भूभुजः कालेनाल्पबलपौरुषान् मलीमसान् दस्युप्रायांश्चाह—'योऽयमि' त्यादिना 'सर्वे पृथिव्यां भूभुजो भविष्यन्ती' त्यन्तेन॥ १॥

प्रद्योताः प्रद्योतनामानः. अत्र च राज्ञां तद्राज्यानां वर्षसंख्या आयुराद्यल्पत्व प्रदर्शनं वैराग्यार्थम् ॥ २॥

शैशुनागाः शिशुनागापत्यानि॥ ३॥

'महापद्म'इति। 'कोटिशतगुणं पद्मं पद्मशतगुणं खर्वं तद्दशगुणं पुनः निखर्वं, तद्दशगुणं महापद्ममिहेष्यते' इत्यक्तो स्तावत्संख्यकस्य सैन्यस्य धनस्य वा स्वामी महापद्मानन्दः॥ ४॥

ततः प्रभृति शूद्रा भूमिपाल भविष्यन्ति, स चैकच्छत्रामनुल्लङ्घितशासनो महापद्मः पृथिवीं भोक्ष्यति॥ ५॥

तस्याप्यष्टौ सुताः सुमात्याद्या भवितारः। तस्य च महापद्मस्यानु पृथिवीं भौक्ष्यन्ति। महापद्मस्ततत्पुत्राश्च एकं वर्षशतमवनीपतयो भविष्यन्ति। नवैव तान् नन्दान् कौटिल्यो ब्राह्मणः समुद्धरिष्यति॥ ६॥

तेषामभावे मौर्याश्च पृथिवीं भोक्ष्यन्ति। कौटिल्य एव चन्द्रगुप्तं राज्येऽभिषेक्ष्यति॥ ७॥

तस्यापि पुत्रो विन्दुसारो भविष्यति। तस्यापि अशोकवर्द्धनः, ततः सुयशाः, ततो दशरथः, ततः सङ्गतः ततः शालिशुकः, तस्मात् सोमशर्मा, तस्मात् शतधन्वा, तस्याप्यनु बृहद्रथनामा भविता। एवं मौर्या दश भूपतयो भविष्यन्ति अब्दशतं सप्तत्रिंशदुत्तरम्। तेषामन्ते पृथिवीं शुङ्गा भोक्ष्यन्ति॥ ८॥

ततः पुष्पमित्रः सेनापतिः स्वामिनं हत्वा राज्यं करिष्यति॥ ९॥

अस्यात्मजोऽग्निमित्रः, तस्मात् युज्येष्ठः, ततो वसुमित्रः, तस्मादप्यार्द्रकः, ततः पुलिन्दकः, ततो घोषवसुः, तस्मादपि वज्रमित्रः, ततो भागवतः॥ १०॥

तस्माद् देवभूतिः, इत्येते दश शुङ्गा द्वादशोत्तरं वर्षशतं पृथिवीं भोक्ष्यन्ति। ततः कण्वानेषा भूर्यास्यति॥ ११॥

---

एकमेव छत्रं यस्यां ताम्॥ ५॥

नन्दान् नन्दं ततपुत्रांश्च कौटिल्यः कौटिल्यप्रधानः वात्स्यायन-विष्णुगुप्तादिपर्य्यायश्चाणक्यः समुद्धरिष्यति उन्मूलयिष्यति॥ ६॥

चन्द्रगुप्तं नन्दस्यैव पत्न्यन्तरस्य मुरासंज्ञस्य पुत्रं मौर्य्याणां प्रथमम्॥ ७॥

शुङ्गाः शुङ्गसंज्ञाः॥ ८॥

तानेवाह-'पुष्पमित्र' इति। पुष्पमित्रः शुङ्गानां प्रथमः॥ ९॥

अनमित्रादयो नव, एवं शुङ्गा दश॥ १०॥

कण्वान् कण्वसंज्ञनृपान् भूः यास्यति। ततः कण्वानेषा भूर्यास्यति॥ ११॥

देवभूतिस्तु शुङ्गराजानं व्यसनिनं तस्यैवामत्य: कण्वो वसुदेवनामा निपात्य स्वयमवनीं भोक्ता:। तत् पुत्रो भूमिमित्र: तस्यापि नारायण:, नारायणस्य सुशर्मा, एते काण्वायनाश्चत्वार: पञ्चचत्वारिंशद्वर्षाणि भूपतयो भविष्यन्ति।

सुशर्माणं कण्वञ्च भृत्यो बलात् शिप्रकनामा हत्वा अन्ध्रजातीयो वसुधां भोक्ष्यति। ततश्च कृष्णनामा तद्भ्राता भूपतिर्भावी। तस्य श्रीकान्तकर्णि:, तस्यापि पुर्णोत्सङ्ग:, तत्पुत्रश्च शातकर्णि:, तस्माच्च लम्बोदर:, तस्माद् द्विविलक:, ततो मेघस्वाति:, तत: पटुमान, ततश्च अरिष्टकर्मा, ततो हाल: हालात् पुत्तलक:, तत: प्रविल्लसेन:, तत: सुन्दर: शात कर्णी, तस्माच्चकोर: शातकर्णी॥ १२॥

तत: शिवस्वाति:, ततश्च गोमतीपुत्र:, तत्पुत्र: पुलिमान्, तस्यापि शातकर्णी शिवश्री:, तत: शिवस्कन्ध:, ततो यज्ञश्री:, ततो विजय: ततश्चन्द्रश्री:, तस्यापि पुलोमाचि, एवमेते त्रिंशच्चत्वार्यब्दशतानि षट्पञ्चाशदधिकानि पृथिवीं भोक्ष्यन्ति अन्ध्रभृत्या:।

सप्ताभीरा दश गर्द्दभिला भविष्यन्ति॥ १३॥

तत: षोडश शका भूभुजो भवितार:। ततश्च अष्टौ यवना: चतुर्द्दश तुखारा:, मुण्डाश्च त्रयोदश मौना:, एते, पृथिवीं त्रयोदश वर्षशतानि नवनवत्यधिकनि भोक्ष्यन्ति॥ १४॥

ततश्च पौरा एकादश भूपतयोऽष्टशतानि त्रीणि महीं भोक्ष्यन्ति॥ १५॥

---

कण्वान् कथं भूर्यास्यति तत्राह—'देवभूतिस्त्वि' ति। शातकर्णीत्युपनाम॥ १२॥

एते तु अन्ध्रभृत्यास्त्रिंशदित्यन्वय:॥ १३॥

आभीराद्या मौनान्ता एकोनाशीती राजान एकोनचतुर्दश-शतवर्षाणि पृथिवीं भोक्ष्यन्ति॥ १४॥

ततश्च पौरास्त्रीण्यब्दशतानि भोक्ष्यन्ति। क्वचित् पौरा इत्यत्र पुनर्मौना इति पाठ:। तदा आभीरादिमध्यगणितानामपि मौनानां व्यतिरेकेण पूर्वराज्यवर्षसंख्या, इयन्तु तत: पृथगेव मौनानां राज्यवर्षशतत्रयसंख्येति ज्ञेयम्॥ १५॥

तेषूच्छन्नेषु कैलकिला यवना भूपतयो भविष्यन्ति। मूर्द्धाभिषिक्तस्तेषां विन्ध्यशक्तिः॥ १६॥

ततः पुरञ्जयः, ततो रामचन्द्रः, तस्माद् धर्म्मः, धर्म्माद् वराङ्गः, कृतनन्दनः, सुषिनन्दिः, नन्दियशाः, शिशकप्रवारी च। एते वर्षशतं षड्वर्षाणि च भविष्यन्ति। ततस्तपुत्रास्योदशैव, वाह्लीकाश्च त्रयः ततः पुष्पमित्रपढ़ मित्र-पद्ममित्रास्त्रयः, दश मेकलाश्च, सप्तकोशलायान्तु नवैव भूपतयो भविष्यन्ति। नैषावास्तु तावन्त एव भूपतयो भविष्यन्ति॥ १७॥

मागधायां विश्वस्फटिसंज्ञोऽन्यान् वर्णान् करिष्यति कैवर्त्त-कटु पुलिन्द-ब्राह्मण्यान् राज्ये स्थापयिष्यन्नुतसाद्याखिला-क्षत्रजातिम्। नव नागाः पद्मावत्यां कान्तिपुर्यां मथुरायामनगङ्गाप्रयागं मागधा गुप्ताश्च भोक्ष्यन्ति। कोशलोड्र (पुराड्क) ताम्रलिप्तान् समुद्रतटपुरीश्च देवरक्षितो रक्षिष्यति। कलिङ्गमार्हिषिमाहेन्द्रभीमा गुहां भोक्ष्यन्ति। नैषाद-नैनीषिक-कालतोयान् जनपदान् मणिधारवंशा भोक्ष्यन्ति। स्त्रीराज्य- (त्रैराज्य) मूषिकजनपदान् कनकाह्वया भोक्ष्यन्ति। सौराष्ट्रवन्तिशूद्रानर्वुदमरुभूमिविषांश्च व्रात्या द्विजाभीरशूद्राद्या भोक्ष्यन्ति। सिन्धुतटदार्वीकोर्वी-चन्द्रभाग-काश्मीरविषयान् व्रात्या म्लेच्छादयः शूद्राः भोक्ष्यन्ति।

एते च तुल्यकालाः सर्वे पृथिव्यां भूभृतो भविष्यन्ति। अल्पप्रासादा बृहत्कोपाः सर्वकालमनृताधर्मरुचयः स्त्री-बाल-गोवधकर्त्तारः परस्वादनरुचयोऽल्पसारा उदितास्तमितप्रायाः स्वल्पायुषो महेच्छा अत्यल्पधर्माश्च भविष्यन्ति♦ ॥ १८॥

---

किलकिलानगरी तत्र भवाः कैलिकलाः, तेषां मूर्धाभिषिक्तो मुख्यः। विन्ध्यशिक्तर्मूधाभिषिक्त इति पाठे क्षत्रियमुख्य इत्यर्थः॥ १६॥

क्षत्रजातिं क्षत्रजां सङ्करजातिम् उग्रसूतादिरूपाम्। एते ततस्तत्पुत्रा इत्याकभ्यशूद्रा इत्यन्तास्तुल्यकालाः खण्डमण्डलपतयोऽल्पप्रसादत्वा दिविशिष्टा भूभृतो भविष्यन्तीत्यन्वयः॥ १८॥

♦ तुल्यः कालः येषां ते तुल्यकालाः समानकाला एक-कालीना इत्यर्थः। उदितास्तमितप्रायाः उदिता अनन्तरमेख विना विलम्बम् अस्तमिताः तत्प्रायाः उत्पन्नविनष्टप्राया इत्यर्थः।

तैश्च विमिश्रा जनपदास्तच्छीलवर्त्तिनो राजाश्रयशुष्मिणो म्लेच्छाश्चार्याश्च विपर्ययेण वर्त्तमानः प्रजाः क्षपयिष्यन्ति॥ १९॥

ततश्चानुदिनमल्पाल्पह्रासाद् व्यवच्छेदाद् धमार्थयोर्जगतः संक्षेपो भविष्यति॥ २०॥

ततश्चार्थ एवाभिजनहेतुः धनमेवाशेषधर्म्महेतुः, अभिरुचिरेव दाम्पत्य सम्बन्धहेतुः, अनृतमेव व्यावहारजयहेतुः, स्त्रीत्वमेवोपभोगहेतुः रत्नताम्रभागितैव पृथिवीहेतुः, ब्रह्मसूत्रमेव विप्रत्वहेतुः, लिङ्गधारणमेवाश्रमहेतुः, अन्याय एव वृत्तिहेतुः॥ २१-२२॥

दौर्बल्यमेव अवृत्तिहेतुः भयगर्भोचारणमेव पाण्डित्यहेतुः॥ २३॥

दानमेव धर्म्महेतुः, आढ्यतैव साधुत्वहेतुः॥ २४॥

स्नानमेव प्रसाधनहेतुः, स्वीकरणं विवाहहेतुः, सद्वेशधार्य्येव पात्रं दूरायतनोदकमेव तीर्थमित्वेवमनेकदोषोत्तरे भूमण्डले सर्ववर्णेष्वेव यो यो बलवान् स स भूपतिर्भविष्यति। एवञ्चातिलुब्धकरभारसहाः शैलानामन्तरा द्रोणीः प्रजाः संश्रयिष्यन्ति। मधुशाकमूलफलपत्रपुष्पाहसाराश्च भविष्यन्ति, तरुवल्कालचीरप्रावरणाश्चातिबहुप्रजाः शीतवातातपवर्षसहा भविष्यन्ति। न स

---

राजाश्रयेण शुष्मिणो बलिनः, न तु धर्मेण। म्लेच्छाश्चार्याश्च विपर्ययेण मलेच्छा मध्ये आर्याश्चान्ते इत्येतद्रूपेण॥ १९॥

जगति धर्मस्यानुदिं ह्रासादर्थस्य च व्यवच्छेदात् संक्षयो भविष्यति॥ २०॥

रत्नताम्रभागिता रत्नभूतताम्रादीमत्त्वमेव पृथिवीहेतुरुत्तम भूमित्वे कारणं, न तु पुण्यतीर्थादिमत्त्वम् उन्नताम्बुमत्तेति पाठे उन्नते गिरितटादावम्बुमत्त्वम्॥ २१॥

वृत्तिः जीविका॥ २२॥

भयगर्भोचारणं भयोपदर्शनपूर्वकमुचारणम्॥ २३॥

दानमेव धर्महेतुः, न तु यागादिः। आद्यतैर साधुत्वहेतुः॥ २४॥

स्वीकरणमेव विवाहहेतुः, न तु स्मृत्याद्युक्तविधिप्रकारः। सद्वेशधारी दाम्भिकः। कलियुगे क्षयमशेषं याति जनः क्षयमुपैष्यतीत्यन्वयः॥ २५॥

कश्चित्ः त्रयोविंशतिवर्षाणि जीविष्यति। अनवरतं चात्र कलियुगे क्षयमायात्माखिलनेवैष जनः क्षयमुपैष्यति॥ २५॥

श्रौतस्मार्त्तधर्मं विप्लवमत्यन्तमुपगते क्षीणप्राये च कलावशेषजगत्स्त्रष्टुश्चराचरगुरोदिमयस्यान्तमयस्य सर्वमयस्य ब्रह्ममयास्यात्मस्वरूपिणो भगवतो वासुदेवस्यांशः सम्भलग्रामप्रधान-ब्राह्मणविष्णुयशसो गृहे अष्टगुणर्द्धि-समन्वितः, कल्किरूपी जगत्यत्रावतीर्य सकलम्लेच्छदस्यु-दुष्टाचरणचेतसामशेषाणामपरिच्छिन्नमहात्म्य-शक्तिः क्षयं करिष्यति॥ २६

स्वधर्म्मेषु चाखिलं जगत् संस्थापयिष्यतीति। अनन्तरञ्चाशेषकलेरवसाने प्रबुद्धानां तेषां मेव जनपदानाममलस्फटिकविशुद्धमतयो भविष्यन्ति॥ २७॥

तेषाञ्च बीजभूतानामशेषमनुष्याणां परिणतानामपि तत् कालकृतानामपत्यप्रसूतिर्भविष्यति॥ २८॥

तानि च तदपत्यानि कृतयुगधर्म्मानुसारीणि भविष्यन्तीति॥ २९॥

यदा चन्द्रश्च सूर्यश्च तथा तिष्य-बृहस्पती।
एकराशौ समेष्यन्ति भविष्यति तदा कृतम्॥ ३०॥

---

एवं कलेरन्ते कल्क्यवतारेण सत्ययुगप्रवृत्तिमाह—'**श्रौतस्मार्त्ते**' त्यादिना आदिमयस्य सर्वकारणरूपस्यान्तमयस्य निषेधावधिभूतस्य अत एव सर्वमयस्य निखिलकार्य्यमयस्य। ततो विकारादिप्राप्तावाह—ब्रह्ममयस्य अष्टगुणार्द्धिसमन्वितः। 'अणिमा लघिमा प्राप्तिः प्राकाम्यं वशिता तथा। अत्र कामावसायित्वं महिमेति गुणाष्टकम्'' इति प्रोक्त–गुणयुक्तः। अन्ये त्वन्यथा गुणाष्टकं वदन्ति। ''**अणिमा महिमा चैव लघिमा गरिमा तथा। ईशित्वञ्च वशित्वञ्च प्राकाम्यं काममेव चे**'' ति॥ २६॥

प्रबुद्धानामित्यनेन सत्त्वगुणोद्रेको दर्शितः। तेन कालेन कृतानामाहितशक्तीनामुत्यर्थः॥ २७॥

'तत कालकृते' ति पाठे प्रसूतेर्विशेषणम्॥ २८॥

कालस्वभावादेव कृतयुगधर्मानुसारीणि॥ २९॥

एतत् सर्वं कस्मिन् योगे भविष्यतीत्यपेक्षायामाह। '**अत्रोच्यते** ' इति। तिष्यः पुष्यः, चन्द्रार्कबृहस्पतीनां तिष्ययोगे कृतं सत्ययुगं भविष्यति। यद्यपि ति द्वादशाब्दं कर्कटस्थे

अतीता वर्त्तमानाश्च तथैवानागताश्च ये।
एते वंशेषु भूपाला: कथिता मुनिसत्तम॥ ३१॥
यावत् परीक्षितो जन्म यावन्नन्दाभिषेचनम्।
एतद्वर्षसहस्त्रन्तु ज्ञेयं पञ्चदशोत्तरम्॥ ३२॥
सप्तर्षीणाञ्च यौ पूर्वौ दृश्येते उदितौ दिवि।
तयोस्तु मध्यनक्षत्रं दृश्यते यत् समं निशि।
तेन सप्तर्षयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम्॥ ३३॥
ते तु पारीक्षिते काले मघास्वासन् द्विजोत्तम।
तदा प्रवृत्तश्च कलिर्द्वादशाब्दाशतात्मक:॥ ३४॥
यदैव भगवद्विष्णोरंशो यातो दिवं द्विज।
वसुदेवकुलोद्भूतस्तदैव कलिरागत:॥ ३५॥

---

बृहस्पतौ अमावास्यायां त्रयाणं पुष्यर्क्षेण योग: स्यात्, तथाप्येकराशौ समेष्यन्तीति सहप्रवेसोक्तेर्नातिप्रसङ्ग:॥ ३०॥

उक्तं राजवंशं निगमयति **'अतीतं'** इति। अनागता भूपालाश्च उक्ता:॥ ३१॥

अनागत: क्षत्रियवंश कियत् कालं स्थास्यतीत्यपेक्षायामाह—**'यावदि'** ति पञ्चदशोत्तरसहस्त्रवर्षपर्य्यन्तं शुद्ध: क्षत्रियवंश: स्थास्यति। अनन्तरं नन्देन सर्वक्षत्रियनाशादित्यर्थ:॥ ३२॥

कले: प्रवृत्ति वृद्धिश्च वक्तुं तत्काललक्षणमाह—**'सप्तर्षीणा'**मिति। प्रागग्रं शकटाकारं तारासप्तकं सप्तर्षिमण्डल, तत्र पूर्वत ईशाकारेऽग्रमध्यमूलेषु मरीचिसभार्यवशिष्ठाङ्गिरस:, तत: पश्चिमे खट्वाकारे ताराचतुष्के ऐशानाग्नेय-नैर्ऋत-वायव्य-कोणष्वत्रि-पुलस्त्य-पुलह ऋतवो यथाक्रमं तत्र यौ पूर्वौ प्रथमोदितौ पुलहऋतुसंज्ञौ दृश्यते, तयोस्तत् पूर्वयोश्च मध्ये समं दक्षिणोत्तररेखायां समदेशावस्थितं यदश्विन्यादिनक्षत्रेष्वन्यतमनक्षत्रं दृश्येते, तेन तथैव युक्ता नृणामब्दशतं तिष्ठति॥ ३३॥

काललक्षमुक्त्वा कलिप्रवृत्तिमाह—**'त'** इति। तदा सन्ध्यासन्ध्यांशाभ्यां सह द्वादशाब्दशतात्मक: कलि: पूर्वसन्ध्या पूर्वं सन्ध्यारूपेण प्रवृत्तोऽपि सन्ध्या: रूपमतिक्रम्य स्वेन रूपेण प्रवृत: प्रकर्षेण वृत्त इत्यर्थ:॥ ३४॥

एते स्पष्टयति, यदैवेति द्वाभ्याम्॥ ३५॥

यावत् स पादपद्माभ्यां पस्पर्शेमां वसुन्धराम्।
तावत् पृथ्वीपरिष्वङ्गे समर्थो नाभवत् कलि:॥ ३६॥
गते सनातनस्यांसे विष्णोस्तत्र भुवो दिवम्।
तत्याज सानुजो राज्यं धर्मपुत्रो युधिष्ठिर:॥ ३७॥
विपरीतानि दृष्ट्वा च निमित्तानि स पाण्डव:।
याते कृष्णे चकाराथ सोऽभिषेकं परीक्षिते॥ ३८॥
प्रयास्यन्ति यदा ते च पूर्वाषाढां महर्षय:।
तदा नन्दात् प्रभृत्येष कलिवृद्धिं गमिष्यति॥ ३९॥
यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि।
प्रतिपन्नं कलियुगं तस्य संख्यां निबोध मे॥ ४०॥
त्रीणि लक्षाणि वर्षाणां द्विज! मानुषसंख्यया।
षष्टिश्चैव सहस्राणि भविष्यत्येष वै कलि:॥ ४१॥
शतानि तानि दिव्यानि सप्त पञ्च च संख्यया।
नि:शेषेण ततस्तस्मिन् भविष्यति पुन: कृतम्॥ ४२॥
ब्राह्मण: क्षत्रिय वैश्या: शूद्राश्च द्विजसत्तम।
युगे युगे महात्मान: समतीता: सहस्रश:॥ ४३॥

---

पृथ्वीपरिष्वङ्गे भूमे: परिभवे समर्थ इत्युक्ते: पूर्वमपि कलि: प्रविष्ट इति गम्यते॥ ३६॥

साक्षात् कलिप्रवेशे तु युधिष्ठिरादिभि: स्वराज्यं परित्यक्तमित्याह— **'गत'** इति द्वाभ्याम्॥ ३७॥

पूर्वोक्तमेव कलिप्रवेशकालमनूद्य तत संख्यामाह— **'यस्मिन्न्'** तित्रिभि:॥ ४०॥

त्रीणीति सन्ध्या—सन्ध्यांशाभ्यां विनेति ज्ञेयम्॥ ४१॥

दिव्यानि दिव्यसंख्यया संख्यातानि सप्तपञ्चसंख्ययाद्वादशाब्दशतानीत्यर्थ:। नि:शेषेण तस्मिन् गते सतीति शेष:। कृतं कृतयुगम्॥ ४२॥

ब्राह्मणादिवंश: क्षत्रियवंशश्च सकल: किमिति नौक्त इत्यत: आह— **'ब्राह्मणा'** इति द्वाभ्याम्॥ ४३॥

बहुत्वान्नामधेयानां परिसंख्या कुले कुले।
पुनरुक्तबहुत्वात्तु न मया परिकीर्तिता॥४४॥
देवापिः पौरवो राजा मरुश्चेक्ष्वाकुवंशजः।
महायोगवलोपेतौ कलापग्रामसंश्रयौ॥४५॥
कृते युग इहागत्य क्षत्रप्रावर्त्तकौ हि तौ।
भविष्यतो मनोर्वंशे बीजभूतौ व्यवस्थितौ॥४६॥
एतेन क्रमयोगेन मनुपुत्रैर्वसुन्धरा।
कृतत्रेतादिसंज्ञानि युगानि त्रीणि भुज्यते॥४७॥
कलौ तु बीजभूतास्ते केचित् तिष्ठन्ति भूतले।
यथैव देवापि-मरू साम्प्रतं समवस्थितौ॥४८॥
एष तूद्देशतो वंशस्तवोक्तो भूभुजां मया।
निखिलो गदितुं शक्यो नैव जन्मशतैरपि॥४९॥
एते चान्ये च भूपाला यैरत्र क्षितिमण्डले।
कृतं ममत्व मोहान्धैर्नित्येऽनित्यकलेवरैः॥५०॥
कथं ममेयमचला मत् पुत्रस्य कथं मही।
मद्वंशस्येति चिन्तार्त्ता जग्मुन्तमिमे नृपाः॥५१॥

---

कुले कुले अवान्तरकुलेषु नामधेयानां परिसंख्या बहुत्वात् समाननामतया पौनरुक्त्याच्च नोक्ता॥४४॥

क्षत्रस्य प्रवृर्त्तकौ भविष्यतः, यतो मनोर्वंशे सोमसूर्यवंशरूप बीजभूतौ व्यवस्थितौ।।४६

कलेः सन्ध्यायामेव क्षत्रियसत्त्वात् त्रीणि युगानि भुज्यत इत्युक्तम्॥४७॥

देवापि-मरुवदन्यत्रापि कलौ ब्राह्मणादीनां बीजभूतानां स्थितिमाह—'कलौ त्विट ति॥४८॥

वंशकथनस्य वैराग्ये तात्पर्य्यमाह—'एते चे'ति। भूमण्डले नित्ये कल्पान्तस्थायिनि तदपेक्षया अनित्यानि अस्थिराणि कलेवराणि येषां तथाभूतैरपि ममत्वं कृतम्॥५०॥

मोहान्धत्वमेवाह—'**कथं ममेय**' मिति द्वाभ्याम्॥५१॥

तेभ्यः पूर्वतराश्चान्ये तेभ्यस्तेभ्यस्तथापरे।
भविष्याश्चैव यास्यन्ति तेषामन्ये च येऽप्यनु॥५२॥
विलोक्यात्मजयोद्योग-यात्राव्यग्रान् नराधिपान्।
पुष्पप्रहासैः शरदि हसतीव वसुन्धरा॥५३॥

मैत्रेय! पृथ्वीगीताः श्लोकाश्चात्र निबोध तान्।
यानाह धर्मध्वजिने जनकायासितो मुनिः॥५४॥

पृथिव्युवाच

कथमेष नरेन्द्राणां मोहो बुद्धिमतामपि।
येन फेनसधर्माणोऽप्यतिविश्वस्तचेतसः॥५५॥
पूर्वमात्मजयं कृत्वा जेतुमिच्छन्ति मन्त्रिणः।
ततो भृत्यांश्च पौरांश्च जिगीषन्ते तथा रिपून्॥५६॥
क्रमेणानेन जेष्यामो वयं पृथ्वीं ससागराम्।
इत्यासक्तधियो मृत्युं न पश्यन्त्यविदूरगम्॥५७॥
समुद्रावरणं याति मन्मण्डलमथो वशम्।
कियदात्मजयादेतन्मुक्तिरात्मजये फलम्॥५८॥
उत्सृज्य पूर्वजा याता यां नादाय गतः पिताः।
तां ममेति विमूढत्वाज्जेतुमिच्छन्ति पार्थिवाः॥५९॥

---

तेभ्यस्तेभ्यः पूर्वतरा इत्यनेनातीतानां मोहावस्था दर्शिता, एवं भविष्या इत्यनागतानां मोहावस्था॥५२॥

एतदेव पृथिवीगीतैः प्रपञ्चयति— 'कथमेष' इति नवभिः। फेनसधर्माणः क्षणभङ्गुरा इत्यर्थः॥५५॥

पूर्वमात्मजयमिति अजितेन्द्रियाणां मन्त्रिभृत्यादिजयाभावात्॥५६॥

किञ्चेवं सर्वमात्मवशीकुर्वतो मम भुवो मण्डलं वंश याति। यद्यपि तथाप्यात्मनामिन्द्रियादीनां जयात् जातमेतदनित्यं राज्यं कियदत्यल्पम्। क्षयादात्मजये सति मुक्तिरत्यन्तं फलम्॥५८॥

अनित्यत्वमेवाह—'उत्सृज्ये'ति। पूर्वजाः पूर्वेषामिति वा पाठः॥५९॥

मत्कृते पितृपुत्राणां भ्रातृणाञ्चापि विग्रहाः।
जायन्तेऽत्यन्तमोहेन ममताधृतचेतसाम्॥ ६०॥
पृथ्वी ममेयं सकला ममैषा ममान्वयस्यापि च शाश्वतेयम्।
यो तो मृतो ह्यत्र बभूव राजा कुबुद्धिरासीदित तस्य तस्य॥ ६१॥
दृष्ट्वा ममत्वादृतचित्तमेकं विहाय मां मृत्युपथं व्रजन्तम्।
तस्यान्वस्थस्य कथं ममत्वं हृद्यास्पदं मत्प्रभवं करोति॥ ६२॥
पृथ्वी ममैषाशु परित्यजैनां वदन्ति ये दूतमुखैः स्वशत्रुम्।
नराधिपास्तेषु ममातिहासः पुनश्च मूढेषु दयाभ्युपैति॥ ६३॥

पराशर उवाच

इत्येते धरणीगीता श्लोका मैत्रेय! यैः श्रुताः।
ममत्वं विलयं याति तापन्यस्तं यथा हिमम्॥ ६४॥
इत्येष कथितः सम्यङ् मनोर्वंशो मया तव।
यत्र स्थितिप्रवृत्तस्य विष्णोरंशांशका नृपाः॥ ६५॥
शृणुयाद् य इमं भक्त्या मनुवंशमनुक्रमात्।
तस्य पापमशेषं वै प्रणश्यत्यमलात्मनः॥ ६६॥
धनधान्यर्द्धिमतुला प्राप्नोत्यव्याहतेन्द्रियः।
श्रुत्वैवमखिलं वंशं प्रशस्तं शशिसूर्ययोः॥ ६७॥
इक्ष्वाकु-जह्नु-मान्धातृ-सगरा-विक्षितान् रघून।
ययाति-नहुषाद्यांश्च ज्ञात्वा निष्ठामुपागतान्।
महाबलान् महावीर्य्यानन्तधनसञ्चयान्॥ ६८॥
कृतान् कालेन बलिना कथाशेषान् नराधिपान्।
श्रुत्वा न पुत्रदारादौ गृहक्षेत्रादिके तथा।
द्रव्यादौ च कृतप्रज्ञो ममत्वं कुरुते नरः॥ ६९॥

---

राज्ये पित्रादिवैरमपि दोषमाह—'**मत्कृत**' इति॥ ६०॥

किञ्च मयि राज्ञां ममत्वबुद्धिर्वृथैवेत्याह—'**पृथ्वी ममे**'ति। अत्र मयि यो यो राजा मृतो बभूव, तस्य तस्यैवेयं कुबुद्धिरासीत्, ततः पारमार्थिकफलाभावात्। अन्यत्रेति पाठे मृतः त्वन्यत्र राजा बभूव, तस्यापि वासनावशादियमेव कुबुद्धिः संसारप्रदासीदित्यर्थः॥ ६१॥

तप्तं तपो यैः पुरुषप्रवीरै
रुद्बाहुभिर्वर्षगणाननेकान्।
इष्टाश्च यज्ञा बलिनोऽतिवीर्य्याः
कृतास्तु कालेन कथावशेषाः॥७०॥
पृथुः समस्तान् प्रचचार लोका-
नव्याहतो योऽरिविदारिचक्रः।
स कालवाताभिहतो विनष्टः
क्षिप्तं यथा शाल्मलितूलमग्नौ॥७१॥
यः कार्त्तवीर्य्यो बुभूजे समस्तान्
द्वीपान् समाक्रम्य हतारिचक्रः।
कथाप्रसङ्गे त्वभिधीयमानः
स एव सङ्कल्पविकल्पहेतुः॥७२॥
दशानना-विक्षित-राघवाणामैश्वर्य्यक्र
मुद्भासितदिङ्मुखानाम्।
भस्मापि जातं न कथं क्षणेन
भ्रूभङ्गपातेन धिगन्तकस्य॥७३॥

---

न च तेषां तपः प्रभावाद्यभावात् कथावशेषत्वमित्याह, 'तप्त' मिति॥७०॥

तानेवाह—'पृथु' रिति द्वाभ्याम्॥७१॥

सङ्कल्पविकल्पयोः केषाञ्चित् सङ्कल्पस्य तथेति प्रत्ययस्य, केषाञ्चिद् विकल्पस्य किमासीन्न वेति सन्देहस्य, हेतुर्निमित्तं, संकल्पस्य मनसो विकल्पहेतुः॥७२॥

उद्भासितानि दिङ्मुखानि यैः। उद्भासितदिग्वितानमिति पाठे ऐश्वर्यविशेषणम्। तेषां रावणादीनामैश्वर्य्यम् अन्तकस्य भ्रूभङ्गपातेन कथं भस्म न जातं, किन्तु जातमेव, तस्मादैवश्वर्यं धिक्। यद्वा काष्ठं दग्धमपि भस्म भवति, ऐश्वर्यं भस्मापि न जातं किञ्चिदवशिष्टमपि कथं न जातं? तस्मात् धिक्॥७३॥

कथाशरीरत्वमवाप यद् वै
मान्धातृनामा भुवि चक्रवर्ती।
श्रुत्वापि तं कोऽपि करोति साधु-
मर्मत्वमात्मन्यपि मन्दचेता:॥७४॥

भगीरथाद्या: सगर: ककुत्स्थो
दशाननो राघव लक्ष्मणौ च।
युधिष्ठिराद्याश्च बभूवुरेते
सत्यं न मिथ्या क्व नु ते न विद्म:॥७५॥

ये साम्प्रतं ये च नृपा भविष्या:
प्रोक्ता मया विप्रवरोग्रवीर्य्या:।
ये ते तथान्ये च तथाभिधेया:
सर्वे भविष्यन्ति यथैव पूर्वे॥७६॥

एतद् विदित्वा न नरेण कार्यं
ममत्वमात्मन्यपि पण्डितेन।
तिष्ठन्तु तावत् तनयात्मजाद्या:
क्षेत्रादयो ये तु शरीरतोऽन्ये॥७७॥

इति श्रीविष्णुपुराणे चतुर्थांशे चतुविंश: अध्याय:॥

---

आत्मन्यहङ्कारास्पदे देहेऽपि किं पुन: पुत्रदारादौ॥७४॥

भगीरथाद्या: सत्यं जाता:, किन्तु क्व ते इति न विद्म:, कालेनादर्शनं नीता इत्यर्थ:। अत्र राघवदीनां ग्रहणं लोकदृष्ट्या वैराग्यार्थम्॥७५॥

तथा अन्येऽनुक्तास्तथाभिधेया: कथामात्रावशेषा भविष्यन्तीत्यर्थ:॥७६॥

एतदशंतात्पर्यार्थं संक्षिप्याह–'एतदि' ति। तनयादयस्तिष्ठन्तु ममत्वं सुतरां न कार्यमित्यर्थ:॥७७॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां चतुर्थांशे चतुविंशोऽध्याय:॥

## चतुर्थांश: सम्पूर्ण

# पञ्चमांशः

## प्रथमः अध्यायः

### (वसुदेव-देवक्योर्विवाहः, ब्रह्मणः समीपे पृथिव्या गमनम्, विष्णोः स्तोत्रम् ,कंसादीन् हन्तुं विष्णोरङ्गीकारश्च)

मैत्रेय उवाच

नृपाणां कथितः सर्वो भवता वंशविस्तरः।
वंशानुचरितञ्चैव यथावदनुवर्णितम्॥ १॥
अंशावतारो ब्रह्मर्षे योऽयं यदुकुलोद्भवः।
विष्णोस्तं विस्तरेणाहं श्रोतुमिच्छाम्यशेषतः॥ २॥
चकार यानि कर्माणि भगवान् पुरुषोत्तमः।
अंशाशेनावतीर्य्योर्व्यां तत्र तानि मुने! वद॥ ३॥

पराशर उवाच

मैत्रेय! श्रूयतामेतद् यत् पृष्टोऽहमिदं त्वया।
विष्णोरंशांश-सम्भूति-चरितं जगतो हितम्॥ ४॥
देवकास्य सुतां पूर्वं वसुदेवो महामुने।
उपयेमे महाभागां देवकीं देवतोपमाम्॥ ५॥

---

अथातः पञ्चमांशे श्रीकृष्णलीलामहोदयः। बिन्दुमाधव तोषाय यथामति वितन्यते। उक्तानुवादपूर्वकं श्रीकृष्णावतारप्रकारं तच्चरितानि च पृच्छति—'**नृपाणा**'मिति त्रिभिः॥ १॥

विष्णोरंशावतारः परब्रह्मण एव परिच्छिन्ननराकारेणावतारः। विस्तरेणेति —यदर्थं यदा च येन त प्रकारेणासावततार इत्याद्यविशेषतः श्रोतुमिच्छामि॥ २॥

तच्चरितञ्च विस्तरेण वदेत्याह '**चकारे**' ति। परब्रह्मणोऽशं इवांश क्षीराब्धिशायी तस्याशं इवांशो नराकरः, तेनावतीर्य तत्र यानि चकार, तानि वदेस्तन्वयः॥ ३॥

सम्भूतिश्च चरितञ्चेति द्वन्द्वैक्यम्॥ ४-५॥

कंसस्तयोर्वररथं चोदयामास सारथिः।
वसुदेवस्य देवक्याः संयोगे भोजवर्द्धनः॥६॥
अथान्तरीक्षे वागुचैः कंसमाभाष्य सादरम्।
मेघगम्भीरनिर्घोषं समाभाष्येदमब्रवीत्॥७॥
यामेतां वहसे मूढ! सह भर्त्रा रथे स्थिताम्।
अस्यास्ते चाष्टमो गर्भः प्राणानपहरिष्यति॥८॥

पराशर उवाच

इत्याकर्ण्य समादाय खड्गं कंसो महाबलः।
देवकीं हन्तुमारब्धो वसुदेवोऽब्रवीदिदम्॥९॥
न हन्तव्या महाबाहो! देवकी भवता तव।
समर्पयिष्ये सकलान् गर्भानस्योदरोद्भवान्॥१०॥
तथेत्याह च तं कंसो वसुदेवं द्विजोत्तम।
न घातयामास च तां देवकीं तस्य गौरवात्॥११॥
एतस्मिन्नेव काले तु भूरिभारावपीड़िता।
जगाम धरणी मेरौ समाजे त्रिदिवौकसाम्॥१२॥

---

वररथं दाम्पत्यकल्पनार्थं रथं प्रीत्या सारथिरिव स्थितश्चोदयामास इत्यर्थः संयोगे वैवाहिकसम्बन्धे॥६॥

अन्तरिक्षे अशरीरवाक्। आभाष्यसादरमित्येकं पदम् आभाष्ये वक्तेऽव्येऽर्थे यथासौ सादरः स्यात्तथा उच्चैः समाभाष्यः सम्बोध्य मेघस्य गम्भीरो निर्घोषो यथा भवत्येवमिदं वक्ष्यमाणं वाक्यमब्रवीदित्यर्थः॥७-८॥

आरब्धः कर्त्तरि क्तः, हन्तु प्रवृत्त इत्यर्थः॥९॥

अस्योदरोद्भवानित्यार्षः सन्धिः। अस्यः कलत्रस्येति वा अस्य तवेति वान्वयः यद्वा असुक्षेपण इति धातोरस्येति हि —लोपे रूपम् मया समर्पितान्यत्र क्वापि यथेच्छं निपेत्यर्थः॥१०-११॥

ततश्चातिभयात् कंसे देवकीप्रसूतिप्रतीक्षया स्थिते सति भारावपीडितधारण्या प्रार्थितैर्देवैः संस्तुस्य प्रसादितो हरिः। षड्गर्भादिपूर्वकमवततारेति वक्तुमाहं—**'एतस्मिन्नेवे'** त्यादिना यावदध्यायसमाप्ति। धरणी गोरूपेण जगामेति ज्ञेयं **'गौर्भूत्वाश्रुमुखी'** ति शुकोक्ते॥१२॥

सब्रह्मकान् सुरान् सर्वान् प्रणित्याह मेदिनी।
कथयामास तत्सर्वं खेदात् करुणभाषिणी॥ १३॥

पृथिव्युवाच

अग्निः सुवर्णस्य गुरुर्गवां सूर्यः परो गुरुः।
ममार्थखिललोकानां गुरुर्नारायणो गुरुः॥ १४॥
प्रजापतिपतिर्ब्रह्मा पूर्वषामपि पूर्वजः।
कला-काष्ठा-निमेषात्मा कालश्चाव्यक्तमूर्तिमान्॥ १५॥
तदंशभूतः सर्वेषां समूहो वः सुरोत्तमाः।
आदित्या मरुतः साध्या रुद्रा वस्वश्वि-वह्नयः॥ १६॥
पितरो ये च लोकानां स्त्रष्टारोऽत्रिपुरोगमाः।
एतत् तस्याप्रमेयस्य रूपं विष्णोर्महात्मनः॥ १७॥
यक्ष-राक्षस-दैतेयाः पिशाचोरग-दानवाः।
गन्धर्वाप्सरसश्चैव रूपं विष्णोर्महात्मनः॥ १८॥
ग्रहर्क्षतारकाचित्र-गगनाग्निजलानिलाः।
अहञ्च विषयाश्चैतत् सर्वं विष्णुमयं जगत्॥ १९॥

---

तत् सर्वं दैत्याभारपीडादि॥१३॥

अग्निरित्यादेरयमर्थः,— यथाग्निः सुवर्णस्य गुरुर्जनकः,— अग्नेरपत्यं प्रथमं सुवर्णं भूवैष्णवी सूर्यसुताश्च गाव' इति स्मृतेः। अतो यथाग्निः सुवर्णस्य मलं दहन् सुवर्णं रक्षति, यथा च गवां सूर्यः परो गुरुः, अतस्ताः पर्जन्य रूपेण पुष्णाति गावो रश्मयो वा, अतस्तान् यथा विवर्द्धयति, तथा ममापि नारायणो गुरुः, यतोऽसावखिललोकानां गुरुः। अतः स एव मम भारहर्त्ता पालकश्च। तथापि साक्षात्तद्विज्ञपतौ ममासामर्थ्याद् भवताञ्च तदंशत्वाद् भवतो मया भारपनयनाय प्राथ्यन्त इति॥१४॥

कालश्य तदंशभूतः तच्छक्तित्वात्॥१५॥

सर्वेषा वो युष्माकञ्च समूहस्तदंशभूतः। विश्वरूपत्वात्तस्य एतदेव प्रपञ्चयति **'आदित्या'** इत्यादि साद्धैस्त्रिभिः वसवश्च अश्विनौ च वह्नयश्चेति विग्रहः॥१६॥

महात्मनो विश्वरूपस्य विष्णो रूपम्॥१७-१८॥

ग्रहादिभिश्चित्रमिति गगनविशेषादेव तेषामपि तद्रूपतोक्ता। अहञ्च भूः विषयाः शब्दादयः॥१९॥

तथाप्यनेकरूपस्य तस्य रूपाण्यहर्निशम्।
बाध्यबाधकतां यान्ति कल्लोला इव सागरे॥ २०॥
तत् साम्प्रतमिमे दैत्याः कालनेमिपुरोगमाः।
मर्त्त्यलोकं समाक्रम्य बाधन्तेऽहर्निशं प्रजाः॥ २१॥
कालनेमिर्हतो योऽसौ विष्णुना प्रभविष्णुना।
उग्रसेनसुतः कंसः सम्भूतः स महासुरः॥ २२॥
अरिष्टो धेनुकः केशी प्रलम्बो नरकस्तथा।
सुन्दोऽसुरस्तथात्युग्रो वाणश्चापि बलेः सुतः॥ २३॥
तथान्ये च महावीर्या नृपाणां भवनेषु ये।
समुत्पन्ना दुरात्मानस्तान् न संख्यातुमुत्सहे॥ २४॥
अक्षौहिण्योऽत्र बहुला दिव्यमूर्तिधृतां सुराः।
महाबलानां दृप्तानां दैत्येन्द्राणां ममोपरि॥ २५॥
तद्भूरिभारपीडार्त्ता न शक्नोम्यमरेश्वराः।
विभर्त्तुमात्मानमहमिति विज्ञापयामि वः॥ २६॥
क्रियतां तन्महाभागाः मम भारावतारणम्।
यथा रसातलं नाहं गच्छेयमिति विह्वला॥ २७॥

पराशर उवाच

इत्याकर्ण्य धरावाक्यमशेषं त्रिदशैस्ततः।
भुवो भारावतारार्थं ब्रह्मा प्राह प्रचोदितः॥ २८॥

---

एकस्यैव रूपञ्चेत् सर्वं कुतोऽन्योन्यविरोधस्तत्राह—'**तथापी**' ति॥ २०-२१॥

ननु कालनेमिः प्रागेव हतः, तत्राह—'**कालनेमि**' रिति॥ २२॥

अक्षौहिणीसंख्या भारतोक्ता— '**अक्षौहिण्याः प्रसंख्यानं रथानां दन्तिनां तथा। एकविंशतिसाहस्रं शतान्यष्टौ च सप्ततिः। ज्ञेयं शतसहस्रन्तु सहस्राणि तथा नव। नराणामपि पञ्चाशत् शतानि त्रीणि चैव हि। पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च। दशोत्तराणि षट्प्राहुरेवमक्षौहिणी बुधाः**' इति॥ २५-२७॥

अशेषत्रिदशैः सह धरायो वाक्यमाकर्ण्य धरयैव प्रचोदितो ब्रह्मा प्राह॥ २८-२९॥

ब्रह्मोवाच

यथाह वसुधा सर्वं सत्यमेतद्दिवौकसः।
अहं भवो भवन्तश्च सर्वं नारायणात्मकम्॥२९॥
विभूतयस्तु यास्तस्य तासामेव परस्परम्।
आधिक्यन्यूनता बाध्याबाधकत्वेन वर्त्तते॥३०॥
तदागच्छत गच्छामः क्षीराब्धेस्तटमुत्तरम्।
तत्राराध्य हरिं तस्मै सर्वं विज्ञापयाम वै॥३१॥
सर्वदैव जगत्यर्थे स सर्वात्मा जगन्मयः।
स्वल्पांशेनावतीर्योर्व्यां धर्मस्य कुरुते स्थितिम्॥३२॥

पराशर उवाच

इत्युक्त्वा प्रययौ विप्र! सह देवैः पितामहः।
समाहितमतिश्चैवं तुष्टाव गरुडध्वजम्॥३३॥

ब्रह्मोवाच

द्वे विद्ये त्वमनाम्नाय परा चैवापरा तथा।
ते एव भवतो रूपे मूर्त्तामूर्त्तात्मके प्रभो॥३४॥
द्वे ब्रह्मणी त्वणीयोऽतिस्थूलात्मन्! सर्व सर्ववित्।
शब्दब्रह्म परञ्चैव ब्रह्म ब्रह्ममयस्य यत्॥३५॥

---

आधिक्यं बाधकत्वेन न्यूनता च बाध्यत्वेन वर्त्तते इत्यर्थः॥३०-३३॥

भो अनाम्नाय! साक्षाद् वेदस्याप्यविषयीभूत! द्वे विद्ये वेदितव्ये पराचैवापरा चेति श्रुतिप्रोक्ते परापरब्रह्मविषये द्वे विद्ये। ते एव तद् विष्यभूते परापरे ब्रह्मणी मर्त्तामूर्तात्मके भवतो रूपे॥३४॥

एतदेव स्फुटयति— '**द्वे ब्रह्मणीत्वि**' ति। द्वे ब्रह्मणी भवते रूपे इत्यन्वयः। एतदेव सम्बोधनद्वारेणदर्शयति—अणीयः सूक्ष्मतम। अतिस्थूलात्मन् स्थूलरूप! त्वम्पदलक्ष्यविराटरूप! अत एव सर्वविश्वरूप! सर्ववित् सर्वज्ञ! किञ्च यत् ज्ञापकं शब्दब्रह्म ज्ञाप्यञ्च परं ब्रह्म ते द्वे परब्रह्मात्मकस्य भगवतो रूपम् इत्यन्वयः॥३५॥

ऋग्वेदस्त्वं यजुर्वेदः सामदेवस्त्वथर्व च।
शिक्षा कल्पो निरुक्तञ्च छन्दो ज्योतिषमेव च॥ ३६॥
इतिहास-पुराणे च तथा व्याकरणं प्रभुः।
मीमांसा न्यायकं तत्त्वं धर्मशास्त्राण्यधोक्षज॥ ३७॥
आत्मात्मदेहगुणवद् विचाराचारि यद्वचः।
तदप्यादिपते नान्यदध्यात्मात्मस्वरूपवत्॥ ३८॥
त्वमव्यक्तमनिर्देश्यमचिन्त्यानामवर्णवत्।
अपाणिपादरूपञ्च शुद्धं नित्यं परात्परम्॥ ३९॥
श्रृणोष्यकर्णः परिपश्यसि त्व
मचुक्षुरेको बहुरूपरूपः।
अपादहस्तो जवनो ग्रहीता
त्वं वेतसि सर्वं न च सर्ववेद्यः॥ ४०॥

---

तत्र कर्मविषयं शब्दब्रह्मत्वभित्याह—'**ऋग्वेद**' इति द्वाभ्याम् ॥३६-३७॥

परब्रह्माविषयमपि शब्दब्रह्मत्वमेवत्याह—'**आत्मात्मे**'ति। आत्मात्मशब्दाभ्यां जीवपरमात्मनोः देहशब्देन स्थूलसूक्ष्मशरीरे, गणवच्छव्देन तत्कारणमव्यक्तम्। एतेषां विचारमाचरतीति तथा। एवञ्च विचारे क्रियामाणे यदध्यात्मस्वरूप त्वम्पदलक्ष्यम् आत्मस्वरूपञ्च तत्पदलक्ष्यम् तद् ब्रह्मफलभूतमस्ति यस्मिन् वचसि तत्तथाभूतोपनिषद् वचस्त्वत्रान्यत्र भवति। भो आद्यपते ब्रह्मादिस्वामिन्! यद्वा ऋग्वेदादिपदैरेवोपनिषद्रूपत्वस्याप्युक्तत्वादेन श्लोकेन सांख्ययोगद्यनुसारि तत्र तदाचार्योपदेशवचोरूपतोच्यते इति व्याख्येयम्॥ ३८॥

शब्दब्रह्मरूपतामुक्त्वा परब्रह्मारूपतामाह—'**त्वमि**' ति। अव्यक्तं चक्षुरादेर गोचरः, अनिर्देस्यं वाचामगोचरः अचिन्त्यं मनसोऽप्यगोचरः, अचिन्त्यञ्च तदानामवर्णवद्य। पाणिपादवर्जितस्वरूपं नित्यञ्च परादव्यक्तात् परम्। नामरूपादि शून्यत्वादिन्द्रियवाङ्नसामविषयभूतं यद् ब्रह्म विदुर्योग्निस्तदपि त्वमेवे त्यन्वयः॥ ३९॥

ईश्वररूपतामाह—'**श्रृणोषी**'ति दशभिः। बहूनि रूपाणि रूपं यस्यं सः। अपादोऽपि जवनो वेगवान्, अहस्तोऽपि ग्रहीता, श्रुतिश्च—''अपाणिपादो जवनो ग्रहीता, पश्यत्यचक्षुः स श्रृणोत्यकर्णः। स वेत्ति वेद्यं न च तस्यास्ति वेत्ता, तमाहुरग्रयं पुरूषं महान्तम्'' इति॥ ४०॥

अणोरणीयासमसत् स्वरूपं
त्वां पश्यतोऽज्ञाननिवृत्तिरग्रया।
श्रीरस्य धीर्यस्य बिभर्ति नान्य-
द्वरेण्य-रूपात् परतः परात्मन्॥ ४१॥
त्वं विश्वनाभिर्भुवनस्य गोप्ता
सर्वाणि भूतानि तवान्तराणि।
यद्भूतभव्यं तदणोरणीयः
पुमांस्त्वमेकः प्रकृतेः परस्तात्॥ ४२॥
एकश्चतुर्द्धा भगवान् हुताशों
वर्चो बिभूतिं जगतो ददासि।
त्वं विश्वतश्चक्षुरनन्तमूर्त्ते!
त्रेधा पदं संनिदधे विधातः॥ ४३॥

---

ईश्वरमप्रच्युतब्रह्मस्वरूपं पश्यतस्तत्त्वदर्शित्वान्मोक्षः स्यादित्याह, —त्वामचिन्तयशक्तिमीश्वरं अणोः अणीयांसं निरुपाधित्वेनातिसूक्ष्मतमम्, अत एवासत्स्वरूपमिवावस्थितम्। यद्वा असतः प्रपञ्चस्यात्मरूपं पश्यतस्तत्त्वदर्शिनोः अग्रटया आत्यन्तिकी अज्ञाननिवृत्तिभवति। कथम्भूतस्येत्यत आह— **'धीरस्ये'** ति। हे परतोऽव्यक्तात् परमात्मन! यस्य धीरस्य विपश्चितः धीर्वरेण्यरूपात् परमानंन्द मूर्त्तेस्त्वत्तोऽन्यत्र विभर्त्ति न धारयति, तस्य स वासनाज्ञाननिवृत्त्या मोक्षोभवतीत्यर्थः॥ ४१॥

ननु मायाशवलस्य कथं प्रकृतेः परत्वं तत्राह—**'त्वमिति'** विश्वस्य नाभिराश्रयः। आन्तराणि मध्ये स्थितानि। यद्यस्मात्त्वतो भूतं भव्यञ्च। एवम्भूतोऽपि पुमानीश्वरस्त्वं अणोरणीयः प्रकृते परस्तात् स्थितं ब्रह्मैव। न तु प्रच्युतब्रह्मभावः मायायाः स्वाश्रयानावरकत्वादिति भावः॥ ४२॥

भुवनस्य गोप्ते'ति यदुक्तं तत् प्रपञ्चयति **'एकश्चे'** ति। श्रौतास्त्रयोऽग्नय औपासनश्चैक इत्येवं चतुर्धा। यद्वा **'ऐन्धनो जाठरश्चाग्निः वैद्युतो वाडावस्तथे'** त्येवं चतुर्धा। यद्वा वैद्युतनिर्मन्थ्य सौरजाठरात्मना चतुर्धा। वर्चस्तेजः विभूति सम्पदञ्च ददासि। त्रेधा पदं भूर्भुवः स्वर्लोकेषु त्रिविक्रमावतारे सन्निदधे निहितवान्, **'त्रेधा विष्णुरूपा माया विचक्रम'** इति श्रुतेः॥ ४३॥

यथाग्निरेको बहुधा समिध्यते विकारभेदैररिकाररूपः।
तथा भवान् सर्वगतैकरूपो रूपाण्यशेषाण्यनुपुष्यतीश॥ ४४॥
एकस्त्वग्रय्यं परमं पदं यत् पश्यन्ति त्वां सूरयो ज्ञानदृश्यम्।
त्वत्तो नान्यत् किञ्चिदस्ति त्वपीह यद्वा भूतं यच्चं भाव्यं परात्मन्॥ ४५॥
व्यक्ताव्यक्तस्वरूपस्त्वं समष्टिव्यष्टिरूपवान्।
सर्वज्ञः सर्वदृक् सर्वशक्तिज्ञानबलर्द्धिमान्॥ ४६॥
अन्यूनश्चाप्यवृद्धिश्च स्वाधीनी नादिमान् वशी।
क्लम-तन्द्रा-भय क्रोध-कामादिभिरसंयुतः॥ ४७॥
निरवद्यः परप्रीतो निरनिष्टोऽक्षरक्रमः।
सर्वेश्वरः पराधारो धाम्नां धामात्मकोऽक्षयः॥ ४८॥
सकलावरणातीत! निरालम्बनभावन!
महाविभूतिसंस्थान! नमस्ते पुरुषोत्तम॥ ४९॥
नाकारणात् कारणाद् वा कारणाकारणान्न च।
शरीरग्रहणं वापि धर्मत्राणाय ते परम्॥ ५०॥

---

'अनन्तमूर्त्ते' इति यदुक्तं तत् प्रपञ्चयति—'यथाग्नि'रिति त्रिभिः। अनुपुष्यति वर्द्धयति॥ ४४-४५॥

व्यक्तं महदादि, अव्यक्तं प्रधानम्, तत् स्वरूपस्त्वम्, अतः समष्टिर्विराड्देहः, व्यष्टिस्तद्विशेषश्चतुर्विधो भूतग्रामः, ततस्वरूपवान्, सर्वज्ञः सामान्येन, सर्वविद् विशेषतः॥ ४६॥

तदेवं सर्वकार्यरूपत्वेऽपि कार्ये दोषराहित्यं वदन्नचिन्तमैश्वर्यमाह—'अन्यून' इति त्रिभिः। वशीं नियन्ता। क्लमः श्रमः, तन्द्रा आलस्यम्॥ ४७॥

निरवद्यो निर्मलः, निरनिष्टः प्रतिकूलशून्यः। पाठान्तरेऽधिष्ठानः शून्य इत्यर्थः। पराधारः ब्रह्मादीनामाश्रयः धाम्नां तेजसां सूर्यादीनां धामात्मकः प्रकाशकरूपः॥ ४८॥

सकलावरणातीत! अन्नमयादिपञ्चकोषासंसृष्ट! अतो निरालम्बनभावन! निरुपाधित्वान्निर्विषयेण चित्तेन विभाव्य! महाविभूतर्विश्वप्रपञ्चात्मिका संस्थानं सन्निवेशो यस्य तथाभूत॥ ४९॥

पराशर उवाच

**इत्येवं संस्तुति श्रुत्वा मनसा भगवानजः।**

**ब्रह्माणमाह प्रीतात्मा विश्वरूपधरो हरिः॥५१॥**

श्रीभगवानुवाच

**भो भो ब्रह्मन्! त्वया मत्तः सह देवैर्यदिष्यते।**

**तदुच्यतामशेषं वः सिद्धमेवावधार्यताम्॥५२॥**

पराशर उवाच

**ततो ब्रह्मा हरेर्दिव्यं विश्वरूपमवेक्ष्य तत्।**

**तुष्टाव भूयो देवेषु साध्वसावनतात्मसु॥५३॥**

ब्रह्मोवाच

**नमो नमस्तेऽस्तु सहस्रमूर्त्ते! सहस्रबाहो! बहुवक्त्रपाद।**

**नमो नमस्ते जगतः प्रवृत्तिविनाश-संस्थानकराप्रमेय॥५४॥**

**सूक्ष्मातिसूक्ष्मातिबृहत्प्रमाण!गरीयसामप्यतिगौरवात्मन्।**

**प्रधानबुद्धीन्द्रियवत्-प्रधानमूलात् परात्मन्! भगवन्! प्रसीद॥५५॥**

---

ननु कुतो ममारवणातीतत्वं मत्स्यकूर्माद्यनेकदेहावृतत्वादित्यत आह—'**ने**' ति अकस्य दुःखस्य अरणात् प्रापणादकारणमधर्मः, कस्य सुखस्यारणात् प्रापणात् कारणं धर्मः, तदुभयमिश्रितं कारणाकारणम्; ऐतेभ्यो हि यथाक्रमं तिर्यकसुरनरादीनां जन्म प्रतिषिद्धम्। ते तव तु नैवं जन्म, किन्तु धर्मत्राणायैव, सर्वस्य परमान्दरूपस्य कर्मपारतन्त्र्याभावात्। यद्वा न विद्यतेऽकमेषामिति नाकाः देवास्तेषामावरणादाक्रोशात्। कस्यं ब्रह्मण आवरणाद्वा कारणाकारणात्तदुभयाक्रोशाच्च ते शरीरग्रहणं न भवति, किन्तु जगत कृपया धर्मत्राणाय केवलम्। न हि स्वेच्छावृतविशुद्धोर्जितसत्त्वविग्रहैरावरणं स्यादित्यर्थः॥५०-५१॥

यदिष्यते अपेक्ष्यते॥५२॥

साध्वसं भयं तेनावनतशरीरेषु सत्सु॥५३॥

प्रवृत्तिः सृष्टिः, संस्थानं स्थितिः॥५४॥

अतिबृहत् प्रमाणं यस्य, अतिगौरवयुक्त आत्मा मूर्तिर्यस्य, प्रधानं प्रकृतिः, बुद्धिर्महत्तत्त्वम्, इन्द्रियवान् अहङ्कारः, एतेषां पुरुषः, स एव मूलं जगत् कर्त्तत्वात्, तस्मादपि परात्मन! तन्नियन्तृस्वरूप॥५५॥

एषा मही देव! महीप्रसूतै-
महासुरैः पीडित-शैलबन्धा।
परायणां त्वां जगतामुपैति
भारावतारार्थमपारसारम्॥५६॥

एते वयं वृत्ररिपुस्तथायं
नासत्यदस्रौ वरुणो यमश्च।
इमे च रुद्रा वसवः ससूर्याः
समीरणाग्निप्रमुखास्तथान्ये॥५७॥

सुराः समस्ताः सुरनाथ! कार्यमेभिर्मया यच्च सदीश सर्वम्।
आज्ञापयाज्ञां प्रतिपालयन्तस्तथैव तिष्ठाम सदास्तदोषाः॥५८॥

पराशर उवाच

एवं संस्तूयमानस्तु भगवान् परमेश्वरः।
उज्जहारात्मनः केशौ सित-कृष्णौ महामुने॥५९॥
उवाच च सुरानेतौ मत् केशो वसुधातले।
अवतीर्य भुवो भार-क्लेशहानिं करिष्यतः॥६०॥

---

एवं स्तुत्वा प्रस्तुतमाह—'**एषे**'ति। मह्यां प्रसूतैर्महद्भिरसुरैः पीडितोऽतिश्लथी कृतः शैलबन्धः पर्वतरूपमूलबन्धो यस्याः सा, अपारसारम्, अनन्तबलम्। अपारपारमिति पाठे अपारः अशक्यः पारः पर्य्यन्तो यस्येति॥५६॥

अस्माभिश्च तव यत् साहाय्यं कार्यं तदाज्ञापयेत्याह— '**एते वय**' मिति द्वाभ्याम्। नासत्यदस्रौ अश्विनौ॥५७-५८॥

उज्जहार उत्पाटितवान्। अयं भावः, मम दुष्करञ्चेत् युष्माभिः साहाय्यं कार्यं स्यात्, न त्वेतदस्ति भूभारहरणादौ महत्यपि कार्ये मत्केशमात्रस्यैव समर्थत्वादिति। न तु केशमात्रवतार इति मन्तव्यम्। मददृक्पातविचूर्णिता इति कृष्णाष्टम्यामहमुत्पत्स्यामीत्यादिषु साक्षात् स्वावतारतोक्तेः, सितकृष्णकेशधारणञ्च शोभार्थमेव श्रीवत्सरोमवत्, न त्वजरामरस्यार्द्धपलितत्वं सम्भवति। '**काष्ठामुहूर्त्तादिमयश्च कालो न यद्विभूतेः परिणामहेतु**'रित्युक्तत्वात्॥५९॥

भारनिमित्तस्य क्लेशस्य हानिं करिष्यतः।।६०।।

सुराश्च सकलाः स्वांशैरवतीर्य महीतले।
कुर्वन्तु युद्धमुन्मत्तैः पुर्वोत्पन्नैर्महासुरैः॥६१॥
ततः क्षयमशेषास्ते दैतेया धरणीतले।
प्रयास्यन्ति न सन्देहो मद्दृकपातविचूर्णिताः॥६२॥
वसुदेवसस्य या पत्नी देवकी देवतोपमा।
तस्यायमष्टमो गर्भो मत्केशो भविता सुराः॥६३॥
अवतीर्य च तत्रायं कंसं घातयिता भुवि।
कालनेमिं समुद्भूतमित्युक्तवान्तर्दधे हरिः॥६४॥
अदृश्याय ततस्तेऽपि प्रणिपत्य महात्मने।
मेरुपृष्ठं सुरा जग्मुरवतेरुश्च भूतले॥६५॥
कंसाय चाष्टमो गर्भो देवक्यां धरणीधरः।
भविष्यतीत्याचचक्षे भगवान् नारदो मुनिः॥६६॥
कंसोऽपि तदुपश्रुत्य नारदात् कुपितस्ततः।
देवकीं वसुदेवश्च गृहे गुप्तावधारयत्॥६७॥
जातं जातञ्च कंसाय तेनैवोक्तं यथा पुरा।
तथैव वसुदेवोऽपि पुत्रमर्पितवान् द्विजः॥६८॥
हिरण्यकशिपोः पुत्राः
षड्गर्भा इति विश्रुताः।
विष्णुप्रयुक्ता तान् निद्रा
क्रमाद् गर्भे न्ययोजयत्॥६९॥

---

तथापि युद्धादिक्रीडार्थं सुरानाज्ञापयति—'सुराश्चे'ति॥६१॥

तैर्योद्धुमशक्ता वा वयमिति न भेतव्यमित्याह—'ततःक्षति'मिति॥६२॥

अयं कृष्णवर्णो मत्केशः, रामलीलानामप्युपलक्षणमेतत॥६३-६६॥
गुप्तौ सुरक्षितौ॥६७॥

तेनैव स्वेनैव पुरा यथोक्तं—'समर्पयिष्ये सकलान् पुत्रानस्योदरोद्भवा' निति॥६८-६९॥

योगनिद्रा महामाया वैष्णवी मोहितं यया।
अविद्यया जगत् सर्वं तामाह भगवान् हरिः॥७०॥

श्रीभगवानुवाच

निद्रे! गच्छ ममादेशात् पातालतल-संश्रयान्।
एकैकत्वेन षड्गर्भान् देवकीजठरं नय॥७१॥
हतेषु तेषु कंसेन शेषाख्योऽशस्ततो मम।
अंशाशेनोदरे तस्याः सप्तमः सम्भविष्यति॥७२॥
गोकुले वसुदेवस्य भार्यान्या रोहिणीं स्थिता।
तस्याः स सम्भूतिसमं देवि! नेयस्त्वयोदरम्॥७३॥
सप्तमो भोजराजस्य भयाद् रोधोपरोधतः।
देवक्याः पतितो गर्भ इति लोको वदिष्यति॥७४॥
गर्भसङ्कर्षणात् सोऽथ लोके सङ्कर्षणेति वै।
संज्ञामवाप्स्य वीरः श्वेताद्रिशिखरोपमः॥७५॥
ततोऽहं सम्भविष्यामि देवकीजठरे शुभे।
गर्भे त्वया यसोदाया गन्तव्यमविलम्बितम्॥७६॥
प्रावृट्काले च नभसि कृष्णाष्टम्यामहं निशि।
उत्पत्स्यामि नवम्याञ्च प्रसूतिं त्वमवाप्स्यसि॥७७॥

---

कथं सा विष्णुना प्रयुक्ता ? किं वापरं तस्याः कार्यमादिष्टम्? इत्यपेक्षायामाह—**'योगनिद्रे'** त्यादिना यावत्समाप्ति। योग एवात्मानुभूतिलक्षणो बाह्यानुभवादव्यावृत्तौ निद्रेव निद्रा सैव ब्रह्मादीनपि मोहयन्ती महामाय, सैव जीवानां ज्ञानमाच्छादयन्ती अविद्यारूपेण जगत् सर्वमावृत्य यया स्वशक्त्या मोहितं मिथ्याभिनिवेशवत् कृतं तामाहेत्यर्थः॥७०॥७२॥

सम्भूतिः सममनुरूपं यथा भवत्येवं नैयः। प्रागेव वसुदेवाहितगर्भाया रोहिण्याः पश्चाद गोकुलं गतायाः सप्तमे मासि वायुभूतं गर्भमपसार्य्य देवकीजठरात् सप्तमं गर्भमलक्षितमाकृष्य तस्या उदरं नेय इत्यर्थः। रोधोपरोधतः कारागारनिरोधात्॥७३-७४॥

सङ्कर्षणइति संज्ञामवाप्स्यति॥७५॥

त्वया यशोदाया गर्भं प्रति गन्तव्यम्॥७६॥

यशोदाशयने मान्तु देवक्यास्त्वामनिन्दिते।
मच्छक्तिप्रेरितमतिर्वसुदेवो नयिष्यति॥७८॥
कंसश्च त्वामुपादाय देवि! शैलशिलातले।
प्रक्षेप्स्यत्यन्तरीक्षे च त्वं स्थानं समवाप्स्यसि॥७९॥
ततस्त्वां शतदृक् शक्रः प्रणम्य मम गौरवात्।
प्रणिपातानतशिरा भगिनीत्वे ग्रहीष्यति॥८०॥
ततः शुम्भनिशुम्भादीन्हत्वा दैत्यान् सहस्रशः।
स्थानैरनेकैः पृथिवीमशेषां मण्डयिष्यसि॥८१॥
त्वं भूतिः सन्नतिः कीर्त्तिः क्षान्तिर्द्यौः पृथिवी धृतिः।
लज्जाः पुष्टि षा या च काचिदन्या त्वमेव सा॥८२॥
ते त्वामार्येति दुर्गेति वेगगर्भेऽम्बिकेति च।
भद्रेति भद्रकालीति क्षेम्या क्षेमङ्करीति च॥८३॥
प्रातश्चैवापराह्णे च स्तोष्यन्त्यानम्रमूर्त्तयः।
तेषां हि प्राथितं सर्वं मत्प्रसादाद्भविष्यति॥८४॥
सुरामांसोपहारैस्तु भक्ष्यभोज्यैश्च पूजिता।
नृणामशेषकामांस्त्वं प्रसन्ना सम्प्रदास्यसि॥८५॥

---

नभसि श्रावणे मासि निश्यर्द्धरात्रेऽष्टम्यामहमुत्पत्स्यामि। अर्द्धरात्रानन्तरं नवम्यां प्रविष्टायां यशोदाशयने मां नेष्यति त्वाञ्च देवक्याः शयने॥७७-७८॥

तथापि त्वया न भेतव्यमित्याह—'**कंशश्चे**' ति॥७९॥

तां प्रोत्साहयति—'ततस्त्वा' मिति सप्तभिः। शतशब्दोऽपरिमितवचनः सहस्रदृगित्यर्थः॥८०॥

स्थानैर्योगपीठाख्यायतनैर्बिन्ध्यजालन्धराद्यैः॥८१॥

तस्या विभूतिमाह—'त्वं भूति' रिति। या च काचिदन्यापि स्त्री जातिः सापि त्वमेव॥८२-८४॥

ते सर्वे सर्वदा भद्रे! मत्प्रसादादसंशयम्।

असन्दिग्धा भविष्यन्ति गच्छ देवि! यथोदितम्॥८६॥

इति श्रीविष्णुपुराणे पञ्चामांशे प्रथमः अध्यायः॥

---

ते सर्वे त्वया प्रसन्नया दत्ताः कामाः मत्प्रसादादसन्दिग्धा अव्यभिचरिता भविष्यन्ति। अतः असंशयं गच्छ॥८६॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे प्रथमोऽध्यायः॥

## द्वितीयोऽध्यायः

(यशोदगर्भे योगमाया देवकीगर्भे भगवतश्च प्रवेशः। देवानां देवकीस्तुतिः।)

पराशर उवाच

यथोक्तं सा जगद्धात्री देवदेवेन वै तदा।
षड्गर्भ-गर्भवियासं चक्रे चान्यस्य कर्षणम्॥ १॥
सप्तमे रोहिणीं प्राप्ते गर्भे गर्भं ततो हरिः।
लोकत्रयोपकाराय देवक्याः प्रविवेश वै॥ २॥
योगनिद्रा यशोदायास्तस्मन्नेव ततो दिने।
सम्भूता जठरे तद्वद् यथोक्तं परमेष्ठिना॥ ३॥
ततो ग्रहगणः सम्यक् प्रचचार दिवि द्विज।
विष्णोरंशे भुवं याते ऋतवश्चाभवन् शुभाः॥ ४॥
न सेहे देवकीं द्रष्टुं कश्चिदप्यतितेजसा।
जाज्वल्यमानां तां दृष्ट्वा मनांसि क्षोभमाययुः॥ ५॥
अदृष्टां पुरुषैः स्त्रीभिर्देवकी देवता गणाः।
विभ्राणां वपुषा विष्णुं तुष्टुवुस्तामहर्निशम्॥ ६॥

देवता ऊचुः

प्रकृतिस्त्वं परा सूक्ष्मा ब्रह्मगर्भाभवः पुरा।
ततो वाणी जगद्धातुर्वेदगर्भासि शोभने॥ ७॥
सूर्यस्वरूपगर्भासि सृष्टिभूता सनातनि।

---

षड्गर्भाख्यानं देवक्यां : गर्भविन्यासं क्रमेण निक्षेपम् अन्यस्य सप्तमस्य गर्भस्य देवक्या उदराद्रोहिण्या जठरं प्रतिकर्षणञ्च चक्रे॥ १॥

देवक्या गर्भ हरिः प्रविवेशेत्यन्वयः॥ २॥

परमेष्ठिना परमेश्वरेण॥ ३-५॥

तत्रस्थैः स्त्रीपुरुषैरदृष्टाः सन्तस्तुष्टुवुः॥ ६॥

फलगर्भा त्वमेवेज्या वह्निगर्भा तथारणिः।
अदितिर्देवगर्भा त्वं दैत्यगर्भा तथा दितिः॥ ९॥
ज्योत्स्ना वासरगर्भा त्वं ज्ञानगर्भासि सन्नतिः।
नयगर्भा परा नीतिर्लज्ञा त्वं प्रश्रयोद्वहा॥ १०॥
कामगर्भा तथेच्छा त्वं तुष्टिः सन्तोषगर्भिणी।
मेधा च बोधगर्भासि धैर्यगर्भोद्वहा धृतिः॥ ११॥
ग्रहर्क्षतारकागर्भा द्यौरस्यखिलहैतुकी।
एता विभूतयो देवि! तथान्याश्च सहस्त्रशः॥ १२॥
तथासङ्ख्या जगद्धात्रि! साम्प्रतं जठरे तव।
समुद्रादि-नदी-द्वीप-वन पत्तनभूषणा॥ १३॥
ग्राम-खर्वट-खैटाढ्या समस्ता पृथिवी शुभे।
समस्तवह्नयोऽम्भांसि सकलाश्च समीरणाः॥ १४॥
ग्रहर्क्षतारकाचित्रं विमानशतसङ्कुलम्।
अवकाशमशेषस्य यद्ददातिनभः स्थलम्॥ १५॥
भूर्लोकश्च भुवर्लोकः स्वर्लोकोऽथ महर्जनः।
तपश्च ब्रह्मलोकश्च ब्रह्माण्डमखिलं शुभे॥ १६॥
तदन्तरे स्थिता देवा दैत्य-गन्धर्व-चारणाः।
महोरगास्तथा यक्षा राक्षसाः प्रेतगुह्यकाः॥ १७॥

---

या ब्रह्मप्रतिबिम्बधारिणि प्रकृतिरभवत्, सा त्वमित्यन्वयः। एवंसर्वत्र॥७-९॥

ज्योत्स्ना प्रकाशः, सन्नतिः सतां नतिः गुरूपसत्तिरित्यर्थः। नयो न्यायः सामादिः गर्भे यस्य सा नीतिर्नीति-शास्त्रं त्वम्, लज्ञा अनौद्धत्येन वृत्तिः॥१०॥

कामः कामितार्थो गर्भे यस्याः सा फलाव्यभिचारिणोच्छा त्वमित्यर्थः। तुष्टिरलम्बुद्धिस्तन्निमिन्तः सन्तोषोगर्भे यस्याः सा त्वम्, धैर्यमलौ, धृतिर्बुद्धेः स्थिरता अखिलहैतुकी वृष्ट्यादिद्वारा सर्वस्य हेतुरेव हैतुकी यतः, प्रकृतिस्त्वमित्यादिनोक्ताः प्रतिनियतैकैकवस्तुगर्भास्त्व विभूतयः, इदनीन्तु पृथिव्यादिसमस्तप्रपञ्चगर्भः श्री विष्णुस्तव गर्भेऽस्तीति स्तुवन्तः प्राहुः साम्प्रतमित्यादि यावत् समाप्ति॥११-१३॥

तैरन्तः स्थैरनन्तोऽसौ सर्वेशः सर्वभावना:॥ १८॥
रूपकर्मस्वरूपाणि न परिच्छेदगोचरे।
यस्याखिलप्रमाणानि स विष्णुगर्भगस्त्व॥ १९॥
त्वं स्वाहा त्वं स्वधा विद्या सुधां त्वं ज्योतिरम्बरे।
त्वं सर्वलोकरक्षार्थमवतीर्णा महीतले॥ २०॥
प्रसीद देवि! सर्वस्य जगतः शं शुभे! कुरु।
प्रीत्या त्वं धारयेशानं धृतं येनाखिलं जगत्॥ २१॥

इति श्रीविष्णुपुराणे पञ्चमांशे द्वितीयः अध्यायः

---

रूपं तत्त्वं, कर्मलीला, स्वरूपं मूर्त्तिः, नामकर्मेति वा पाठः। यस्य रूपादीन्यखिलानि प्रमाणानि चाल्पत्वमहत्त्वादिपरिमाणानि परिच्छेदस्य निर्द्धारस्य गोचरे न वर्त्तन्ते। पाठान्तरे यस्य नामादीन्यखिलानि प्रमाणानां परिच्छेद्यानि न भवन्ति स विष्णुस्तव गर्भं प्राप्तः॥ १९-२०॥

प्रीत्या धारय, मा पुनः प्राग्गर्भसामान्यतो दृष्ट्वा विषादं कुरु॥ २१॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमेऽशें द्वितीयोऽध्यायः॥

## तृतीयोऽध्यायः

### (भगवत आविर्भावः, योगमायाद्वारा कंसस्य वञ्चना च)

एवं संस्तूयमाना सा देवैर्देवमधारयत्।
गर्भेण पुण्डरीकाक्षं जगतस्त्राणकारणम्॥ १॥
ततोऽखिलजगत्पद्मबोधायाच्युतभानुना।
देवकीपूर्वसन्ध्यायामाविर्भूतं महात्मना॥ २॥
तज्जन्मदिनमत्यर्थमाह्लाद्यमलदिङ्मुखम्।
बभूव सर्वलोकस्य कौमुदी शशिनो यथा॥ ३॥
सन्तः सन्तोषमधिकं प्रशमं चण्डमारुतः।
प्रसादं निम्नगा याता जायमाने जनार्द्दने॥ ४॥
सिन्धवो निजशब्देन वाद्यं चक्रुर्मनोहरम्।
जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः॥ ५॥
ससृजुः पुष्पवर्षाणि देवा भुव्यन्तरीक्षगाः।
जज्वलुश्चाग्नयः शान्ता जायमाने जनार्द्दने॥ ६॥
मध्यरात्रेऽखिलाधारे जायमाने जनार्द्दने।
मन्द्रं जगर्ज्जुर्जलदाः पुष्पवृष्टिमुचो द्विज॥ ७॥
फुल्लेन्दीवरपत्राभं चतुर्बाहुमुदीक्ष्य तम्।
श्रीवत्सवक्षसं जातं तुष्टावानकदुन्दुभिः॥ ८॥

---

अखिलं जगदेव पद्मं तस्य बोधाय विकाशाय अच्युतरूपेण भानुना देवस्येव पूर्वसन्ध्या तस्यामाविर्भूतम्॥ २॥

आह्लादि बभूव। अमलानि दिशा मुखानि यस्मिन् तत् कौमुदी ज्योत्स्ना॥ ३-४॥
सिन्धवः नद्यो वा॥५॥

शान्ताः सौम्याः प्रदक्षिणावर्त्ताः॥ ६॥

जगर्ज्जुः गर्ज्जितं चक्रुः॥७-८-९॥

अभिष्टूय च तं वाग्भिः प्रसन्नाभिर्महामतिः।

विज्ञापयामास तदा कंसाद्भीमो द्विजोत्तमः॥ ९॥

वसुदेव उवाच

ज्ञातोऽसि देवदेवेशं! शङ्ख-चक्र-गदाधर।

दिव्यरूपमिदं देव प्रसादेनोपसंहर॥ १०॥

अद्यैव देव! कंसोऽयं कुरुते मम घातनम्।

अवतीर्ण इति ज्ञात्वा त्वमस्मिन् मम मन्दिरे॥ ११॥

देवक्युवाच

योऽनन्तरूपोऽखिलविश्वरूपौ

गर्भेषु लोकान् वपुषा बिभर्ति।

प्रसीदतामेष स देवदेवः

स्वमाययाविष्कृतबालरूपः॥ १२॥

उपसंहर सर्वात्मन्! रूपमेतच्चतुर्भजम्।

जानातुं मावतारं ते कंसोऽयं दितिजाधमः॥ १३॥

श्रीभगवानुवाच

ततोऽहं यत् त्वया पूर्वं पुत्रार्थिन्या तदद्य ते।

सफलं देवि! सञ्जातं जातोऽहं यत् तवोदरात्॥ १४॥

---

तव भयं नास्त्येव, तथापि मयि प्रसादेन हेतुनोपसंहर॥ १०॥

तदेवाह—'अद्यैवें ' ति। 'कुरुते' इति भविष्यति वर्त्तमाननिर्देशो वर्त्तमानसामीप्ये। इति एवञ्चतुर्भुजेन रूपेणावतीर्ण ज्ञात्वा॥ ११॥

अखिलविश्वरूपः कृत्स्नजगद्रूपः॥ १२॥

दितिजाधमः दैत्येभ्योऽपि दुष्टः। दितिजात्मन इति पाठे द्रुमिलाख्येन दैत्येन उग्रसेनवेशधारिणा तद् भार्यायां कंस उत्पादित इति हरिवंशे नारदेनोक्तं ज्ञेयम्॥ १३॥

पूर्र स्वायम्भुवेऽन्तरे॥ १४॥

पराशर उवाच

इत्युक्त्वा भगवांस्तूष्णीं बभूव मुनिसत्तम।
वसुदेवोऽपि तं रात्रावादाय प्रययौ बहिः॥ १५॥
मोहिताश्चाभवंस्तत्र रक्षिणो योगनिद्रया।
मथुराद्वारपालाश्च ब्रजत्यानकदुन्दुभौ* ॥ १६॥
वर्षतां जलदानाञ्च तोयमत्युल्वणं निशि।
संछाद्यानुययौ शेषः फणेनानकदुन्दुभिम्॥ १७॥
यमुनां चातिगम्भीरा नानावर्त्तसमाकुलाम्।
वसुदेवो वहन् विष्णुं जानुमात्रवहां ययौ॥ १८॥
कंसस्य करमादाय तत्रैवाभ्यागतांस्तटे।
नन्दादीन् गोपवृन्दांश्च यमुनाया ददर्श सः॥ १९॥
तस्मिन् काले यशोदापि मोहिता योगनिद्रया।
तामेव कन्यां मैत्रेय! प्रसूता मोहिते जने॥ २०॥
वसुदेवोऽपि विन्यस्य बालमादाय दारिकाम्।
यशोदाशयने तूर्णमाजगामामितद्युतिः॥ २१॥
ददृशे च प्रबुद्धा सा यशोदा जातमात्मजम्।
नीलोत्पलदलश्यामं ततोऽत्यर्थं मुदं ययौ॥ २२॥

---

तूष्णीं बभूवेति प्राकृतबालभावोक्त्यैव कंसवधपर्यन्त पित्रोः प्रार्थनया चतुर्भुजत्वोपसंहारोऽपि कृत इति गम्यते॥ १५-१६-१७॥

आनकनुन्दुभौ वसुदेवे, व्रजति कारागाराद् बहिर्गच्छति सति। सर्व एवायं पुत्ररूपेणावतीर्णस्य विष्णोः प्रभावः इति ध्येयम्।

विष्णुं वहन्निति तद्वहनादेव जानुमात्रजलां कृत्वा ययावित्यर्थः. अयमेव हेतुः सर्वद्वारकपाटबन्धविवृतावपि द्रष्टव्यः। **'कृष्णवाहे वसुदेव आगते स्वयं व्यवर्षन्त यथा तमो रवे'**रिति शुकोक्तेः॥ १८॥

अभिमुखमागतान् नन्दादींस्तैरदृष्टः स ददर्श॥ १९-२०॥

यशोदाशयने बालं विन्यस्य तत्कन्यामादाय जगाम्। अमितद्युतिर्महाबुद्धिः॥ २१॥

आदाय वसुदेवोऽपि दारिकां निजमन्दिरम्।
देवकीशयने न्यस्य यथापूर्वमतिष्ठत* ॥२३॥
ततो बालध्वनिं श्रुत्वा रक्षिणः सहसोत्थिताः।
कंसायावेदयामासुर्देवकीप्रसवं द्विज॥२४॥
कंसास्तूर्णमुपेत्यैना ततो जग्राह बालिकाम्।
मुञ्च मुञ्चेति देवक्या सन्नकण्ठ्या निवारितः॥२५॥
सन्नकष्ठया गद्गकण्ठया निवारितोऽपि तां कन्यां जग्राह॥२५॥
चिक्षेप च शिलापृष्ठे सा क्षिप्ता वियति स्थितिम्।
अवाप रूपञ्च महत् सायुधाष्टमहाभुजम्॥२६॥
प्रजहास तथैवोच्चैः कंसञ्च रुषिताब्रवीत्।
किं मया क्षिप्तया मूढ! जातौ यस्त्वां वधिष्यति॥२७॥
सर्वस्वभूतो देवानामासीन्मृत्युः पुरा स ते।
तदेतत् सम्प्रधार्य्याशु क्रियतां हितमात्मनः* ॥२८॥

---

यथापूर्वं पादयोः श्रृंखलां प्रतिमुच्यातिष्ठत्॥२३॥

* निजमन्दिरं मथुरायामवस्थितं कंसकारागारूपं स्वमावसं प्राप्येति शेषः। न्यस्य निःक्षिप्य स्थापयित्वेत्यर्थः। अतिष्ठतेत्यात्मनेपदमार्षम्, जतिष्ठदित्यर्थः।

आकाशे स्थितिं च महद्रूपम् चावाप॥२६-२७॥

पुरा कालनेमिजन्मनि॥२८॥

* सर्वस्वेति—तेनैव सर्वदेवाधीश्वेरण देवानां सर्वाणि स्वानि सुरक्षितानि भवन्तीत्यत एव स सर्वस्वतया समुपचर्य्यत इति भावः। जथवा देवानां देवनशीलानां यत् सर्वंस्वम् ऐश्वर्य सृष्टिकर्त्तृत्वादिलक्षण तद् भूतः प्रासः। भूः प्रासर्थोऽपि पठ्यते। अथवा देवानां देववदुत्कृष्टचरितानां सत्त्वगुणप्रधानजीवानां सर्वस्वाय निखिलधनरक्षणाय सकलकल्याणयेत्यर्थः, भूतः नरादिशरीरैरवतीर्ण इत्यादि। मृत्यु जीवनान्तकर इत्यर्थः। आसीत्। आशु कालकलामप्यनतीत्य आत्मनः हितं कल्याणं क्रियतां दुष्टाचारपरिहोरेणेति शेषः, तथाहि त्वं पूर्वस्मिन् कालनेमिजन्मनि दुष्टाचारपरायणतयैव विष्णुना परमेश्वरेण विनाशितः, अद्यापि तथैव दुष्टाचारपरतया जगदपकारकत्वाद् विष्णुस्त्वां वध्यं निश्चित्य नररूपेणावतीर्णः किन्तु अद्यापि यदि त्वं चरितमन्यथा कृत्वा जगतः कल्याणं कुर्य्याः प्रतिनिंवर्त्तेथाश्चानिष्टिनिर्वर्त्तनात्तदा सम्भवेत्तव परित्राणिमिति विचार्य्य तथा वर्त्तेथा इति भावः।

इत्युक्त्वा प्रययौ देवी दिव्यस्त्रण्-गन्ध-भूषणा।
पश्यतौ भोजराजस्य स्तुता सिद्धैर्विहायसि* ॥२९॥

इति श्रीविष्णुपुराणे पञ्चमांशे तृतीयः अध्यायः॥

* स्रक् माल्यं गन्धः धृष्टचन्दनद्रवः तौ दिव्यौ अलौकिकौ स्रग्गन्धा भूषणं यस्याः सा साधारणनदुर्लभप्रशस्तामाल्यगन्धालङ्कृता। पश्यतो भोजराज स्येत्यनादरे षष्ठी, पश्चन्तं भोजराजमनादृत्येत्यर्थः। विहायसि गगने। सिद्धैरित्युपलक्षणम् देवादिभिरन्यैरपि स्तुतेत्यर्थ

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे तृतीमोऽध्यायः॥

## चतुर्थोऽध्यायः

## (कारागाराद् वसुदेव-देवक्योर्मुक्तिलाभः।)

पराशर उवाच

कंसस्ततोद्विग्नमनाः प्राह सर्वान् महासुरान्।
प्रलम्बकेशिप्रमुखानाहूयासुरपुङ्गवान्॥ १॥

कंस उवाच

हे प्रलम्ब! महाबाहो! केशिन्! धेनुक! पूतने।
अरिष्टाद्यैस्तथा चान्यैः श्रूयतां वचनं मम॥ २॥
मां हन्तुममरैर्यत्नः कृतः किल दुरात्मभिः।
मद्वीर्य्यतापितैर्वीरो न त्वेतान् गणयाम्यहम्॥ ३॥
किमिन्द्रेणाल्पवीर्येण किं हरेणैकचारिणा।
हरिणा वापि किं साध्यं छिद्रेष्वसुरघातिना॥ ४॥
किमादित्यैः किं वसुभिरल्पवीर्य्यैः किमग्निभिः।
किञ्चान्यैरमरैः सर्वैमद्बाहुबलनिर्ज्जितैः॥ ५॥
किं न दृष्टोऽमरपतिर्मया संयुगमेत्य सः।
पृष्ठेनैव वहन् वाणानपागच्छन्न वक्षसा॥ ६॥
मद्राष्ट्रे बारिता वृष्टिर्यदा शक्रेण किं तदा।
मद्वाणभिन्नैर्जलदैरापोऽमुक्ता यथेप्सिताः॥ ७॥

---

ततोद्विग्नमताः ततं विततम् उद्विग्नमुद्वेगः विततोद्वेगयुक्तचित्त इत्यर्थः। तदेति पाठः सुगमः॥ १॥

युष्माभिररिष्टाद्यैश्च मम वचः श्रूयताम्॥ २॥

किलेति प्रसिद्धौ॥ ३॥

एकचारिणा तापसेन। छिद्रेषु अनवधानादिसमयेषु॥ ४॥

पृष्ठेनैव वहन्नपागच्छत् अपलायत ॥ ६॥

किमापः अमुक्ता इति च्छेदः। नापो मुक्ता इति वा पाठः ॥ ७॥

किमर्व्यामवनीपाला मद्बाहुबलभीरवः।
न सर्वे सन्नतिं याता जरासन्धमृते गुरुम्॥८॥
अमरेषु च मेऽवज्ञा जायते दैत्यपुङ्गवाः।
हास्यं मे जायते वीरास्तेषु यत्नपरेष्वपि॥९॥
तथापि खलु दुष्टानां तेषामभ्यधिकं मया।
अपकाराय दैत्येन्द्रा यतनीयं दुरात्मनाम्॥१०॥
तद् यै यशस्विनः केचित् पृथिव्यां ये च यज्विनः।
कार्यो देवापकाराय तेषां सर्वात्मना वधः॥११॥
उत्पन्नश्चापि मृत्युर्मे भूतपर्वेः स वै किल।
इत्येद् बालिका प्राह देवकीगर्भसम्भवा॥१२॥
तस्माद् बालेषु परमो यत्नः कार्य्यो महीतले।
यत्रोद्रिक्तं बलं बाले स हन्तव्यः प्रयत्नतः॥१३॥

पराशर उवाच

इत्याज्ञाप्यासुरान् कंसः प्रविष्यात्मगृहं ततः।
मुमोच वसुदेवञ्च देवकीञ्च निरोधतः॥१४॥

कंस उवाच

युवयोर्घातिता गर्भा वृथैवैते मयाधुना।
कोऽप्यन्य एव नाशाय बालो मम समुद्गतः॥१५॥
तदलं परितापेन नूनं तद्भाविनो हि ते।
अर्भका युवयोर्दोषाद्यायुषो यद्वियोजिताः॥१६॥
इत्याश्वास्य विमुक्त्वा च कंसस्तौ परिशङ्कितः।
अन्तर्गृहं द्विजश्रेष्ठ प्रविवेश पुनः स्वकम्॥१७॥

इति श्रीविष्णुपुराणे पञ्चमांशे चतुर्थः अध्यायः॥

---

गुरुं श्वसुरं जरासन्धमृते किं सर्वे सन्नतिं न याताः? ते सर्वे इति पाठे असन्नतिमितिच्छेदः॥९-१०॥

यशस्विनो दाननिष्ठा, देवापकारायेति—तेषां वधे हविर्दातृणामभावादेव देवानां वृत्तिनाशदपकारः स्यात्। 'तस्मादितः प्रदानं देवा उपजीवन्ती'ति श्रुतेः॥११-१५॥

तत् सद्योमरणं भावि येषां ते तद्भाविनः॥१६॥

# पञ्चमोऽध्याय:

## (पूतनावध:)

पराशर उवाच

विमुक्तो वसुदेवोऽस्य नन्दस्य शकटं गत:।
प्रहृष्टं दृष्टवान् नन्दं पुत्रो जातो ममेति वै॥१॥
वसुदेवोऽपि तं प्राह दिष्टया दिष्टयेति सादरम्।
वार्द्धकेऽपि समुत्पन्नस्तनयोऽयं तवाधुना॥२॥
दत्तो हि वार्षिक: सर्वो भवद्भिर्नृपते: कर:।
यदर्थमागतास्मान्नावस्थेयं महाधना:॥३॥
यदर्थमागता: कार्यं तन्निष्पन्नं किमास्यते।
भवद्भिर्गम्यतां नन्द! तच्छीघ्रंन निजगोकुलम्॥४॥
ममापि बालकस्तत्र रोहिणीप्रसवो हि य:।
स रक्षणीयो भवता यथायं तनयो निज:॥५॥

पराशर उवाच

इत्युक्ता: प्रययुर्गोपा नन्दगोपपुरोगमा:।
शकटारोपितैर्भाण्डै: करं दत्त्वा महाबला:॥६॥
वसतां गोकुले तेषां पूतना बालघातिनी।
सुप्तं कृष्णमुपादाय रात्रौ तस्मै ददौ स्तनम्॥७॥
यस्मै यस्मै स्तनं पूतना सम्प्रयच्छति।
तस्य तस्य क्षणेनाङ्गं बालकस्योपहन्यते॥८॥

---

कंसेन बालघाताय सर्वत्र दैत्या: प्रहिता इति जानन् वसुदेवो नन्दादीन् गोकुलरक्षार्थम् प्रस्थापयितुं नन्दस्य शकटम् शकटावमोचनस्थानं गत:॥१॥

कृतकार्य्यैर्धनिकैदुष्टराजसन्निधौ न स्थेयमित्युपदिशन्नाह—'दत्तौ ही' ति द्वाभ्याम्॥३॥

किमास्यते किमत्र स्थीयते॥४॥

रोहिण्यां प्रसवो यस्य स:। निज इति स्वीयत्वेनाभिमत इति गूढोऽभिप्राय:॥५-८॥

केवलं तस्याः स्तन्यमपथ्यमिव मन्वानस्तत्प्राणसहितं पपौ॥९॥

**कृष्णस्तस्याः स्तनं गाढ़ कराभ्यामवपीड़ितम्।**
**गृहीत्वा प्राणसहितं पपौ कोपसमन्वितः॥ ९॥**
**सा विमुक्तमहारावा विच्छिन्नस्नायुबन्धना।**
**पपात पूतना भूमौ म्रियमाणातिभीषणा॥ १०॥**
**तन्नादश्रुतिसन्त्रासात् प्रवुद्धास्ते व्रजौकसः।**
**ददृशुः पूतनोत्सङ्गे कृष्णं ताञ्च निपातिताम्॥ ११॥**
**आदाय कृष्णं सन्त्रस्ता यशोदापि द्विजोत्तमः।**
**गोपुच्छं भ्राम्य हस्तेन बालदोषमपाकरोत्॥ १२॥**
**गोः करीषमुपादाय नन्दगोपोऽपि मस्तके।**
**कृष्णस्य प्रददौ रक्षां कुर्वश्चैतदुदीरयन्॥ १३॥**

**नन्दगोप उवाच**

**रक्षतु त्वामशेषाणां भूतानां प्रभवो हरिः।**
**यस्य नाभिसमुद्भूतपङ्कजादभवज्जगत्॥ १४॥**
**येनं दंष्ट्राग्रविधृता धारयत्यवनी जगत्।**
**वराहरूपधृग् देवः स त्वां रक्षतु केशवः॥ १५॥**
**नखाङकुरविनिर्भिन्न-वैरिवक्षःस्थलो विभुः।**
**नृसिंहरूपी सर्वत्र स त्वां रक्षतु केशवः॥ १६॥**
**वामनो रक्षतु सदा भवन्तं यः क्षणादभूत्।**
**त्रिविक्रमः क्रमाक्रान्त-त्रैलोक्यः स्फुरदायुधः॥ १७॥**

---

केवलं तस्याः स्तन्यमपथ्यमिव मन्वानस्तत्प्राणसहितं पपौ॥ ९॥

विच्छिन्नं स्नायुलक्षणमस्थिवन्धनं यस्याः सा। प्रथमं मायया सौम्यरूपेण प्रविष्टापीदानीं म्रियमाणा अतिभीषणा सती पपातेत्यर्थः॥ १०-१२॥

करीषं गोमयचूर्णम्॥ १३॥

प्रकर्षेण भवन्त्यस्मादिति प्रभवः॥ १४-१६॥

क्रमाः पादविन्यासाः तैराक्रान्तं त्रैलोक्यं येन, संस्फुरन्त्यायुधानि यस्य सः। ऐकपद्यपाठे त्रिभिर्विक्रमैः क्रमेणक्रान्तं त्रैलोक्य येन तथाभूतो यः क्षणादभूदित्यर्थः॥ १७॥

शिरस्ते पातु गोविन्दः कण्ठनं रक्षतु केशवः।
गुह्यञ्च जठरं विष्णुर्जङ्घा-पादौ जनार्द्दनः॥१८॥
मुखं बाहू प्रबाहू च मनः सर्व्वेन्द्रियाणि च।
रक्षत्वव्याहतैश्वर्य्यस्तव नारयणोऽव्ययः॥१९॥
शाङर्ख-चक्र-गदा-खड्ग शङ्खनादहताः क्षयम्।
गच्छन्तु प्रेत-कुष्माण्ड-राक्षसा ये तवाहिताः॥२०॥
त्वां पातु दिक्षु वैकुण्ठो विदिक्षु मधुसूदनः।
हृषीकेशोऽम्बरे भूमौ रक्षतु त्वां महीधरः॥२१॥
एवं कृतस्वस्त्ययनो नन्दगोपेन बालकः।
शायितः शकटस्याधो बालपर्य्यङ्किकातले॥२२॥
ते च गोपा महद् दृष्ट्वा पूतनायाः कलेवरम्।
मृतायाः परमं त्रासं विस्मयं परमं ययुः॥२३॥

इति श्रीविष्णुपुराणे पञ्चमाशे पञ्चमः अध्यायः॥

---

बाहू-प्रबाहू च कुर्परस्योर्द्ध्वाधोभागौ॥१८॥

कृतं स्वस्त्वयनं शान्तिकरं कर्म यस्य सः। बालपर्यङ्किका वालोचिता स्वल्पपर्यंकास्तस्यास्तले उपरि शायितः शकटस्याध इति शकटोच्चाटनप्रस्तावः॥२२-२३॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे पञ्चमोऽध्यायः॥

# षष्ठोध्यायः

## (शकटभञ्जनम्, बलदेव-कृष्णयोर्नामकरणञ्च)

पराशर उवाच

कदाचिच्छकटाधस्ताच्छयानो मधुसूदनः।
चिक्षेप चरणावूर्द्ध्वं स्तन्यार्थी प्ररुरोद च॥ १॥
तस्य पादप्रहारेण शकटं परिवर्त्तितम्।
विध्वस्तकुभ्भाण्डं वै विपरीतं पपात च॥ २॥
ततो हाहाकृतं सर्वो गोपगोपीजनो द्विज।
आजगामाथ ददृशे बालमुत्तानशायिनम्॥ ३॥
गोपाः केनित केनेदं शकटं परिवर्त्तितम्।
तत्रैवं बालकांश्चोचुर्बालेनानेन पातितम्॥ ४॥
रुदता दृष्टमस्माभिः पादविक्षेपताडितम्।
शकटं परिवृत्तं वै नैतदन्यस्य चेष्टितम्॥ ५॥
ततः पुनरतीवासन् गोपा विस्मितचेतसः।
नन्दगोपोऽपि जग्राह बालमत्यन्तविस्मितः॥ ६॥
यशोदा शकटारूढभग्नभाण्डकपालिकाः।
शकटं चार्चयामास दधि-पुष्प-फलाक्षतैः॥ ७॥
गर्गश्च गोकुले तत्र वसुदेवप्रणोदितः।
प्रच्छन्न एव गोपानां संस्कारानकरोत् तयोः॥ ८॥

---

विध्वस्तकुम्भभाण्डं विशीर्णं कुम्भाद्युपकरणम्। कूप्यभाण्डमिति पाठे कूप्यं स्वर्णरजतातिरिक्तं द्रव्यम्॥ १.-२-३॥

केन केनेति सम्भ्रमे वीप्सा॥ ४-५-६॥

शकटारूढ़ाः शकटे स्थापिताः भग्नानां भाण्डानां कपालिकाः॥ ७॥

ज्येष्ठञ्च राममित्याह कृष्णञ्चैव तथापरम्।
गर्गो मतिमतां श्रेष्ठो नाम कुर्वन् महामतिः॥ ९॥
स्वल्पेनैव हि कालेन रिङ्गिणौ तौ तदा ब्रजे।
घृष्टजानुकरौ तौ हि बभूवतुरुभावपि॥ १०॥
करीषभस्मदिग्धाङ्गौ भ्रममाणवितस्ततः।
न निवारयितुं शेके यशोदा न च रोहिणी॥ ११॥
गोवाटमध्ये क्रीडन्तो वत्सवाटगतौ पुनः।
तदहर्जातगीवत्सपुच्छाकर्षणतत्परौ॥ १२॥
यदा यशोदा तौ बालावेकस्थानचरावुभौ।
शशाक नो वारयितुं क्रीडन्तावतिचञ्चलौ॥ १३॥
यशोदा यष्टिमादाय कोपेनानुगता च तम्।
कृष्णं कमलपत्राक्षं तर्ज्जयन्ती रुषा तदा॥ १४॥
दाम्ना बद्ध्वा तदा मध्ये निबध्याथ उदूखले।
कृष्णमक्लिष्टकर्माणमाह चेदममर्षिता॥ १५॥
यदि शक्नोषि गच्छ त्वमतिचञ्चलचेष्टित।
इत्युक्त्वा च निजं कर्म सा चकार कुटम्बिनी• १६॥

---

'**गोपानां प्रच्छन्न**' इत्यत्र शुकोक्तिरनुसन्धेया। गर्भो हि गोकुलमागतो नन्देन बालयोर्नामकरणार्थं यदा प्रार्थितः, तदा तेनोक्तम्, अहं तावद् यदुकुलाचार्य्यः प्रख्यातः, त्वञ्च वसुदेवस्य प्रेष्ठः सखा। अशरीरदारिकावाक्याभ्यां देवक्याः पुत्रः स्वस्य शत्रुः क्वचिज्जातोऽस्तीति कंसो मन्यते, एवञ्च स्थिते सति मया यदुपुरोधसा नामकरणादि कृतं ज्ञात्वा देवकीपुत्र एव कथञ्चिद् गोकुलं प्राप्तो नन्देन स्वपुत्रतयाभिमत इति जातशङ्कः कंसो यदि हन्यात्तर्हि महाननर्थः स्यादिति। ततो नन्देनोक्तं मदीयैर्गोपैरप्यविज्ञातः सन् रहसि द्विजोचितं संस्कारमात्र कुर्विति. तदेवदुक्तम्,—'**प्रच्छन्न एव गोपानां संस्कारानकरोत्तयो**' रिति '**महामति**'—रिति च॥ ८-.९॥

'**रिङ्गिणा**'वित्यस्यैव विवृतिः'**घृष्टजानुकरा**' विति, जानुभ्यां कराभ्यां च भुवं संघृष्य सञ्चरन्तावित्यर्थः॥ १०॥

करीषभस्मभ्यां दिग्धाङ्गौ लिप्ताङ्गौ॥ ११-१६॥

व्याग्रायामथ तस्यां स कर्षमाण उदूखलम्।
यमलार्ज्जुनमध्येन जगाम कमलेक्षणः॥ १७॥
कर्षता वृक्षयोर्मध्ये तिर्यगागतमुदूखलम्।
भग्नावुत्तूङ्गशाखाग्रौ तेन तौ यमलार्ज्जुनौ॥ १८॥
ततः कटकाशब्दं समाकर्ण्य च कातरः।
आजगाम व्रजजनो ददृशे च महाद्रुमौ॥ १९॥
भग्नस्कन्धौ निपतितौ भग्नशाखौ महीतले।
नवोद्गताल्पदन्तांशु-सितहासञ्च बालकम्॥ २०॥
तयोर्मध्यगतं बद्धं दाम्ना गाढं तथोदरे।
ततश्च दामोदरतां स ययौ दामबन्धनात्॥ २१॥
गोपवृद्धास्ततः सर्वे नन्दगोपपुरोगमाः।
मन्त्रयामासुरुद्विग्ना महोत्पातातिभीरवः॥ २२॥
स्थानेनेह न नः कार्य गच्छामोऽन्यन्महावनम्।
उत्पाता बहवो ह्यत्र दृश्यन्ते नाशहेतवः॥ २३॥
पूतनाया विनाशश्च शकटस्य विपर्ययः।
विना वातादि-दोषेण द्रुमयोः पतनं तथा॥ २४॥
वृन्दावनमितः स्थानात् तस्माद् गच्छाम मा चिरम्।
यावद्भौमहोत्पात दोषो नाभिभवेद् ब्रजम्॥ २५॥

---

* कुटुम्बिनी परिजनवती, एतेन तस्याः कर्मान्तरपरिहारेण कृष्ण एवावधानं न सम्भवतीति व्यज्यते।

यमलोर्युग्मभूतयोरर्जुनवृक्षयोर्मध्येन॥ १७-१८॥

कटकटेति शब्दानुकृतिः॥ १९॥

नरोद्गतानामल्पानां दन्तानाम् अंशुभिः सितो हासो यस्य तं बालकञ्च ददर्शेत्यन्वयः॥ २०-२२॥

इह बृहद्वने स्थानेन वासेन॥ २३॥

भौमः भूमिविशेषवासनिमित्तौ महोत्पातरूपो दोषः॥ २५॥

इति कृत्वा मतिं सर्वे गमने ते व्रजौकसः।
ऊचुः स्वं स्वं कुलं शीघ्रं गम्यतां मा विलम्ब्यताम्॥२६॥
ततः क्षणेन प्रययुः शकटैर्गोधनैस्तथा।
यूथशो वत्सबालांश्च कालयन्तो व्रजौकसः॥२७॥
द्रव्यावयवनिर्धूतं क्षणमात्रेण तत् तथा।
काक-काकी-समीकीर्ण व्रजस्थानमभूद् द्विज॥२८॥
वृन्दावनं भगवता कृष्णेनाक्लिष्टकर्म्मणा।
शुभेन मनसा ध्यातं गवां वृद्धिमभीप्सता॥२९॥
ततस्तत्रातिरूक्षेऽपि धर्म्मकाले द्विजोत्तम।
प्रावृट्काल इवोद्भूतं नवं शस्यं समन्ततः॥३०॥
न समावासितः सर्वो ब्रजो वृन्दावने ततः।
शकटीवाटपर्य्यन्तश्चन्द्रार्द्धाकारसंस्थितिः॥३१॥
वत्सपालौ च संवृत्तौ राम-दामोदरौ ततः।
एकस्तानस्थितौ गोष्ठे-चेरतुर्बाललीलया॥३२॥
बर्हिपत्रकृतापीडौ वन्यपुष्पावतंसकौ।
गोपवेणुकृतातोद्य-पत्रवाद्यकृस्वनौ॥३३॥

---

कुलं कुटुम्बादि॥२६॥कालयन्तश्चालयन्तः॥२७॥

द्रव्याणां दध्यादीनामन्नदीनां च अवयवैः शेषैर्निर्धूतम् आकीणं सत्॥२८॥

नवम्दभुतं शस्यं बाततृणम्॥३०॥

शकटीबाटः अल्पशकटावृत्तिः पर्यन्ते यस्य सः, चन्द्रार्द्धाकारा संस्थितेः संनिवेशो यस्य सः॥३१॥

एरस्मिन्नेव क्रीडास्थाने स्थितौ॥३२॥

बर्हिपत्रकृतापीडौ मयूरपिच्छकृतशेखरौ, वन्यपुष्पावतंसकौ वन्यपुष्पमयकर्णाभरणौ। गोपोचितैरेव वेणुभिः कृतातोद्यौ सम्पादितमृगङ्गादिवाद्यकृत्यौ तौ च तौ पत्रमयौर्वाद्यैः कृतस्वनौ रचितनानाशब्दौ॥३३॥

काकपक्षधरौ बालौ कुमाराविव पावकी।
हसन्तौ च रमन्तौ च चेरतुस्तौ महाबलौ॥३४॥
क्वचिद्धसन्तावन्योन्यं क्रीड़मानौ तथापरैः।
गोपपुत्रैः समं वत्सांश्चारयन्तौ विचेरतुः॥३५॥
कालेन गच्छता तौ तु सप्तवर्षै महाव्रजे।
सर्वस्य जगतः पालौ वत्सपालौ बभूवतुः॥३६॥
प्रावृट्कालस्ततोऽतीव मेघौघस्थगिताम्बरः।
बभूव वारिधाराभिरैक्यं कुर्वन् दिशामिव॥३७॥
प्ररूढनवशस्याढ्या शक्रगोपाचिता मही।
तदा मारकतीवासीत् पद्मरागविभूषिता॥३८॥
जग्मुरुन्मार्गवाहानि निम्नगाम्भांसि सर्वतः.
मनांसि दुर्विनीतानां प्राप्य लक्ष्मीं नवामिव॥३९॥
न रेजेऽन्तरितश्चन्द्रो निर्म्मलो मलिनैर्घनैः।
सद्वाक्यावादो मूर्खाणां प्रगल्भाभिरिवोक्तिभिः॥४०॥
निगुणेनापि चापेन शक्रस्य गगने पदम्।
अवाप्यताविवेकस्य नृपस्येव परिग्रहे॥४१॥

---

काकपक्षधरौ शिखाधरौ बालौ। पावकी स्कन्दस्यांशौ शाखविशाखविव॥३४॥

एवं तौ वत्सपालौ सन्तौ कालेन गच्छता सप्तवर्षो गोपालने समर्थौ बभूवतुरित्यर्थः॥३६॥

प्रावृट्कालीनां गोपालक्रीडा वर्णयिष्यन् प्रावृषं तावद्वर्णयति—'**प्रावृडि**' त्याद्यष्टभिः। मेधैः स्थगितं छादितमम्बरं यस्मिन् सः॥३७॥

शक्रगोपैरिन्द्रगोपाख्यैर्लोहितकीटैराचिता व्याप्ता मारकतीमरकतमयीव। पद्मरागैर्लोहितैर्विभूषिता॥३८॥

मूर्खाणां वेदबाह्यानां प्रगल्भाभिः निःशङ्काभिः॥४०॥

निर्गुणेन ज्यारहितेनापि शक्रस्य चापेन। अविवेकस्य परिग्रहे स्वीकारे यथा निर्गुणनापि पुंसा प्रतिष्ठा अवाप्यते तद्वत्॥४१॥

मेघपृष्ठे बलाकानां रराज विमला ततिः।
दुवृत्ते वृत्तचेष्टेव कुलीन्सायतिशोभना॥४२॥
न बबन्धाम्बरे स्थैर्य्यं विद्युदत्यन्तचञ्चला।
मैत्रीव प्रवरे पुंसि दुर्ज्जनेन प्रयोजिता॥४३॥
मार्गा बभूवुरस्पष्टा नवशस्यचयावृताः।
अर्थान्तरमनुप्राप्ताः प्रजडानामिवोक्तयः॥४४॥
उन्मत्तशिखिसारङ्गे तस्मिन् काले महावने।
कृष्ण-रामौ-मुदा युक्तौ गोपालैश्चेरतुः सह॥४५॥
क्वचिद् गौपैः समं रम्यं गेयनृत्यरतावुभौ।
चेरतुः क्वचिदत्यर्थं शीतवृक्षतलाश्रयौ॥४६॥
क्वचित् कदम्बस्रक्-चित्रो मयूरस्रग्धरौ क्वचित्।
विचित्रौ क्वचिदास्येतां विविधैर्गिरिधातुभिः• ॥४७॥

---

ततिः पंक्तिः, दुर्वृत्ते कपटे पुंसि, कुलीनस्य वृत्तचेष्टा निष्कपटा वृतिरिव॥४२॥

अम्बरे महत्यपि विद्युत् स्थैर्य्य न बबन्ध न चकार, प्रयोजिता कृता॥४३॥

अस्पष्टाः सन्दिग्धाः जडानां मन्दानाम् अन्यद् विवक्षितान्यद् ब्रुवताम् उक्तयो यथा अर्थान्तरं प्राप्ताः सत्यः सन्दिग्धाः स्युः, तद्वत्। यद्वा प्रकृष्टानां जडानां योगिनामुक्तय इव। ते हि विवक्षितमर्थमर्थान्तराभिधानेन निगूढमिव वदन्तीत्यप्यस्पष्टास्तदुक्तः॥४४॥

तदेवं प्रावृषमनुवर्ण्य तत्कालोचितां क्रीडामाह—'**उन्मत्तेति यावत्समाप्तिः**। उन्मत्ताः शिखिनो मयूराः सारङ्गश्च भ्रमन्यो यस्मिन्॥४५॥

गौपेः सममत्यर्थं रम्यं यथा भवत्येवं गेयनृत्यरतौ चेरतुः। गेयतानरताविति पाठे तानो नाम स्वस्य गायतोऽन्येन क्रियमाणो वैणवादिश्रुतनुग्रहः। शीतवृक्षो वञ्जुलः यस्य तलम् उपान्तभूमिः तदाश्रयौ क्वचित्॥४६॥

• कदम्बस्रजा कदम्बकुसुममाल्येन चित्रौ, मयूरस्रक, मयूरपिच्छमयं माल्यं तद्धरौ। आस्येतामित्यार्षम् आसातामिति लौकिकसंस्कारसिद्धम्। गिरिधातुभिः गैरिकादिभिः।

पर्णशय्यासु संसुप्तौ क्वचिन्निद्रान्तरैषिणौ।
क्वचिद् गर्ज्जति जीमूते हाहाकाररवाद्दतौ॥ ४८॥
जायतामन्यगोपानां प्रशंसापरमौ क्वचित्।
मयूरकेकानुगतौ गोपवेणुप्रवादकौ॥ ४९॥
इति नानाविधैर्भावैरुत्तमप्रीतिसंयुतौ।
क्रीडासक्तौ वने तस्मिन् चेरतुः प्रीतमानसौ॥ ५०॥
विकाले तु समं गोभिर्गोपवृन्दसमन्वितौ।
आजग्मतुः कृष्ण-बलौ गोपवेशधरावुभौ॥ ५१॥
विकाले च यथाजोषं ब्रजमेत्य महाबालौ।
गौपेः समानैः सहितौ चिक्रीडातेऽमराविव॥ ५२॥

इति श्रीविष्णुपुराणे पञ्चमांशे षष्ठः अध्यायः॥

---

निद्रान्तरैषिणौ निद्रार्थमन्तरमवकाशमिच्छन्तौ।।४८।।

मयूरकेकानुगतौ गोपवेणुप्रवादकौ च क्वचिदास्येतामिति पूर्वेणैवान्वयः।।४९

भावैश्चेष्टाभिरभिप्रायैर्वा।।५०।।

विकाले सन्ध्यायां रात्रौ च क्रीड़ासक्तौ क्वचिद्वन एव चेरतुः।।५१।।

क्वचिद्विकाले व्रजमेत्य यथासुखं चिक्रीड़ाते।।५२।।

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे षष्ठोऽध्यायः॥

## सप्तमोऽध्यायः

## (कालियदमनम्।)

पराशर उवाच

एकदा तु विना रामं कृष्णो वृन्दावनं ययौ।
विचचार वृतो गोपैर्वन्यपुष्पस्रगुज्ज्वलः॥ १॥
स जगामाथ कालिन्दीं लोलकल्लोलशालिनीम्।
तीरसंलग्नफेनौघैर्हसन्तीमिव सर्वतः॥ २॥
तस्यां चातिमहाभीमं विषाग्निश्रृतवारिणम्।
ह्रदं कालियनागस्य ददृशेऽतीव भीषणम्॥ ३॥
विषग्निना विसरता दग्धतीरमहातरुम्।
वाताहताम्बुविक्षेप-स्पर्शदग्धविहङ्गमम्॥ ४॥
तमतीव महारौद्रं मृत्युवक्त्रमिवापरम्।
विलोक्य चिन्तयामास भगवान् मधुसूदनः॥ ५॥
अस्मिन् वसति दुष्टात्मा कालियोऽसौ विषायुधः।
यो मया निर्ज्जितस्तत्यक्त्वा दुष्टो नष्टः पयोनिधिम्॥ ६॥
तेनेयं दूषिता सर्वा यमुना सागरं गता।
न गौपेर्गोधनैर्वापि तृष्णार्त्तैरुपयुज्यते॥ ७॥

---

विषमयह्रदविलोडनेन हि कालियदमनं रामः स्वस्नेहात्र मन्येतेति रामं विनैव ययौ॥ १॥

लोलैश्चञ्चलैः कल्लोलैः शालिनीं श्लाघ्याम्। फैनैघानां शौक्ल्याद्धसन्तीमिवेत्युत्प्रेक्षा, विषाग्निना श्रृतं तप्तं वारि यस्मिन् तं ह्रदम् अतिभीषणं यथा भवत्येवम्॥ २।३॥

विसरता प्रसर्पता। वाताहतस्याम्बुनो विक्षेपात् विक्षिप्यन्ते इति विक्षेपा विप्लुषः, तेषां स्पर्शेन दग्धा विहङ्गमा यस्मिन्॥ ४-५॥

मयेति मद्विभूत्या गरुडेन निर्जितो दुष्टो भयङ्करः पयोनिधिं तत्रस्थं रमणकं द्वीपं त्यक्त्वा यो नष्टः प्रपलायितः सोऽस्मिन् वसति। दुष्टात्मा दुष्टचित्तः, मत्स्यानुकम्पिनः सौभरेः शापाद् गरुडस्यात्र प्रवेशाभावादिति शुकोक्तिः॥ ६॥

तदस्य नागराजस्य कर्त्तव्यो निग्रहो मया।
निस्त्रासास्तु सुखं येन चरेयुर्व्रजवासिनः॥८॥
एतदर्थं नृलोकेऽस्मिन्नवतारो मया कृतः।
यदेषामुतपथस्थानां कार्य्या शास्तिर्दुरात्मनाम्॥९॥
यदेनं नातिदूरस्थं कदम्बमुरुशाखिनम्।
अधिरुह्योत्पतिष्यामि ह्रदेऽस्मिन्ननिलाशिनः● ॥१०॥

पराशर उवाच

इत्थं विचिन्त्य बद्ध्वा च गाढं परिकरं ततः।
निपपात ह्रदे तत्र सर्पराजस्य वेगितः॥११॥
तेनापि पतता यत्र क्षोभितः स महाह्रदः।
अत्यर्थं दूरजातांस्तु समसिञ्चन्महीरुहान्॥१२॥
ते हि दुष्टविषज्वालातप्ताम्बुपवनोक्षिताः।
जज्वलुः पादपाः सद्यो ज्वालाव्याप्तदिगन्तराः॥१३॥
आस्फोटयामास तदा कृष्णो नागह्रदे भुजम्।
तच्छब्दश्रवणाच्चाशु नागराजोऽप्युपागमत्॥१४॥
आताम्रनयनो दुष्ट-विषज्वालाकुलैर्मुखैः।
वृतो महाविषैश्चान्यैरुरगैरनिलाशिभिः॥१५॥
नागपत्नयश्च शतशो हारिहारोपशोभिताः।

---

अगाधे ह्रदे स्थितम् सर्पस्य ह्रदक्षोभनमृते निग्रहायोगात् तत्क्षोभोपायमध्यवस्यति 'तदेन' मिति। स तु कदम्बोऽमृतमानयता गरुडेनाक्रान्तत्वान्नादह्यतेति पुराणान्तरप्रसिद्धिः॥१०॥

● उरुः विशारः शाखी वृक्षः तम्, 'विशङ्कठं पृथुबृहद् विशालं पृथुलं महत्। वड्रोरु विपुल' मिति कोषात्।

परितः क्रियते परिधीयते इति परिकरो वस्त्रं तत् प्रगाढ़ बद्ध्वा, वेगितः वेगवान्॥११॥

समसिञ्चत् सम्यक् सिषेच॥१२-१३॥

दुष्ट-विषज्ज्वालाभिराकुलैर्व्याप्तैः फणैरुपलक्षित आगमत्॥१५॥

प्रकम्पितनुक्षेपचलतकुण्डलकान्तय:॥ १६॥
ततः प्रवेष्टितः सर्पैः स कृष्णो भोगबन्धनैः।
ददंशुश्चापि ते कृष्णं विषज्वालाविलैर्मुखैः॥ १७॥
तं तत्र पतितं दृष्ट्वा सर्पभोगनपीडितम्।
गोपा व्रजमुपागम्य चुक्रुशुः शोकलालसाः॥ १८॥
एष मोहं गतः कृष्णो मग्नो वै कालियह्रदे।
भक्ष्यते सर्पराजेन तदागच्छत् पश्यत॥ १९॥
तच्छुत्वा ते तदा गोपा वज्रपातोपमं वचः।
गोप्यश्च त्वरिता जग्मुर्यशोदाप्रमुखा ह्रदम्॥ २०॥
हा हा क्वासाविति जनो गोपीनामति विह्वलः।
यशोदया स सम्भ्रान्तो द्रुतं प्रस्खलितं ययौ॥ २१॥
नन्दगोपश्च गोपश्च रामश्चाद्भुतविक्रमः।
त्वरितं यमुनां जग्मुः कृष्णदर्शनलालसाः॥ २२॥
ददृशुश्चापि ते तत्र सर्पराजवंश गतम्।
निष्प्रयत्नीकृतं कृष्णं सर्पभोगेन वेष्टितम्॥ २३॥
नन्दगोपश्च निश्चेष्टो न्यस्य पुत्रमुखे दृशौ।
यशोदा च महाभागा बभूव मुनिसत्तम॥ २४॥
गोप्यस्त्वन्या रुदन्त्यश्च ददृशुः शोककातराः।
प्रोचुश्च केशवं प्रीत्या भयकातर्य्यगद्गदम्॥ २५॥

---

हारिभिर्मनोहरैर्हारैर्हरिरुपशोभिताः, प्रकम्पितानां तनूनां क्षेपेणोत्क्षेपेण चलद्भिः कण्डलैः कान्तिः शोभा यासान्ताः॥ १६॥

भोगो देहः स एव बन्धनसाधनत्वाद् बन्धनं तत् प्रवेशितः कुण्डलीकृतैर्देहैरावेष्टित इत्यर्थः। ददंशुर्दष्टवन्तः॥ १७॥

शोकेन लालसाः साभिलाषाः—उत्सुका इत्यर्थः॥ १८॥

ब्रजं चुक्रुशुस्तदाह—'**एष**' इति॥ १९॥

द्रुतञ्च प्रस्खलितञ्च यथा भवत्येवं ययौ॥ २१॥

यशोदा च निश्चेष्टा बभूव॥ २४॥

सर्वा यशोदया सार्द्धं विशामोऽत्र महाह्रदे।
नागराजस्य नो गन्तुमस्माकं युज्यते ब्रजे॥२६॥
दिवसः को विना सूर्य्यं विना चन्द्रेण का निशा।
विना वृषेण का गावो विना कृष्णेन को ब्रजः॥२७॥
विनाकृता न यास्यामः कृष्णेनानेन गोकुलम्।
अरण्यं नापि सेव्यञ्च वारिहीनं यथा सरः॥२८॥
यत्र नेन्दीवरदलप्रख्यकान्तिरयं हरिः।
तेनापि मातुर्वासेन रतिरस्तीति विस्मयः॥२९॥
उत्फुल्ल-पङ्कज-दलस्पष्ट-कान्तिविलोचनम्।
अपश्यन्तो हरिं दीनाः कथं गोष्ठे भविष्यथ॥३०॥
अत्यन्तमधुरालापहृताशेषमनोधनाः।
न विना पुण्डरीकाक्षं यास्यामो नन्दगोकुलम्॥३१॥
भोगेनावेष्टितस्यापि सर्पराजेन पश्यत।
स्मितशोभि मुखं गोप्यः कृष्णस्यास्मद्विलोकने॥३२॥

पराशर उवाच

इति गोपीवचः श्रुत्वा रौहिणेयो महाबलः।
गोपांश्च त्रासविधुरान् विलोक्य स्तिमितेक्षणः॥३३॥
नन्दञ्च दीनमत्यर्थं न्यस्तदृष्टिं सुतानने।
मूर्च्छाकुलां यशोदाञ्च कृष्णमाहात्मसंज्ञया॥३४॥

---

शोकेन कातरा विवशाः भयकातर्य्याभ्यां गद्गदं यथा भवत्येवं प्रोचुः। यत् प्रोचुस्तदाह—'**सर्वा**' इति सप्तभिः॥२६॥

कृष्णेन विनाकृता विरहिता न यास्यामः॥२८॥

यत्रायं हरिर्नास्ति तेनापि मातुर्वासेन जननीगृहेणापि रतिर्भवतीति विस्मयोऽत्याश्चर्य्यं, कृष्णरहिते मातृगृहेऽपि सुखं नास्त्येवेत्यर्थः॥२९॥

कथं भविष्यथ स्थास्यथेति ह गोपानुवक्तव्यः॥३०॥

अत्यन्तमधुरैरालापैरपहृतमशेषं मनोरूपं धनं यासां ताः॥३१॥

त्रासविधुरान् मृत्युभयशून्यान् मर्त्तु मुद्यतानित्यर्थः ॥३३॥

किमिदं देवदेवेश! भावोऽयं मानुषस्त्वया।
व्यज्यतेऽत्यन्तमात्मानं किमनन्तं न वेत्सि यत्॥ ३५॥
त्वमस्य जगतो नाभिरराणामिव संश्रयः।
कर्त्तापहर्त्ता पाता च त्रैलोक्यं त्वं त्रयीमयः॥ ३६॥
सेन्द्र-रुद्रा-शिव-वसुभिरादित्यैर्मरुदग्निभिः।
चिन्त्यसे त्वमचिन्त्यात्मन्! समस्तैश्चैव योगिभिः॥ ३७॥
जगत्यर्थं जगन्नाथ! भारावतरणेच्छया।
अवतीर्णोऽत्र मर्त्त्येषु तवांशश्चाहमग्रजः॥ ३८॥
मनुष्यलीलां भगवान्! भजता भवता सुराः।
विडम्बयन्तस्त्वल्लीलां सर्व एव समासते॥ ३९॥
अवतार्य्य भवान् पूर्व्वं गोकुलेऽत्र सुराङ्गनाः।
क्रीडार्थमात्मनः पश्चादवतीर्णोऽसि शाश्वतः॥ ४०॥
अत्रावतीर्ण ये कृष्ण! गोपा एव हि बान्धवाः।
गोप्यश्च सीदतः कस्मात् त्वं बन्धून् समुपेक्षसे॥ ४१॥
दर्शितो मानुषो भावो दर्शितं बालचापलम्।
तदयं दम्यतां कृष्ण! दुरात्मा दशनायुधः● ॥४२॥

---

आत्मसंज्ञया स्वसङ्केतेन कृष्णमाह, किमाहेत्यपेक्षायां तदाह—'**किमिद**' मित्यष्टभिः आत्मानम् अनन्तं किं न वेत्सि नानुसन्धत्से? यदित्युत्तरेणान्वेति॥ ३५॥

यस्मात्त्वमस्य जगतः संश्रयः आधारः आराणां नाभिरिव '**यस्मिन प्रतिष्ठितां रथनाभाविवारा**' इति श्रुतेः॥ ३६॥

जगत्यर्थं भूमेर्हितार्थम्॥ ३८॥

मनुष्यालीलां भजता भवता हेतुभूतेन गोपवेशाः सुरा एव त्वल्लीलां बिडम्बयन्तोऽनुकुवन्तस्त्वया सह क्रीडमाना वर्त्तन्ते, तथा सुराङ्गनाश्च भवानेवावतारितवान्॥ ३९-४०॥

अतोऽस्मदर्थे जातानेतान्नोपेक्षस्व॥ ४१॥

चत्वारिंशश्लोके श्रीधरटीकायां क्रीडमाना वर्त्तन्त इत्यत्र क्रीडन्तो वर्त्तन्त इति साधु। क्रीडे परस्मैपदित्यनेन तदुत्तरं शानच्प्रत्ययस्यासाधुत्वात्।

पराशर उवाच

इति संस्मारितः कृष्णः स्मितभिन्नोष्ठसंपुटः।
आस्फोटय मोचयामास स्वदेहं भोगबन्धनात्॥४३॥
आनम्य चापि हस्ताभ्यामुभाभ्यां मध्यमं फणम्।
आरुह्याभुग्नशिरसः प्रननर्त्तोरुविक्रमः॥४४॥
व्रणाः फणेऽभवंस्तस्य कृष्णस्याङ्घिनिकुट्टनैः।
यत्रोन्नतिञ्च कुरुते ननामास्य ततः शिरः॥४५॥
मूर्च्छामुपाययौ भ्रान्त्या नागः कृष्णस्य रेचकैः।
दण्डपातनिपातेन ववाम रुधिरं बहु॥४६॥
तन्निर्भिन्नशिरोग्रीवमास्येभ्यः स्रुतशोणितम्।
विलोक्य शरणं जग्मुस्तत्पत्न्यो मधुसूदनम्॥४७॥

नागपत्न्य ऊचुः

ज्ञातोऽसि देवदेवेश! सर्वेशस्त्वमनुत्तम।
परं ज्योतिपचिन्त्यं यस्तदंशः परमेश्वरः॥४८॥

---

अभुग्नशिरसः अनम्रशिरसः आभुग्नशिरस इति वा च्छेदः, अवनतफणस्येत्यर्थः॥

नृत्यच्छलेनाङ्घ्रिभ्यां निकुट्टनैः संघटनैः ननाम नमयामासेत्यर्थः।।४३

कृष्णस्य भ्रान्त्या नृत्यलीलाभ्रमणेन मूर्च्छा नागः प्राप्तः दण्डवत् पादो दण्डवात्ः तस्य निपातः तीव्रप्रहारः। पाठान्तरे तद्वतपादनिपातेनेति स एवार्थः। यद्वा भ्रान्तिरेचकदण्डपादख्या नृत्योक्ताः पादन्यासविशेषाः, यदाह भरतः,—अन्तर्भ्रमरिका ज्ञेया भ्रमरी बाह्यपूर्विका। अलग्नभ्रमरीव स्यादुचितभ्रमरी तथा। चित्रभ्रमरिका चैव वक्रभ्रमरिका तथा। निपातभ्रमरी चेति भ्रमाः सप्त प्रकीर्त्तिताः। पार्श्वे पार्श्वे च गमनं स्खलितैः स्थलितैः पुनः। विविधैश्चैव पादस्य पादरेचक उच्यते। नूपुरं चरणं कृत्वा पुरतः सम्प्रसारयेत्। क्षिप्रमाविद्धकार्य्यङ्ग दण्डपादेति सा स्मृते'ति॥४५-४६॥

न विद्यते उत्तमो' यस्मात् हे अनुत्तम परं ज्योतिः स्वप्रकाशं यद्ब्रह्म यश्च तस्यांशः परमेश्वरः स त्वमिति ज्ञातोऽसि॥४७॥

एवं चेन्मदीयं तत्त्वं वर्णयतेति चेत्तत्राहुः—'ने' ति द्वाभ्याम्। अनन्येषु भवतीत्यनन्यभवस्तस्य स्वरूपवर्णनं योषिदस्मादृकं कथं करिष्यति॥४८॥

न समर्थाः सुराः स्तोतुं यमनन्यभवं प्रभुम्।
स्वरूपवर्णनं तस्य कथं योषित् करिष्यति॥४९॥
यस्याखिलं मही-व्योम-जलाग्नि-पवनान्तकम्।
ब्रह्माण्डमल्पकांशांश-स्तोष्यामस्तं कथं वयम्॥५०॥
यतन्तो न विदुर्नित्यं यत्स्वरूपं हि योगिनः।
परमार्थमणोरल्पं स्थूलात् स्थूलं नताः स्म तत्॥५१॥
न यस्य जन्मने धाता यस्य नान्ताय चान्तकः।
स्थितिकर्त्ता न चान्योऽस्ति यस्य तस्मै नमः सदा॥५२॥
कोपः स्वल्पोऽपि ते नास्ति क्षितिपालनमेव ते।
कारणं कालियस्यास्य दमने श्रूयतामतः॥५३॥
स्त्रियोऽनुकम्प्याः साधूनां मूढा दीनाश्च जन्तवः।
यतस्ततोऽस्य दीनस्य क्षम्यतां क्षमतां वर॥५४॥
समस्त-जगदाधारो भवानल्पवलः फणी।
त्वया च पीडितो जह्यान्मुहूर्त्तार्द्धेन जीवितम्॥५५॥
क्व पन्नगोऽल्पवीर्य्योऽयं क्व भवान् भुवनाश्रयः।
प्रीति-द्वेषौ सोमत्कृष्ट-गौचरौ च यतौऽव्ययः॥५६॥
ततः कुरु जगत्स्वामिन्! प्रसादमवसीदतः।
प्राणांस्त्यजति नागोऽयं भर्त्तृशिक्षा प्रदीयताम्॥५७॥

---

यस्य स्थितिकर्त्ता अन्यो नास्ति विष्ण्वन्तराभावात्॥५१॥

एवं स्तुत्वा तद्रक्षां प्रार्थयन्ते—'**कोप**' इति। कोपेन चेदस्य दमनं स्यात्तर्हि कोपाधिक्ये वधोऽपि युक्तः स्यात् लोकरक्षणार्थे तु दमने दमनानन्तरं क्षमैव युक्ता इत्यर्थः॥५२-५५॥

न तव द्वेषास्यायं विषय इत्याहुः—यथा प्रीतिः समगोचरा एवं द्वेष उत्कृष्टगोचरन्, तु दीने द्वेषो युक्तः॥५६॥

यत् एवं ततोस्य दीनस्य प्रसादमेव कुरु, न चात्र विलम्बः कार्य इत्याहुः—'**प्राणा**' निति॥५७॥

पराशर उवाच

इत्युक्ते ताभिराश्वस्य क्लान्तदेहोऽपि पन्नगः।
प्रसीद देवदेवेति प्राह वाक्यं शनैः शनैः॥५८॥

कालिय उवाच

तवाष्टगुणमैश्वर्यं नाथ! स्वाभाविकं बलम्।
निरस्तातिशयं यस्य तस्य स्तोष्यामि किन्त्वहम्॥५९॥
त्वं परस्त्वं परस्याद्यः परं त्वत्तः परात्मकः।
परस्मात् परमो यस्त्वं ततः स्तोष्यामि किं न्वहम्॥६०॥
यस्माद् ब्रह्मा च रुद्रश्च चन्द्रेन्द्रमरुतोऽश्विनौ।
वसवश्च सहादित्यैस्तस्य स्तोष्यामि किं न्वहम्॥६१॥
एकावयवसूक्ष्मांशो यस्यैतदखिलं जगत्।
कल्पनावयवस्त्वेष तं स्तोष्यामि कथं न्वहम्॥६२॥

---

ताभिर्भर्त्तृभिक्षा प्रदीयतामित्युक्ते कृष्णस्यांघ्रिकुट्टनादिशैथिल्यमिवालक्ष्य किञ्चिदाश्वस्य न हनिष्यतीति विश्वस्य कालियः शनैः प्राह॥५८॥

यस्य तवाष्टगुणं परं निरतिशयम् ऐश्वर्य तस्याष्टगुणैश्वर्य्यं किमहं स्योष्यामि? नैकदेशमपि स्तोतुं समर्थ इति भावः॥५९॥

निरतिशयैश्वर्यमेव दर्शयन्नाह—'त्व' मिति। त्वं परः सर्वोत्कृष्टः, एतदेवाह— परस्य हिरण्यगर्भरयाद्यो जनकस्त्वम्, ''**यो ब्रह्माणं विदधाति पूर्व**' मिति श्रुतेः, तत्र हेतुः— परमव्यक्त त्वत्तः प्रवर्त्तते, हे परात्मक! तत्प्रेरकेश्वरूप! तत् कुत इत्यत्राह— परस्मादिन्द्रियादेः परमो यस्त्वम्, ''**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः।**'' इति श्रुतेरित्यर्थः। पाठान्तराण्यप्यनयैव रीत्या व्याख्येयानि॥६०॥

यदीयस्यैकस्यावयवस्य सूक्ष्मांशोऽखिलमिदं जगत्। ननु चिदात्मकस्य जडं जगत् कथमंशः स्यात् तत्राह—'**कल्पने**'ति, उपासनार्थाः कल्पनामया अवयवा यस्य सः, '**पादोऽस्य विश्वा भूतानी**' त्यादिश्रुतेः॥६२॥

सदसद्रूपिणो यस्य ब्रह्माद्यास्त्रिदशोत्तमाः।
परमार्थं न जानन्ति तस्य स्तोष्यामि किं त्वहम्॥ ६३॥
ब्रह्माद्यैरचर्यते दिव्यैर्यश्च पुष्पानुलेपनैः।
नन्दनादिसमुद्भूतैः सोऽच्चर्य्यते वा कथं मया॥ ६४॥
यस्यावताररूपाणि देवराजः सदार्चति।
न वेत्ति परमं रूपं सोऽच्चर्य्यते वा कथं मया॥ ६५॥
विषयेभ्यः समाहृत्य सर्वाक्षाणि च योगिनः।
समर्चयति ध्यानेन सोऽचर्यते वा कथं मया॥ ६६॥
हृदि सङ्कल्प्य यद्रूपं ध्यानेनार्चन्ति योगिनः।
भावपुष्पादिना नाथ! सोऽच्चर्य्यते वा कथं मया॥ ६७॥
सोऽहं ते देवदेवेश! नार्चनायां स्तुतौ न च।
सामर्थ्यवान् कृपामात्र-मनोवृत्तिः प्रसीद मे॥ ६८॥
सर्पजातिरियं क्रूरा यस्यां जातोऽस्मि केशव।
ततस्वभावोऽयमत्रास्ति नापराधो ममाच्युत॥ ६९॥
सृज्यते भवता सर्वं तथा संह्रयते जगत्।
जाति-रूप-स्वाभावश्च सृज्यन्ते जगतां त्वया॥ ७०॥

---

सदसद्ँरूपाणि: कार्यकारणात्मकस्य॥ ६३॥

पूर्वश्लोकार्थप्रपञ्चः—'**हृदी**' ति। भावपुष्पादिना मनोमयपुष्पधूपाद्युपचारेण। यद्वा भावेनाहिंसादिमयेन पुष्पाष्टकादिना, तदुक्तम्—"**अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः. सर्वभूतदया पुष्पं दमः पुष्पं विशिष्यते। शमः पुष्पं तपः पुष्पं ध्यानं पुष्पञ्च सप्तमम्। सत्यं वै चाष्टमम् पुष्पमेतैस्तुष्यति केशव**" इति॥ ६७॥

तदेवं स्तुत्वा प्रसादं प्रार्थयते—**सोऽह**' मिति। कृपमात्रा केवलं करुणामयी मनोवृत्तिर्यस्य तथा भूतः सन् प्रसीद। क्रियामात्रेति पाठे केवलं तदर्चनादिक्रियायां मनोरथ एव न तु सामर्थ्य यस्येत्यर्थः॥ ६८॥

त्वं दण्ड्य एव, न न्वनुकम्प्यः क्रूरत्वादिति चेत्तत्राह '**सर्पजाति**' रिति षड्भिः॥ ६९॥

जातिरूपस्वभावाश्च—जाति सर्पत्वादिः, रूपं फणित्वादि, स्वभावः क्रौर्यादि।।७०-७१

यथाहं भवता सृष्टो जात्या रूपेण चेश्वर।
स्वभावेन च संयुक्तस्तथेदं चेष्टितं मम॥७१॥
यदन्यथा प्रवर्त्तेयं देवदेव! ततो मयि।
न्याय्यो दण्डनिपातो वै तवैव वचनं यथा॥७२॥
तथापि यज्जगत्स्वामी दण्डं पातितवान् मयि।
स सोढ़ोऽयं वरं दण्डस्त्वत्तो नान्यत्र मे वरः॥७३॥
हतवीर्य्यो हतविषो दमितोऽहं त्वयाच्युत।
जीवितं दीयतामेकमाज्ञापय करोमि किम्॥७४॥

श्रीभगवानुवाच।

नात्र स्थेयं त्वया सर्वं! कदाचिद् यमुनाजले।
सभृत्यपरिवारस्त्वं समुद्रसलिलं व्रज॥७५॥
मत्पदानि च ते सर्प! दृष्ट्वा मूर्द्धनि सागरे।
गरुडः पन्नगरिपुस्त्वयि न प्रहरिष्यति॥७६॥

पराशर उवाच

इत्युक्त्वा सर्पराजानं मुमोच भगवान् हरिः।
प्रणम्य सोऽपि कृष्णाय जगाम पयसां निधिम्॥७७॥
पश्यतां सर्वभूतानां सभृत्यापत्यबान्धवः।
समस्यभार्य्यासहितः परित्यज्य स्वकं ह्रदम्॥७८॥
ततः सर्वं परिष्वज्य मृतं पुनरिवागतम्।
गोपा मूर्द्धनि गोविन्दं सिषिचुर्नेत्रजैर्जलैः॥७९॥

---

तवैव वचनं श्रुतिस्मत्यादि यथाः 'परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥' इत्यादि. साधुत्वञ्च त्वदादिष्टकर्माचरणम्, तदेव मया कृतं नान्यदित्यर्थः॥७२॥

त्वत्तो दण्डोऽपि वरं श्लाघ्यत्वात्। त्वदन्यतो वरोऽपि न श्लाध्यः। मामेत्ययं वरमिति पाठे दण्डमिषेणायं वर एव त्वत्तो मामुपैति॥७३॥

गोपा नन्दाद्याः हार्द्देन इति पाठे प्रीत्या मिलिताः सिषिचुः॥७९॥

कृष्णमक्लिष्टकर्म्माणमन्ये विस्मितचेतसः।
तुष्टुवुर्मुदिता गोपा दृष्टा शिवजलां नदीम्॥८०॥
गीयमानः स गोपीभिश्चरितैश्चारुचेष्टितैः।
संस्तूयमानो गोपैस्तु कृष्णो व्रजमुपागमत्॥८१॥

इति श्रीविष्णुपुराणे पंचमांशे सप्तमः अध्यायः॥

---

अन्ये श्रीदामाद्याः सवयसो गोपास्तुष्टुवुः॥८०॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे सप्तमोऽध्यायः॥

# अष्टमोऽध्याय:

## (धेनुकासुरवध:)

पराशर उवाच

गा: पालयन्तौ च पुन: सहितौ बल-केशवौ।
भ्रममाणौ वने तस्मिन् रम्यं तालवनं गतौ॥१॥
तत्तु तालवनं दिव्यं धेनुको नाम दानव:।
मृगमांसकृताहार: सदाध्यास्ते खराकृति:॥२॥
तत्तु तालवनं पक्व-फलसम्पत् समन्वितम्।
दृष्ट्वा स्पृहान्विता गोपा: फलोदानेऽब्रु वन् वच:॥३॥
हे राम! हे कृष्ण! सदा धेनुकेनैष रक्ष्यते।
भूप्रदेशो यतस्तस्मात् पक्वानीमानि सन्ति वै● ॥४॥
फलानि पश्य तालानां गन्धामोदितदींशि च।
वयमत्तुमभीप्साम: पात्यन्तां यदि रोचसे॥५॥
इति गोपकुमाराणां श्रुत्वा सङ्कर्षणो वच:।
कृष्णश्च पातयामास भुवि तालफलानि वै॥६॥
फलानां पततां शब्दमाकर्ण्य स दुरासद:।
आजगाम सुदुष्टात्मा कोपाद् दैतेयगर्द्दभ:● ॥७॥

---

फलानामादाने स्पृहान्विता: सन्तोऽब्रुवन्।।३-४।।

इमानि पक्वानि फलानि सन्तीति-धेनुकेन एतेषामन्यतो क्षणाद् वृक्ष एव सुचिरं तेषामवस्थानेन पाकावसरलाभादिति भाव:। अत्तुं भोक्तुम् इमानि फलानीति शेष:। रोचसे कामयसे, धातूनामनेकार्थत्वात्।

पातयामास बाहुभ्यामिति ज्ञेयम्, '**बाहुभ्यां तालान् सम्परिकम्पयन्निति शुकोक्ते:**'।।६-७।।

दैतेयगर्द्दभ धेनुकदैत्य:।

पद्भ्यामुभाभ्यां स तदा पश्चिमाभ्यां बली बलम्।
जघानोरसि ताभ्याञ्च स च तेनाप्यगृह्यत • ॥८॥
गृहीत्वा भ्रामणेनैव सोऽम्बरे गतजीवितम्।
तस्मिन्नेव च चिक्षेप वेगेन तृणराजनि• ॥९॥
ततः फलान्यनेकानि तालाग्रान्निपतन् खरः।
पृथिव्यां पातयामास महावातोऽम्बुदानिव• ॥१०॥
अन्यानप्यस्य रै ज्ञातीनागतान् दैत्यगर्द्दभान्।
कृष्णश्चिक्षेप तालाग्रे बलभद्रश्च लीलया॥ ११॥
क्षणेनालङ्कृता पृथ्वी पकैस्तालफलैस्तथा।
दैत्यगर्द्दभदेहैश्च मैत्रेय! शुशुभेऽधिकम्॥ १२॥
ततो गावो निराबाधास्तस्मिंस्तालवने द्विज।
नवशस्यं सुखं चेरूर्यत्र भुक्तमभूत् पुरा• ॥१३॥

इति श्रीविषणुपुराणे पञ्चमांशे अष्टमः अध्यायः॥

---

ताभ्यां तयोः पादयोः, स च धेनुकस्तेन राम्णागृह्यत॥८॥

• पशिमाभ्यां पश्चाद्भागस्थिताभ्यां पद्भ्यां चरणाभ्याम्। उरसि वक्षसि अवच्छेदे सप्तमी।

गृहीतत्वा धेनुकं स रामस्तृणराजनि ताले च चिक्षेप॥९॥

• तृणराज इत्यदन्ततया वक्तव्ये तृणराजनीत्यार्षम्। तृणराजनि ताले इति श्रीधरव्याख्या, **'तृणराजह्वयस्ताल'** इति कोषात्।

• खरः गर्द्दभाकृतिर्धेनुकासुर। महावातः प्रबला वात्या अम्बुदानिव जलदानिव।

महावातेरितानि वेति पाठे वा-शब्द उपमार्थः॥१०-१३॥

• निः न विद्यते आबाधा विशेषविघ्नो यासां ताः। सुखम् अनायासं यथा स्यात् तथा चेरुः प्रापुः भोजनार्थमिति शेषः। सर्वेषामेव गत्यर्थधातूनां प्राप्त्यर्थत्वस्यानुशिष्टेः।

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमांशे अष्टमोऽध्यायः॥

# नवमोऽध्यायः

## (प्रलम्बासुरवधः)

पराशर उवाच

तस्मिन् रासभदैतेये सानुगे विनिपातिते।
सेव्यं गो-गोप-गोपीनां रम्यं तालवनं बभौ॥ १॥
ततस्तौ जातहर्षौ तु वसुदेवसुतावुभौ।
हत्वा धेनुकदैतेयं भाण्डीर-वटमागतौ॥ २॥
क्ष्वेडमानौ प्रगायन्तौ विचिन्वन्तौ च पादपान्।
चारयन्तौ च गा दूरे व्याहरन्तौ च नामभिः॥ ३॥
निर्योगपाशस्कन्धौ तौ वनमालाविभूषितौ।
शुशुभाते महात्मानौ बालश्रृङ्गाविवर्षभौ॥ ४॥
सुवर्णाञ्जनवर्णाभ्यां तौ तदा रुषिताम्बरौ।
महेन्द्रायुद्धसंयुक्तौ श्वेतकृष्णाविवाम्बुदौ • ॥५॥

---

भाण्डीराख्यं वटम्॥ १॥

क्ष्वडमानौ सिंहवन्नदन्तौ, 'क्ष्वेडा तु सिंहनादः स्या' दित्याभिधानात्। विचिन्वन्तौ वृक्षारोहक्रीडार्थमन्विच्छन्तौ, दूरे स्थितौ सन्तौ गा व्याहरन्तौ आह्वयन्तौ॥ २॥

निर्यज्यन्ते निबध्यन्ते दुह्यमाना गाव एभिरिति निर्योगाः पादबन्धनरज्जवः अधृष्यगवां धर्षणार्थाः पाशाश्च स्कन्धे ययोः तौ निर्योगपाशस्कन्धौ। बालश्रृङ्गाविति वयोविशेषस्य लक्षणम्॥ ३॥

• सुवर्णञ्जनवर्णाभ्यामिति-द्वन्द्वात् परः श्रूयमाणः प्रत्येकसभिसम्बध्यत इति नियमाद् यथायोग्य सुवर्णवर्णेन पीतवर्णेन अञ्जनवर्णेन नीलवर्णेन च रुषिताम्बरौ। कृष्णस्य पीताम्बरस्य वस्त्रं पीतवर्णरञ्जितम् नीलाम्बरस्य बलरामस्य वस्त्रञ्च नीलाञ्जनवर्णमिति ध्येयम्। महेन्द्रायुधस्य नानावर्णरञ्जितत्वाद् बलदेवकृष्णयोश्च यथाक्रमं श्वेतकाय कृष्णकायत्वात् महेन्द्रधनुषः पीतांशयुक्तेन कृष्णाम्बुदेन पीताम्बरस्य श्रीकृष्णस्य, नीलांशयुक्तेन श्वेताम्बुदेन समञ्ज नीलाम्बरस्य बलरामस्य सादृश्यं प्रतिपत्तव्यम्।

चेरतुर्लोकसिद्धाभिः क्रीडाभिरितरेतरम्।
समस्तलोकनाथानां नाथभूतौ भुवं गतौ॥६॥
मनुष्यधर्माभिरतौ मानयन्तौ मनुष्यताम्।
तज्जातिगुणयुक्ताभिः क्रीडाभिश्चेरतुर्वनम्॥७॥
ततः स्यन्दोलिकाभिश्च नियुद्धैश्च महाबलौ।
व्यायामं चक्रतुस्तत्र क्षेपणीयैस्तथाश्मभिः॥८॥
तल्लिप्सुरसुरस्तत्र ह्युभयो रममाणयोः।
आजगाम प्रलम्बाख्यो गोपवेशतिरोहितः॥९॥
सोऽवगाहत् निःशङ्कस्तेषां मध्यममानुषः।
मानुषं वपुरास्थाय प्रलम्बो दानवोत्तमः॥१०॥
तयोश्छिद्रान्तरं प्रेप्सुरविषह्यममन्यत।
कृष्णं ततो रौहिणेयं हन्तु चक्रे मनोरथम्॥११॥
हरिणाक्रीडनं नाम बालक्रीडनकं ततः।
प्रकुर्वन्तो हि ते सर्वे द्वौ द्वौ युगपदुत्पतन्॥१२॥
श्रीदाम्नां सह गोविन्दः प्रलम्बेन तथा बलः।
गोपालैरपरैश्चान्ये गोपालाः पुप्लुवुस्ततः॥१३॥

---

रुषिताम्बरौ रञ्जितवस्त्रौ महेन्द्रायुधमिन्द्रधनुस्तत्संयुक्तावम्बुदाविव॥५।६।७॥

स्यन्दोलिकाभिः गोपहस्तमयदोलारोहणैर्वृक्षशाखादिमद्दोलाक्रीडाभिर्वा। नियुद्धैर्बाहुयुद्धैः व्यायामं श्रमम्॥८॥

तल्लिप्सुः तौ जिघृक्षुः। **'गोपवेशेन तिरोहितः असुरोऽसावित्यलक्षितः'**॥९॥

अवगाहत प्राविशदित्यर्थः॥१०॥

छिद्रान्तरप्रेप्सुः प्रमादावसरं प्रतीक्षमाणः, अविषह्यमधृष्यम्॥११॥

हरिणाक्रीडनं उत्प्लुत्योत्प्लुत्य गमनम्, यत्र द्वयोः सहोत्प्लुतयोर्यः पुरतो याति, स जेता, इतरस्तु जितः। यत्र च जितो जेतारं वहन् भाण्डीरकं वटं नीत्वा पुनः उत्प्लुतिस्थानं नयेदिति पणबन्धः उत्पतन् उत्पतन्तः॥१२॥

श्रीदामानं ततः कृष्णः प्रलम्बं रोहिणीसुतः।
जितवान् कृष्णपक्षीयैर्गोपैरन्ये पराजिताः॥ १४॥
ते वाहयन्तस्त्वन्योन्यं भाण्डीरस्कन्धमेत्य वै।
पुनर्निववृतुः सर्वे ये यैश्चात्र पराजिताः॥ १५॥
सङ्कर्षणन्तु स्कन्धेन शीघ्रमुत्क्षिप्य दानवः।
न तस्थौ स जगामैव सचन्द्र इव वारिदः● ॥ १६॥
असहन् रौहिणेयस्य स भारं दानवोत्तमः।
ववृधे सुमहाकायः प्रावृषीव बलाहकः॥ १७॥
सङ्कर्षणस्तु तं दृष्ट्वा दग्धशैलोपमाकृतिम्।
स्रग्दामलम्बाभरणं मुकुटाटोपमस्तकम्॥ १८॥
रौद्रं शकटचक्राक्षं पादन्यास-चलत्क्षितिम्।
ह्रियमाणस्ततः कृष्णमिदं वचनमब्रवीत्॥ १९॥
कृष्ण! कृष्ण! ह्रियाम्येष पर्वतोदग्रमूर्त्तिना।
केनापि पश्य दैत्येन गोपालच्छद्मरूपिणा॥ २०॥
यदत्र साम्प्रतं कार्यं मया मधुनिषूदन।
तत् कथ्यतां प्रयात्येष दुरात्मा दानवाधमः॥ २१॥

---

पुप्लुवुः उत्प्लुतवन्तः। तत्र प्रलम्बः श्रीदामपक्षीयः॥ १३-१७॥

चन्द्रेण सह वर्त्तमानः सचन्द्रः चन्द्रसहितः वारिदः जलपूर्णमेघ इव। जलपूर्णमेघस्य कार्ष्ण्यात् कृष्णवर्णे प्रलम्बासुरे तत्साम्यम्, चन्द्रस्य शुभ्रत्वाच्च शुभ्रवर्णे बलरामे तत्साम्यमिति ध्येयम्। चन्द्रस्य वारिदेन सह चलनाभावेऽपि अभिमानतस्तथोक्तिः।

दग्धशैलोपमा तादृशी आकृतिर्यस्य तम्। स्रगभिर्ग्रथितं स्थूलं दाम स्रग्दाम तदेव लम्बमाभरणं यस्य तम्। मुकुटेनाटोपि संरम्भयुक्तं मस्तकं यस्य तम्॥ १८॥

रौद्रं घोरं शकटस्य चक्रे इव अक्षिणी यस्य तम् पादन्यासेन चलन्ती क्षितिर्यस्य तम्॥ १९॥

ह्रियामि ह्रिये कर्मणि परस्मैपदमार्षम्, पर्वतवदुदग्रा उन्नता मूर्त्तिर्यस्य तेन॥ २०-२१॥

पराशर उवाच

**तमाह रामं गोविन्दं स्मितभिन्नौष्ठसम्पुटः।**
**महात्मा रौहिणेयस्य बलवीर्यप्रमाणवित्॥ २२॥**
**किमयं मानुषो भावो व्यक्तमेवावलम्ब्यते।**
**सर्वात्मन्! सर्वगुह्यानां गुह्यगुह्यात्मना त्वया॥ २३॥**
**स्मराशेषजगद्बीजकारणं कारणाग्रजम्।**
**आत्मानमेकं तद्वच्च जगत्येकार्णवे च यत्॥ २४॥**
**किन्न वेत्सि यथाहञ्च त्वञ्चैकं कारणं भुवः।**
**भारावतारणार्थाय मर्त्यलोकमुपागतौ॥ २५॥**
**नमः शिरस्तेऽम्बुमयी च मूर्तिः पादौ क्षितिर्वक्त्रमनन्तवह्निः।●**
**सोमो मनस्ते श्वसितं समीरो दिशश्चतस्रोऽव्ययः!बाहवस्ते॥ २६॥**
**सहस्रवक्त्रो भगवान् महात्मा सहस्रहस्ताङ्घ्रि शरीरभेदः।**
**सहस्रपद्मोद्भवयोनिराद्यः सहस्रशस्त्वां मुनयो गृणन्ति॥ २७॥**

---

पूर्वं कालियभोगाततं मां '**किमात्मानं परमेश्वर न वेत्सी**'ति तत्त्वं संस्मा' स्वयमिदानीं मूह्यतीति विस्मयात् स्मितेन भिन्नमोष्ठसम्पुटं यस्य सः॥ २२॥

सर्वात्मनः सर्वरूपगुह्यनां सर्वेषां सूक्ष्माणां कारणानां गुह्यकारणभूतः। अतः एव गुह्यात्मना प्रलयोऽप्यवशिष्यमाणचैतन्यरूपेण॥ २३॥

एतत् प्रपंचयन्नाह—'**स्मरे**'ति द्वाभ्याम्। अशेषजगदबीजकारणं, सर्वजगन्मूलस्याव्यक्तस्यापि कारणमात्मां तं स्मर, तत्र हेतुः कारणस्याग्रजम् अव्यक्तस्यापि प्रवर्त्तकतया पूर्वं स्थितं, तद्वच्च तथैव जगत्येकार्णवे प्रलीनावस्थे सति यदेकमवशिष्यते तदेवाहमित्यात्मानं स्मर॥ २४-२५॥

विराड् रूपेण स्तौति—'**नम**' इति॥ २६॥

• न विद्यते अन्तः नाशो यस्य तत् सम्बोधनमनन्तेति, न विद्यते व्ययः विनाशो यस्य तत्सम्बोधनमव्ययेति, एवमेकार्थकपदद्वयेन सम्बोधनात् त्वमविनश्वर एवेति पुनः पुनस्त्वां स्मारयामि तदलमस्माद् दानवादात्मनो वृथा विपदमाशंकयेति भावो गम्यः।

तदाधारविश्वरूपेण स्तौति —'**सहस्रवक्त्र**' इति। सहस्रमपरिमिता हस्तांघ्रिशरीराणां भेदा यस्य, शरीरमुदरम्। सहस्रपद्मोद्भवा ब्रह्माणस्तेषां योनिजनकः॥ २७॥

**दिव्यं हि रूपं तव वेत्ति नान्यो देवैरशेषैरवातररूपम्।**

**तवाच्यर्यते वेत्सि न किं यदन्ते त्वय्येव विश्वं लयमभ्युपैति॥ २८॥**

**त्वया धृतेयं धरणी बिभर्ति चराचरं विश्वमनन्तमूर्त्ते।•**

**कृतादिभेदैरज! कालरूपो निमेषपूर्वो जगदेतदत्सि॥ २९॥**

**अत्तं यथा वाडववह्निनाम्बु हिमस्वरूपं परिगृह्य कास्तम्।**

**हिमाचले भानुमतोऽशुसङ्गाज्जलत्वमभ्येति पुनस्तदेव॥ ३०**

**एवं त्वया संहरणेऽत्तमेतज्जगत् समस्तं पुनरप्यवश्यम्।**

**तवैव सर्गाय समुद्यतस्य जगत्त्वमभ्येत्यनुकल्पमीश॥ ३१॥**

---

तत्र दिव्यन्ते विश्वरूपं मदन्यो न वेत्ति। वेत्सि अनुसन्धत्से किम्॥ २८॥

अत्सि ग्रसते॥ २९॥

• अनन्तः शेषनागः स एव मूर्तिः आकारः यस्य तत्सम्बोधनमनन्तमूर्त्ते इति अथवा अनन्ता संख्यातीता मूर्त्तिर्यस्येति।

जगत्प्रलयोद्भवहेतुत्वं दृष्टान्तेनाह—'**अत्त**' मिति द्वाभ्याम्। सामुद्रमम्बु वाडवाख्येन वहिननाऽत्तं जग्धं कास्तं केन वायुना वाडवाग्नितेनार्करश्मिनाडीमयेन अस्तं हिमाचले क्षिप्तं हिमस्वरूपं परिगृह्य स्थितं सत् ग्रीष्मे भानुमतो रवेरंशुभिः सङ्गात् पुनश्च जलत्व प्राप्नोति यथा। अयमर्थः,—'**सरित्समुद्रभूमिस्थास्तथापः प्राणिसम्भवाश्चतुः प्रकारा भगवानादत्ते सविता मुने। विवस्वानष्टभिर्मासैरादाय जगतो जलं सोमे मञ्चत्यथेन्दुश्च वायुनाडीमये दिवि। हिमोष्णवातवृष्टीनां हेतुः स्वसमयङ्गत**' इत्यादि—पूर्वोक्तरीत्या नद्यादिरूपेणागतं जलं ज़गधौ सवायुना वडवाग्निा पीतं घनीभवद् हिमतां गतं तेन वायुना नाडीमयरविरश्मिना चन्द्रद्वारा हिमाद्रौ क्षिप्तं ग्रीष्मे पुनस्तदेव तपनातपेन विलीयमानं हिमर्त्तौ जलतां याति यथा॥ ३०॥

तथैव त्वया संहरणकाले वडवाग्निस्थानीयेन रुद्रादिरूपेणात्तं भक्षितं जगत् त्वदधीनं त्वय्येव हिमाद्रिस्थानीये परमपुरुषे कारणात्मना संक्षिप्त सदेव तपनातपेन कालवेगेन विलीयमानं जलतां प्राप्य यावत् प्रलयं स्थितं सत् पुनर्हिरण्यगर्भात्मना सर्गोद्यतस्य सूर्यस्थानीयस्य सृज्यसंस्कारेच्छासम्बन्धात् पुनर्विराडात्मकस्थूलजगद्रूपत्वं प्रतिकल्पमेतीति वाक्यार्थोपमा। यथाह दण्डी,—'**वाक्यार्थेनैव वाक्यार्थे कोऽपि यद्युपमीयते। एकानेके त्वशब्दत्वात् सा वाक्यार्थोपमा मता**'॥ ३१॥

भवानहञ्च विश्वात्मन्नेकमेव हि कारणम्।
जगतोऽस्य जगत्यर्थे भेदेनावां व्यवस्थितौ॥ ३२॥
तत् स्मर्य्यताममेयात्मन्! त्वयात्मा जहि दानवम्।
मानुष्यमेवावलम्ब्य बन्धूनां क्रियतां हितम्॥ ३३॥

पराशर उवाच

इति संस्मारितो विप्र! कृष्णेन सुमहात्मना।
विहस्य पीडायामास प्रलम्बं बलवान् बलः॥ ३४॥
मुष्टिना चाहननमूदर्ध्नि कोपसंरक्तलोचनः।
तेन चास्य प्रहारेण बहिर्याते विलोचने॥ ३५॥
स निष्कासितमस्तिष्को मुखाच्छोणितमुद्वमन्।
निपपात महीपृष्ठे दैत्यवर्यो ममार च॥ ३६॥
प्रलम्बं निहतं दृष्ट्वा बलेनाद्भुतकर्म्मणा।
प्रहृष्टास्तुष्टुवुर्गोपाः साधु साध्विति चाब्रुवन्॥ ३७॥
संस्तूयमानो गोपैस्तु रामो दैत्ये निपातिते।
प्रलम्बे सह कृष्णेन पुनर्गोकुलमाययौ॥ ३८॥

इति श्रीकृष्णपुराणे पञ्चमांशे नवमः अध्यायः॥

---

एवम्भूतः परमेश्वरस्त्वमेव नाहमिति चेत्तत्राह—'भवानहञ्चे'ति॥ ३२॥

यद्यपि दैत्येन निजं रूपमाविष्कृतं, तथापि बन्धुसौख्याय त्वयाऽनेनैर रूपेण स हन्तव्य इत्याह मानुष्यमेवेति॥ ३३-३५॥

निष्कासितं मस्तिष्कं मस्तकस्नेहो यस्य सः॥ ३६-३८॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमांशे नवमोऽध्यायः॥

# दशमोऽध्यायः

## (शरद्वर्णनम् गोवर्द्धनपूजा च)

पराशर उवाच

तयोर्विहरतोस्तत्र राम-केशवयोर्व्रजे।
प्रावृट् व्यतीता विकसत्-सरोजा चाभवच्छरत्॥ १॥
अवापुस्तापमत्यर्थं शफर्य्यः पल्वलोदके।
• पुत्रक्षेत्रादिसक्तेन ममत्वेन यथा गृही॥ २॥
मयूरा मौनिनस्तस्थुः परित्यक्तमदा वने।
असारतां परिज्ञाय संसारस्येव योगिनः॥ ३॥
उत्सृज्य जलसर्वस्य निर्मलाः सितमूर्त्तयः।
तत्यजुश्चाम्बरं मेघा गृहं विज्ञानिनो यथा॥ ४॥
शरत् सूर्यांशुतप्तानि• ययुः शोषं सरांसि च।
बह्वालम्बि ममत्वेन हृदयानीव देहिनाम्॥ ५॥

---

गोवर्धनमखादीनि शरत्कर्माणि वर्णयन्। शरदं वर्णयत्यादावध्यात्मार्थोपमानतः।

तदेवं हरेः प्रावृट्क्रीडा निरुप्य गोवर्धनपूजातदुद्धरणाद्याः शरतक्रीडा वर्णयिष्यन्। शरदन्तावद्वैराग्यज्ञानगभीभिरुपमाभिर्वर्णयति—'तयो' रित्यादि पञ्चदशभिः। विकसन्ति सरोजानि यस्यां सा॥ १॥

शफर्यः क्षुद्रमत्स्या पल्वलोदके स्वल्पगर्त्तोदके॥ २॥

• पुत्रक्षेत्रादयः पुत्रकलत्रादयः तेषु सक्तेन सम्बद्धेन तद्गतेनेत्यर्थः, ममत्वेन मदीयत्वाभिमानेन, गृही गृहस्थः यथा तापं दुःखम् अवाप्नोति तद् विरहादिभिरिति शेषः, तथा शफर्य्यः पल्वलोदके शरदि सलिलशोषणात् तापम् अवापुरित्यर्थः।

परित्यक्तो मदो दर्पो यैस्ते॥ ३॥

जलमुदकं जडमहङ्कारादि च तदेव सर्वस्वं हित्वा मलः अहङ्कारकार्यं रागादिश्च तद्रहिताः सितमूर्त्तयः शुभ्ररूपाः शुद्धसत्त्वाश्च विज्ञानिनः आत्मज्ञाः॥ ४॥

• शरदः शरत्कालस्य यः सूर्यः तस्य अंशुभिः रश्मिभिः तप्तानि तापं नीतानि।

कुमुदैः शरदम्भांसि योग्यतालक्षणं ययुः।
अवबोधैर्मनांसीव सम्बन्धममलात्मनाम्॥ ६॥
तारका विमले व्योम्नि रराजाखण्डमण्डलः।
चन्द्रश्चरमदेहात्मा योगी साधुकुले यथा॥ ७॥
शनकैः शनकैस्तीरं तत्यजुश्च जलाशयाः।
ममत्वं क्षेत्रपुत्रादिरूढमुच्चैर्यथा बुधाः॥ ८॥
पूर्वत्यक्तैः सरोऽम्भोर्हंसा योगं पुनर्ययुः।
क्लेशैः कुयोगिनोऽशेषैरन्तरायहता इव• ॥ ९॥
निभृतोऽभवदत्यर्थं समुद्रः स्तिमितोदकः।
क्रमावाप्त-महायोगी निश्चलात्मा यथा यति॥ १०॥
सर्वत्रातिप्रसन्नानि सलिलानि तदाभवन्।
ज्ञाते सर्वगते विष्णौ मनांसीव सुमेधसाम्॥ ११॥

---

शरदम्भांसि स्वच्छजलानि कुमुदैः सितैर्योग्यतालक्षणं ययुः अन्योन्यरूपात्मकं संबन्धं ययुः। अमलात्मनां वीतरागाणां मनांसि अवबोधैस्तत्त्वविषयज्ञानैरिव॥ ६॥

तारकाभिरुपलिक्षते विमले व्योम्नि अखण्डमण्डलः सम्पूर्णप्रकाशः पूर्णिमाप्रान्ते चन्द्रो रराज—यथा तारकैर्विद्याचारादिभिर्विमले साधूनां कुले पूर्णब्रह्मप्रकाशो योगी चरमे देह आत्मा यस्य सः॥ ७। ८॥

अन्तरायहताः विघ्नाभिभूताः योगिनी योगभ्रष्टाः। अविद्यादिभिः क्लेशैर्यथा पुनर्युज्यन्ते तद्वत्॥ ९॥

• वर्षासु हंसाः साधारणसरांसि परिहाय मानसं सरः समुपयान्तीति प्रसिद्धम्। तदेवाधिकृत्योक्तं पूर्वत्यक्तैरित्यादि क्लेशा अविद्यादयः पञ्च योगशास्त्रोक्ताः, तदुक्तं योगसूत्रे पातञ्चले—'अविद्या-स्मिता-राग-द्वेषा-भिनिवेशाः पञ्च क्लेशा' इति । वर्षासु सरोऽम्भसां हंसरोगतुत्वादिदोषदुष्टत्वात् क्लेशानाञ्च तापहेतुत्वादिदोषदुष्टत्वात् मिथः साम्यम्।

निभृतो निर्विहारः, स्तिमितोदको निश्चलाम्बुः, यमनियमादिक्रमेणावाप्तो महायोगः सम्प्रज्ञातसमाधिलक्षणो येन स यतिर्यथा॥ १०॥

बभूव निर्मलं व्योम शरदा ध्वस्ततोयदम्।
योगाग्निग्धक्लेशौघं योगिनामिव मानसम्॥ १२॥
सूर्यांशुजनितं तापं निन्ये तारापतिः शमम्।
अहङ्कारोद्भव दुःखं विवेकः सुमहानिव॥ १३॥
नभसोऽभ्रान् भुवः पङ्कान् कालुष्यं चाम्भसः शरत्।
इन्द्रियाणीन्द्रियार्थेभ्यः प्रत्याहार इवाहरत्॥ १४॥
प्राणायाम इवाम्भोभिः सरसां कृतपूरकैः।
अभ्यस्यतेऽनुदिवसं रेचकाकुम्भकादिभिः॥ १५॥
विमलाम्बरनक्षत्रे* काले चाभ्यागतो व्रजम्।
ददर्शेन्द्रमहारम्भायोद्यतांस्तान् व्रजौकसः॥ १६॥
कृष्णस्तानुत्सुकान् दृष्ट्वा गोपानुत्सवलालसान्।
कौतूहलादिदं वाक्यं प्राह वृद्धान् महामतिः॥ १७॥
कोऽयं शक्रमहो नाम येन वो हर्ष आगतः।
प्राह तं नन्दगोपश्च पृच्छन्तमतिसादरम्॥ १८॥
मेघानां पयसां चेशो देवराजः शतक्रतुः।
तेन सञ्चोदिता मेघा वर्षन्त्यम्बुमयं रसम्॥ १९॥

---

सर्वत्र नद्यादौ सर्वत्र शत्रुमित्रादिषु सुमेधसां मनांसीव॥ ११-१३॥

नभआदिभ्योऽब्दपङ्ककालुष्याणि शरदहरत्. यथा शब्दादिभ्यः श्रोत्रादीनि प्रत्याहारस्तद्वियोजनप्रयत्नो हरति॥ १४॥

सरसामम्भोमिः कृतपूरकैराकुम्भकादिभिश्च प्राणायामोऽभ्यसत इव। अभ्यास्यतेति पाठेऽभ्यस्त इवेत्यर्थः। तानि हितकुल्या जलैरापूर्य्य कुम्भितवायुवत् कञ्चित् कालं तथैवावस्थाप्य पुनर्यथाकालं केदाराद्यर्थ प्रणालिकया निःसार्यन्त इति प्राणायामसाम्यम् रेचककुम्भकादिभिरित्यत्रादिशब्दबहुवचनाभ्यां तदावृत्तिरुक्ता। पूरकादिलक्षणञ्च योगशास्त्रे प्रोक्तम्, —'**पूरकः पूरण वायोः कुम्भकः स्थापनं क्वचिन्। बहिर्न्निःसारणं तस्य रेचकः परिकीर्त्तित**' इति॥ १५॥

इन्द्रस्य महः पूजोत्सवः तदारम्भायोद्यतान् कृष्णो ददर्श॥ १६॥

* विमले अम्बरं नक्षत्रञ्च यत्र यथाभूते काले शरत्काले।

तद्वृष्टिजनितं शस्यं वयमन्ये च देहिनः।
वर्त्तयामोपयुञ्जानास्तर्पयामश्च देवताः॥ २०॥
क्षीरवत्य इमा गावो वत्सवत्यश्च निर्वृताः।
तेन संवर्द्धितैः शस्यैः पुष्टास्तुष्टा भवन्ति वै॥ २१॥
नाशस्या नातृणा भूमिर्न बुभुक्षार्द्दितो जनः।
दृश्यते यत्र दृश्यन्ते वृष्टिमन्तो बलाहकाः॥ २२॥
भौममेतत् पायो दुग्धं गोभिः सूर्यस्य वारिदः।
पर्ज्जन्यः सर्वलोकस्य भवाय भुवि वर्षति॥ २३॥
तस्मात् प्रावृषि राजानः सर्वे शक्रं मुदा युताः।
महैः सुरेशमर्चन्ति वयमन्ये च मानवाः॥ २४॥

पराशर उवाच

नन्दगोपस्य वचनं श्रुत्वेत्थं शक्रपूजने।
कोपाय त्रिदशेन्द्रस्य प्राह दामोदरस्तदा॥ २५॥
न वयं कृषिकर्त्तारो वाणिज्यजीविनो न च।
गावोऽस्मद्दैवतं तात! वयं वनचरा यतः॥ २६॥
आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिस्तथापरा।
विद्याचतुष्टयं त्वेतत् वार्त्तामत्र श्रृणुष्व मे॥ २७॥
कृषिर्वणिज्या तद्वत्तु तृतीयं पशुपालनम्।
विद्यां ह्येता महाभाग! वार्त्ता वृत्तित्रयाश्रयः॥ २८॥

---

उत्सुकान् युक्तान्॥ १७-२२॥

ननु सूर्यः स्वरश्मिभिभौंमं रसमाकृष्य वर्षतीति प्रसिद्धम्। नेन्दस्तत्राह भौममिति। दुग्धम् आत्तं, पर्यन्य इन्द्रः। स हि भूगतं जलं सूर्यस्य रश्मिभिरात्तं मेघेषु पूरितं जगत उद्भवाय वर्षति । योभिरादित्यस्तपति रश्मिभिस्ताभिः पर्यन्यो वर्षतीति श्रुतेः॥ २३॥

प्रावृषि गतायामिति शेषः। शरत् काले शक्रपूजायाः प्रस्तुतत्वात्॥ २४॥

आन्वीक्षिकी तर्कविद्या, त्रयी वेदत्रयात्मिका, वार्त्ता वक्ष्यमाणा दण्डनीतिरर्थशास्त्रम्, एतद्विद्याचतुष्टयं यथायथं सर्वेषां ब्राह्मणादीनां दृष्टादृष्टार्थसाध नम्॥ २७॥

तत्र वार्त्ताख्या ह्येका विद्या कृष्यादिवृत्तित्रयाश्रया॥ २८॥

कर्षकाणां कृषिर्वृत्तिः पण्यं विपाणिजीविनाम्।
अस्माकं गाः परा वृत्तिवार्त्ताभेदैरियं त्रिभिः॥ २९॥
विद्यया यो यया युक्तस्तस्य स दैवतं महत्।
सैव पूज्यार्चनीया च सैव तस्योपकारिका• ॥ ३०॥
योऽन्यस्य फलमश्नन् वै पूजयत्यपरं नरः• ।
इह च प्रेत्यचैवासौ तात! नाप्नोति शोभनम्॥ ३१॥
कृष्यन्ता प्रथिता सीमा सीमान्तञ्च पुनर्वनम्।
वनान्ता गिरयः सर्वे ते चास्माकं परा गतिः॥ ३२॥
न द्वारबन्धावरणा न गृहक्षेत्रिस्तथा।
सुखिनः सकले लोके यथा वै चक्रचारिणः॥ ३३॥

---

गाः गावः एवमियं वार्त्तात्रिभिर्भेदैः स्थिता॥ २९॥

ततः किमत आह—'**विद्यते**' ति। पूज्या मान्या। अर्चनीया च गन्धपुष्पादिभिः॥ ३०॥

• सैव पूज्यार्चनीया चेत्यत्र हेतूपन्यासायाह— ''**सैव तस्योपकारिके**''ति। उपकारिकाया अपि तस्या अपूजने अनर्चने च कृतघ्नतादोषापात इति भावः।

विपक्षे दोषमाह—'**योऽन्यस्य**'इति॥ ३१॥

• अन्यस्य कारणस्य फलं कार्यम् अन्यकृतमुपकारमित्यर्थः,

किञ्च नास्माकं कर्षकाणामिव शक्रपूजा युक्ता भिन्नस्थानत्वादित्याशयेनाह—'**कृष्यन्ता**' इति। कृषिः कर्षणीयं क्षेत्रं तदन्ते सीमा मर्यादा साधरणप्रचारभूमिः।सीमाय अन्ते च वनं अस्मन्निवासस्थानं वनानामन्ते च गिरयः। ते च गिरयोऽस्माकं वनचारिणां परा गतिः स्वैरगतिः स्वैरविहारस्थानत्वात्॥ ३२॥

तदेवाह—'**न द्वारे**' ति। न विद्यते द्वारबन्धः कपाटादिरावरणं येषाम्, न द्वारबन्धस्यावरणञ्च कुडयादि येषामिति वा, न चास्ति नियतं गृहं क्षेत्रञ्च येषां ते वयं सर्वत्र प्रभूततृणोदकादिमति गिरिवनादौ यथेच्छं विचरन्तः सर्वस्मिन् जने सुखिनः। यथा वै चक्रचारिणः चक्रोपलक्षितेन शकटेन चरन्तो नियतावासाः। यद्वा यथा यत्र सायङ्गृहाख्या मुनयस्तथा अतो गृहाणां क्षेत्राद्यभिमानवतां पण्यकृष्यादिजीविनामिव नास्माकमिन्द्रेण किञ्चित् कार्यमिति भावः॥ ३३॥

श्रूयन्ते गिरयश्चामी वनेऽस्मिन् कामरूपिणः।
तत्तद्रूपं समास्थाय रमन्ते स्वेषु सानुषु॥ ३४॥
यदा चैतेऽपराध्यन्ते तेषां ये काननौकसः।
तदा सिंहादिरुपैस्तान् घातयन्ति महीधराः॥ ३५॥
गिरियज्ञस्त्वयं तस्माद् गोयज्ञश्च प्रवर्त्त्यताम्।
किमस्माकं महेन्द्रेण गावः शैलाश्च देवताः॥ ३६॥
मन्त्रयज्ञपुरा विप्राः सीतायज्ञाश्च कर्षकाः।
गिरि-गोयज्ञशीलाश्च वयमद्रिवनाश्रयाः• ॥ ३७॥
तस्माद् गोवर्द्धनः शैलो भवदभर्विविधार्हणैः।
अर्चयतां पूज्यतां मेध्यं पशुं हत्वा विधानतः॥ ३८॥
सर्वघोषस्य सन्दोहो गृह्यतां मा विचार्य्यताम्।
भोज्यन्तां तेन वै विप्रास्तथा ये चाभिवाञ्छकाः॥ ३९॥
समर्चिते कृते होमे भोजितेषु द्विजातिषु।
शरत्पुष्पकृतापीडाः • परिगच्छन्तु गोगणाः॥ ४०॥

---

किञ्च इंद्रादिपूजापदैपरस्माभिर्यदि गिरयोऽवाज्ञास्यन्ते तर्हि महाननर्थः स्यादित्याह—'श्रृयंत' इति द्वाभ्याम्॥ ३४॥

ये काननौकसः तेऽसि यदा अपराध्यन्ते तेषां गिरीणां वा अवज्ञादिलक्षणमपराधं कुर्वन्ति। तदा च सिंहव्याघ्रसर्पादिरूपैस्ते तान् मारयन्ति॥ ३५-३६॥

मन्त्रयज्ञपुराः केवलं मन्त्रोक्तदेवतार्चनपरा विप्राः न तु प्रत्यक्षं देवताः पश्यन्ति। वयन्तु गिरिगोयज्ञशीलाः प्रत्यक्षा देवा गिरयो गावश्च तद्भजनशीलाः॥ ३७-३८॥

• सीता लाङ्गलपद्धतिरिति कोषात् सीता लाङ्गलपद्धतिः। तद्यज्ञाः तद्भजनशीलाः, अथवा सीताशब्द उपचारेण तत् साधनरूपक्रियापरः, सैव यज्ञः अर्चनीया देवता येषां ते सीतायज्ञाः। अद्रिः पर्वतः वनञ्च आश्रयः येषां ते, अथवा अद्रिवनं पर्वतसन्निहितमरण्यम् आश्रयः येषां ते। घोषो गोपालपल्ली सर्वस्यापि घोषस्य सन्दोहः सम्यक् दोहो दुग्धादिर्गृह्यताम्॥ ३९॥

• शरदः शरत्कालस्य यानि पुष्पानि शेफालिकासप्तच्छदादीनि तैः कृतः आपीडः शेखरः शिरोमाल्यामित्यर्थः, येषां ते, 'शिवास्वापीडाशेखरा' विति कोषात्।

एतन्मम मतं गोपाः सम्प्रत्याद्रियते यदि।

ततः कृत्वा भवेत् प्रीतिर्गवामद्रेस्तथा मम॥ ४१॥

इति तस्य वचः श्रुत्वा नन्दाद्यास्ते व्रजौकसः।

प्रीत्युत्फुल्लमुखा विप्र! साधु साध्वित्यथाब्रुवन्॥ ४२॥

शोभनं ते मतं वत्स! यदेतद्भवतोदितम्।

तत् करिष्यामहे सर्वं गिरियज्ञः प्रवर्त्त्यताम्॥ ४३॥

पराशर उवाच

तथा च कृतवन्तस्ते गिरियज्ञं व्रजौकसः।

दधि-पायस-मांसाद्यैर्ददुः शैलबलिं ततः॥ ४४॥

द्विजांश्च भोजयामासुः शतशोऽथ सहस्रशः।

अन्यानप्यागतानित्थं कृष्णेनोक्तं यथा पुरा॥ ४५॥

गावः शैलं ततश्चक्रुश्चार्चितास्याः प्रदक्षिणम्।

ऋषभाश्चापि नर्दन्तः सतोया जलदा इव॥ ४६॥

गिरिमूर्द्धनि कृष्णोऽपि शैलोऽहमिति मूर्त्तिमान्।

बुभुजेऽन्नं बहु तदा गोपवर्याहितं द्विज॥ ४७॥

अन्येन कृष्णो रूपेण गोपैः सहं गिरेः शिरः।

अधिरुह्यार्चयामास द्वितीयामात्मनस्तनुम्॥ ४८॥

अन्तर्द्धानं गते तस्मिन् गोपा लब्ध्वा ततो वरान्।

कृत्वा गिरिमहं• गोष्ठं निजमभ्याययुः पुनः॥ ४९॥

इति श्रीविष्णुपुराणे पञ्चमांशे दशमः अध्यायः॥

---

परितो गच्छतु प्रदक्षिणीकुर्वन्तु॥ ४०-४६॥

इन्द्रवैलक्षण्यार्थं शैलाभिमानिदेवतारूपेणात्मानं प्रदर्श्य शैलोऽहमिति ब्रुवन् गोपवर्य्यैराहितं दत्तं बह्वन्नं बुभुजे॥ ४७॥

गोपानां भक्त्युद्रेकार्थमन्येन जनकरूपेण तां मूर्त्तिमर्चयामास ॥ ४८॥

ततः शैलदेवाद् वरं लब्ध्वान्तर्धानं गते तस्मिन् गोपा निजगोष्ठमभ्याययुः॥ ४९॥

• गिरिमहं गोवर्द्धनगिरिमहोत्सवं कृत्वा समाप्य।

# एकादशोऽध्याय:

## (इन्द्रस्य क्रोध:, श्रीकृष्णस्य गोवर्द्धनपर्वतधारणञ्च)

पराशर उवाच

महे प्रतिहते शक्रो मैत्रेयातिरुषान्वित:।
संवर्त्तकं नाम गणं तोयदानामथाब्रवीत्॥ १॥
भो भो मेघा! निशम्यैतद् वचनं वदतो मम।
आज्ञानन्तरमेवाशु क्रियतामविचारितम्॥ २॥
नन्दगोप: सुदुर्बुद्धिर्गोपैरन्यै: सहायवान्।
कृष्णाश्रयबराध्मातो महभङ्गमचीकरत्॥ ३॥
आजीवो य: परस्तेषां याश्च गोपत्वकारणम्।
ता गावो वृष्टिवातेन पीड्यन्तां वचनान्मम॥ ४॥
अहमप्यद्रिगाभं तुगंमारुह्य वारणम्।
साहाय्यं व: करिष्यामि वार्यम्बूत्सर्गयोजितम्॥ ५॥

पराशर उवाच

इत्याज्ञप्ता: सुरेन्द्रेण मुमुचुस्ते बलाहका:।
वातवर्षं महाभीममभावाय गवां द्विज॥ ६॥
तत: क्षणेन धरणी ककुभोऽम्बरमेव च।
एकं धारामहासारपूरणेनाभवन्मुने॥ ७॥

---

संवर्तकं संहारकम्॥ १-२॥

कृष्णाश्रय एव बलं तेनाध्मात: उत्सिक्त:, अघवान् अपराधी, अचीकरत् कारितवान्॥ ३॥

तेषामाजीवो जीवनहेतुर्या गाव: याश्च गोपत्वस्य कारणं ता गाव: पीड्यन्ताम्॥ ४॥

वाय्वम्बुनोरुत्सर्गेण योजितम् अनुबद्धं साहाप्यं सहकारित्वम्॥ ५॥

अभावाय नाशाय॥ ६॥

धाराणां महानासार: अजस्रसम्पातस्तस्य पूरणेन धरण्यादिकमेकमभवत्॥ ७॥

विद्युल्लताकशाघातत्रस्तैरिव घनैर्घनम्।
नादापूरितदिकचक्रैर्धारासारमपात्यत॥ ८॥
अन्धकारीकृते लोके वर्षद्भिरनिशं घनैः।
अधश्चोर्द्धवञ्च तिर्य्यक च जगदाप्यमिवाभवत्॥ ९॥
गावस्तु तेन पतता वर्षवातेन वेगिना।
धूताः प्राणान् जहुः सन्नत्रिकसक्थिशिरोधराः॥ १०॥
क्रोडेन वत्सानाक्रम्य तस्थुरन्या महामुने।
गावो विवत्साश्च कृता वारिपूरेण चापराः• ॥ ११॥
वत्साश्च दीनवदनाः पवनाकम्पिकन्धराः।
त्राहि त्राहीत्यल्पशब्दाः कृष्णमूचुरिवार्त्तकाः॥ १२॥
ततस्तद् गोकुलं सर्वं गो-गोपी-गोपसङ्कुलम्।
अतीवार्त्त हरिर्दृष्ट्वा मैत्रेयाचिन्तयत् तदा॥ १३॥
एतत् कृतं महेन्द्रेण मोहभंगविरोधिना।
तदेतदखिलं गोष्ठं त्रातव्यमधुना मया॥ १४॥

---

विद्युल्लतैव कशा तया घातस्ततस्त्रैस्तैरिव नादेनं गर्जितेनापूरितं दिशाञ्चक्रं समूहो यैस्तैर्घनैः घनं निविडं यथा भवत्येवं धाराणां सारं श्रेष्ठं वर्षमपात्यत। यद्वा धारा अपात्यत, कथम् आसारं समन्ताम् प्रसरणं यथा भवत्येवमित्यर्थः । यथा लोके कशाघातत्रस्तैरश्वैः क्लिश्यद्भिः कक्षविनिक्षिप्तं सर्वस्य निपात्यते तद्वदित्युत्प्रेक्षा॥ ८॥

आप्यम् अस्मयमिव जगदभवत्॥ ९॥

धूताः कम्पिताः त्रिकः कटिः सक्थिः ऊरुः शिरोधराःग्रीवा एते सन्ना अवसन्ना आकुञ्चिता यासां ताः गावः प्राणान् जहुः मूर्च्छां प्राप्ता इत्यर्थः॥ १०॥

क्रोडेण कुक्ष्या आक्रम्य आच्छाद्य।।११।।

• विगताः वत्साः यासां ताः आत्मनां रक्षायां गत्यन्तराभावात् परित्यक्तवसा इत्यर्थः, सर्वापेक्ष्या आत्मन्येव जीवानां प्रीत्यतिशयात्। अतएव न वारे पुत्रस्य कामाय पुत्रः प्रियो भवति किन्तु आत्मनस्तु कामायेति उपनिषदाह।

पवनेनाकम्पिन्यः कन्धरा येषां ते॥ १२-१३॥

महभङ्गाद्विरोधिना प्रतिकूलेन सता यस्तावत् प्रत्यक्षदेवत्वेनेष्ठोऽस्माभिः स एवास्मान् रक्षतीति गोपविस्रम्भाय विचारयति इमामिति॥ १४॥

इममद्रिमहं धैर्य्यादुत्पाट्योरुशिलाघनम्।
धारयिष्यामि गोष्ठस्य पृथुच्छत्रमिवोपरि॥ १५॥

पराशर उवाच

इति कृत्वा मतिं कृष्णो गोवर्द्धनमहीधरम्।
उत्पाट्यैककरेणैव धारयामास लीलया॥ १६॥
गोपांश्चाह जगन्नाथः समुत्पाटितभूधरः● ।
विशध्वमत्र त्वरिताः कृतं वर्षनिवारणम्॥ १७॥
सुनिर्वातेष● ु देशेषु यथाजोषमिहास्यताम्।
प्रविश्यता न भेतव्य गिरिपातस्य निर्भयैः॥ १८॥
इत्युक्तास्ते ततो गोपा विविशुर्गोधनैः सह।
शकटारोपितैर्भाण्डैगौप्यश्चासारपीडिताः● ॥ १९॥
कृष्णोऽपि तं दधारैव शैलमत्यन्तनिश्चलम्।
ब्रजैकवासिभिर्हर्षविस्मिताक्षैनिरीक्षितः॥ २०॥
गोप-गोपीजनैर्हृष्टैः प्रीतिविस्तारितेक्षणैः।
संस्तूयमानचरितः कृष्णः शैलमधारयत्॥ २१॥

---

धैर्य्यात् प्रागल्भ्यात् उरुशिलाधनं विशालाभिः शिलाभिर्घनं सान्द्रम्॥ १५।१६॥

समुत्पाटितः विच्छिन्नमूलपातितः भूधरः गोवर्द्धनगिरिः येन सः। विश्वध्वमित्यात्मनेपदप्रयेग आर्षः वर्षस्य निवारणं प्रतिषेधः कृतम्। एतेन मया छत्रवदुपरि धारितेन गोवर्द्धनेनास्याधस्तादिति शेषः।

यथाजोषं यथासुखम्। निर्भयैर्वषादिभयशून्यैरिह गिरिमूलगर्त्ते प्रविश्यतांमद्धस्ताद् गिरिः पतिष्यतीति न भेत्व्यं भयं न कार्यम्॥ १८-१९॥

• निः न विद्यते वातः झज्झावायुः यत्र ते निर्वाताः, सु अतिशयेन निर्वाताः तेषु सुतरां वातोपद्रवशून्येषु, देशेषु आस्यतां स्थीयतां युष्माभिरिति शेषः।

• शकटेषु शकटाकारेषु भाण्डवहनोपकरणेषु आरोपितानि उत्थापितानि भाण्डानि दध्यादिपात्राणि यैः, एतेन भूरिभाराणां भाण्डानां वहने रक्षणे च महत् सौकर्य्य व्यज्यते। आसारैः धारासम्पातैः पीडिताः अत्यर्थ कष्टं नीता इत्यर्थः, धारासम्पात आसार' इति कोषात्।

सप्तरात्रं महामेधा ववर्षुर्नन्दगोकुले।
इन्द्रेण चोदिता विप्र! गोपानां नाशकारिणः॥ २२॥
ततो धृते महाशैले परित्राते च गोकुले।
मिथ्याप्रतिज्ञो वलभिद् वारयामास तान् घनान्॥ २३॥
व्यभ्र नभसि देवेन्द्रे वितथात्मवचस्यथ।
निष्क्रम्य गोकुलं सर्वं स्वस्थाने पुनरागमत्॥ २४॥
मुमोच कृष्णोऽपि तदा गोवर्द्धनमहाचलम्।
स्वस्थाने विस्मितमुखैर्दृष्टस्तैस्तु व्रजौकसैः• ॥ २५॥

इति विष्णुपुराणे पञ्चमांशे एकादशः अध्यायः॥

---

व्रजे एवैकत्र वसन्तीति व्रजैकवासिनः तैः व्रजौकवासिभिरिति पाठे तु ओकः शब्दस्यादन्तत्वमार्षम्॥ २०-२२॥

बलभिदिन्द्रः॥ २३॥

वितथे आत्मवचसी प्रयत्नप्रतिज्ञे यस्य तस्मिन्॥ २४॥

व्रजौकसैः व्रजौकोभिः॥ २५॥

• व्रजः गोकुलम् ओकः स्थानं येषां तैः गोकुलवासिभिरित्यर्थः। अत्र संस्कारेण व्रजौकोभिरिति वक्तव्ये व्रजौकसैरिति प्रयोग आर्षः। विस्मितानि कृष्णस्यालौकिककृत्यदर्शनेनात्मनि समुपजातस्य विस्मयस्य सूचकेन विस्फारितनेत्रत्वादिलक्षणेन भावेन युक्तानि मुखानि येषां तैः।

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे एकादशोऽध्यायः॥

## द्वादशोऽध्यायः

### (इन्द्रस्यागमनम्, इन्द्रेण श्रीकृष्णस्य अभिषेकश्च)

पराशर उवाच

धृते गोवर्द्धने शैले परित्राते च गोकुले।
रोचयामास कृष्णस्य दर्शनं पाकशासनः॥ १॥
सोऽधिरुह्य • महानागमैरावतममित्रजित्।
गोवर्द्धनगिरौ कृष्णं ददर्श त्रिदशेश्वरः॥ २॥
चारयन्तं महावीर्य्यं गावो गोपवपुर्धरम्।
कृष्णञ्च जगतो गोपं गोपवृतं गोपकुमारकैः॥ ३॥
गरुडञ्च ददर्शोच्चैरन्तर्द्धानगतं द्विज।
कृतच्छायं हरेर्मूर्ध्नि पक्षाभ्यां पक्षिपुङ्गवम्॥ ४॥
अवरुह्य स नागेनद्रादेकान्ते मधुसूदनम्।
शक्रः सस्मितमाहेदं प्रीतिविस्फारितेक्षणः॥ ५॥
कृष्ण! कृष्ण! • श्रृणुष्वेदं यदर्थमहमागतः।
त्वत्समीपं महाभाग! नैतच्चिन्त्यं त्वयान्यथा॥ ६॥
भारावतारणार्थाय पृथिव्याः पृथिवीतलम्।
अवतीर्णोऽखिलाधारस्त्वमेव परमेश्वर॥ ७॥

---

गावो गाश्चरयन्तम्। गोपं गोप्तारम्।।१-५।।

• महानागं कुञ्जलश्रेष्ठम्, मगङ्गजो गजो नागः कुञ्जरो वारणः करी'ति कोषात्।

त्वत्समीपहमागतो यदर्थं तवाभिषेकार्थं तदिदं श्रृणुष्व, अन्यथा विरोधभुद्ध्येति न विचिन्त्यम्।।६।।

• श्रृणुष्वेत्यात्मनेपदमार्षम्।

कार्यं विज्ञापयिव्यन् प्रथमं तावत् कृष्णैश्वर्यमभिनन्दति—'भावावतारणे' ति चतुर्भिः।।७।।

महभङ्गविरुद्धेन• मया गोकुलनाशकाः।

समादिष्ट महामेघास्तैश्चैदं कदनं कृतम्॥८॥

त्रातास्तात! त्वया गावः समुत्पाट्य महागिरिम्।

तेनाहं तोषितो वीर! कर्म्मणात्यद्भुतेन ते॥९॥

साधितं कृष्ण देवानामहं मन्ये प्रयोजनम्।

त्वयायामद्रिप्रवरः करेणैकेन यद्धृतः॥१०॥

गोभिश्च चोदितः कृष्ण! त्वत्सकाशमिहागतः।

त्वया त्रातभिरत्यर्थं युष्मत्सत्कारकारणात्॥११॥

स त्वां कृष्णाभिषेक्ष्यामि गवां वाक्यप्रचोदितः।

उपेन्द्रत्वे गवामिन्द्रो गोविन्दस्त्वं भविष्यसि॥१२॥

अथोपबाह्यादादाय घण्टामैरावताद् गजात्।

अभिषेकं तया चक्रे पवित्रजपूर्णया• ॥१३॥

---

• महस्य इन्द्रपूजामहोत्सवस्य भङ्गः प्रतिरोधः तद्विरुद्धेन तत्प्रतिपक्षेण तद्विरोधिनेत्यर्थः।

मया गोकुलवधायोद्यतापि त्वया तद्रक्षणादहं तोषितोस्मीत्याह—'**महभङ्गे**' ति। कदनं विमर्दः॥८-१०॥

प्रस्तुतं विज्ञापयति—'**गोभिश्चे**' ति। गोलोकस्थाभिः कामधेनुभिस्त्वया तत् सन्ततित्राणात् त्राताभिः॥११॥

उपेन्द्रत्वे सत्यलोकोपरिस्थितालोकैश्वर्य्ये, तथा चेन्द्रवाक्यं हरिवंशे,— ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः। उपेन्द्र इति लोके त्वां गास्यन्ति दिवि देवता' इति। अतो गवामिन्द्र इति निरुक्तया गोविन्दश्च त्वं भविष्यसि॥१२॥

उप बाह्यात् राजवाहनात्॥१३॥

• पवित्रेण जलेन पूर्णया तया घण्टया। जलस्यैव प्रधानतया अभिषेकसाधनत्वात् तदानीमिन्द्राय जगपात्रान्तराभावाद् घण्टामेव जलपात्रीकृत्य तदगतेन जलेन अभिषेकं चक्रे इति भावः। अथवा पवित्रजबपूर्णया पूतसलिलसहकृतया तया घण्टया, पूतसलिलेन घण्टया चेत्यर्थः उभायोरेव अभिषेकसाधनत्वात्।

क्रियमाणेऽभिषेके तु गावः कृष्णस्य तत्क्षणात्।
प्रस्रवोद्भूतदुग्धार्द्रा सद्यश्चक्रुर्वसन्धराम्॥ १४॥
अभिषिच्य गवां वाक्याद् देवेन्द्रो वै जनार्द्दनम्।
प्रीत्या सप्रश्रयं कृष्णं पुनराह शचीपतिः॥ १५॥
गवामेतत् कृतं वाक्यं तथान्यदपि मे शृणु।
यद् ब्रवीमि महाभाग! भारावतरणेच्छया॥ १६॥
ममांशः पुरुषव्याघ्र पृथायां पृथिवीतले।
अवतीर्णोऽर्ज्जुनो नाम स रक्ष्यो भवता सदा॥ १७॥
भारावतारणे साह्यं स ते वीर! करिष्यति।
स रक्षणीयो भवता यथात्मा मधूसूदन॥ १८॥

श्रीभगवानुवाच

जानामि भारते वंशे जातं पार्थं तवात्मजम्।
तमहं पालयिष्यामि यावदस्मि महीतले॥ १९॥
यावन्महीतले शक्र! स्थास्याम्यहमरिन्दम।
न तावदर्ज्जुनं कश्चिद् देवेन्द्र! युधि जेष्यति॥ २०॥
कंसो नाम महाबाहुदैत्योऽरिष्टस्तथापरः।
केशी कुवलयापीडो नरकाद्यास्तथापरे॥ २१॥
हतेष्वेतेषु देवेन्द्र! भविष्यति महाहवः।•
तत्र विद्धि सहस्राक्ष भारावतरणं कृतम्॥ २२॥
स त्वं गच्छ न पुत्रार्थे सन्तापं कर्त्तुमर्हसि।
नार्ज्जुनस्य रिपुः कश्चिन्ममाग्रे प्रभविष्यति॥ २३॥

---

प्रस्रवः स्तन्योद्गमः तेनोद्भूतं यद्दुग्धं तेनार्द्राम्॥ १४-१७॥

साह्यं साहाय्यं, स च यथात्मा अहं तथा संरक्षणीयः॥ १८-१९॥

यावत् स्थास्याभि भूतल इति वदन् पश्चाद्भाविनमाभीरेभ्यः पराभवं सूचयति॥ २०-२१॥

• तत्र महति आहवे युद्धे भारतयुद्धे इत्यर्थः।

महाहवो भारतयुद्धम्॥ २२-२३॥

अर्जुनार्थे त्वहं सर्वान् युधिष्ठिरपुरोगमान्।
निवृत्ते भारते युद्धे कुन्त्या दास्याम्यविक्षतान् • ॥२४॥
इत्युक्तः सम्परिष्वज्य देवराजो जनार्दनम्।
आरुह्यैरावतं नागं पुनरेव दिवं ययौ॥२५॥
कृष्णोऽपि सहितो गोभिर्गोपालैश्च पुनर्व्रजम्।
आजगामाथ गोपीनां दृष्टिपूतेन वर्त्मना॥२६॥

इति श्रीविष्णुपुराणे पञ्चमांशे द्वादशः अध्यायः॥

---

• कुन्त्याः दास्यामि तव प्रियायाः कुन्त्या उपहाररूपेण अर्पयिष्यामि।

अविक्षतान् शस्त्रक्षतशून्यान्॥२४-२५॥

कृष्णदर्शनोत्सुक्येन गोपीभिस्तन्मार्गेक्षणाद् गोपीनां दृष्टिपूतेन वर्त्मनेत्युक्तम् अयञ्च रासक्रीडाप्रस्तावः॥२६॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे द्वादशोऽध्यायः॥

# त्रयोदशोऽध्यायः

## (गोपानां श्रीकृष्णप्रभाववर्णनम्, गोपिभिः सह तस्य रासक्रीडा च)

पराशर उवाच

गते शक्रे तु गोपालाः कृष्णमक्लिष्टकारिणम्।
ऊचुः प्रीत्या धृतं दृष्ट्वा तेन गोवर्द्धनाचलम्• ॥१॥
वयमस्मान्महाबाहो! भवता महतो भयात्।
गावश्च भवता त्राता गिरिधारणकर्म्मणा॥ २॥
बालक्रीडेयमतुला गोपालत्वं जुगुप्सितम्।
दिव्यञ्च कर्म भवतः किमेतत् तात! कथ्यताम्॥ ३॥
कालियो दमितस्तोये प्रलम्बो विनिपातितः।
धृतो गोवर्द्धनश्चायं शङ्कितानि मनांसि नः• ॥४॥
सत्यं सत्यं हरेः पादौ शपामोऽमितविक्रम।
यथा त्वद्वीर्य्यमालोक्य न त्वां मन्यामहे नरम्॥ ५॥

---

कृष्णं गोपीरतं गोपा नासूयन रासकेलिषु। इति द्योतयितुं तेषां कृष्णैश्वर्य्यज्ञतेय्यते। **'शक्र'** इत्यादिना **'तस्मिन् प्रणयकोपवा'** नित्यन्तेन॥ १ ।२॥

• **'ऊचुः प्रीत्ये'** ति— अत्र कृष्णं गोपीरतं गोपा नासूयन् रासकेलिषु' इत्याद्युक्तं श्रीधरेणं। तथाहि श्रीकृष्ण रासक्रीडाय.ां येषा गोपानां प्रियाभिः सहरेमे, ते तजज्ञात्वापि कृष्ण प्रति असूयां न प्राप्तवन्तः, परं तत्र महान्त मानं प्रणयञ्चम भेजिरे। तत्र हेतुस्तेषां कृष्णैश्वर्य्यविज्ञानमेव, यत्नस्ते श्रीकृष्णस्य महतैश्वर्य्येण तं साधारणजनविलक्षणं मेनिरे, अत एव साधारणजनयोग्यासूयां तत्र न कृतवन्त इति भावः।

बालक्रीडेयं पूतनाघोषणशकटोच्चाटनादि दिव्यञ्च अलौकिकं कर्म॥ ३॥

तदेवाह **'कालिय'** इति, प्रलम्बो विनिपातित' इति, कृष्णस्मारितैश्वर्येण रामेण निपातितत्वात् कृष्णेनैव निपातित इत्युच्यते॥ ४॥

• शङ्कितानि ' देवो वा दानवो वा त्व' मित्यादिरूपसंशययुक्तानि, सांख्यादिनये चित्तलक्षणानां मनसां साक्षाज् ज्ञानाधारत्वात्। न्यायवैशेषितादिमते तु मनसो ज्ञानकारणत्वात् तत्सम्बन्धेनैर तद्वत्त्वम्।

प्रीतिः सस्त्रीकुमारस्य ब्रजस्य तव केशव।

कर्म्म चेदमशक्यं यत् समस्तैस्त्रिदशैरपि॥६॥

बालत्वं चातिवीर्य्यञ्च जन्म चास्मास्वशोभनम्।

चिन्त्यमानममेयात्मन्! शङ्कां कृष्ण प्रयच्छति॥७॥

देवो वा दानवो वा त्वं यक्षो गन्धर्व एव वा।

किं वास्माकं विचारेण बान्धवोऽसि नमोऽस्तु ते॥८॥

पराशर उवाच

क्षणं भूत्वा त्वसौ तूष्णीं किञ्चित् प्रणयकोपवान्।

इत्येवमुक्तस्तैर्गोपैः कृष्णोऽप्याह महामुने॥९॥

श्रीभगवानुवाच

मत्सम्बन्धेन भो गोपा! यदि लज्जा न जायते।

श्लोध्यो वाहं ततः किं वो विचारेण प्रयोजनम्॥१०॥

यदि वोऽस्मि मयि प्रीतिः श्लाघ्योऽहं भवतां यदि।

तदात्मबन्धुसदृशी बुद्धिर्वः क्रियतां मयि॥११॥

नाहं देवी न गन्धर्वो न यक्षो न च दानवः।

अहं वो बान्धवो जातो नास्ति चिन्त्यमतोऽन्यथा॥१२॥

---

सर्वस्यापि व्रजस्य त्वत्प्रीतिः सर्वस्यात्मत्व शङ्का करोतीति भावः, कर्मचेदम्॥६-९॥

मनुष्य एवाहमित्युक्ते अनृतं स्यात् ईश्वरोऽहमित्युक्ते च तेषां तद्बन्धुसौख्यं हीयेत, अतः प्रणयकोपव्याजेन स मुग्धमुत्तरमाह—'**मत्सम्बन्धेने**' ति त्रिभिः॥१०॥

आत्मनो जीवस्य बन्धुः परमेश्वरः ततसदृशी परमप्रेमास्पदबद्धिर्मयि वो युष्माभिः क्रियताम्॥११॥

अधुना तावन्नाहं देवो गन्धर्वो वा अपि तु युष्माकं बान्धवो जातोऽस्मि, अतोऽन्यथा च किञ्चन्न चिन्त्यं न जिज्ञास्यम्॥१२॥

पराशर उवाच

इति श्रुत्वा हरेवाक्यं बद्धमौनास्ततो वनम्।
ययुर्गोपा महाभाग! तस्मिन प्रणयकोपिन॥ १३॥
कृष्णस्तु विमलं व्योम शरच्चन्द्रस्य चन्द्रिकाम्।
तथा कुमुदिनीं फुल्लामामोदितदिगन्तराम्• ॥ १४॥
वनराजिं तथा कूजद् भृङ्गमाला मनोरमाम्।
विलोक्य सह गोपीभिर्मनश्चक्रे रतिं प्रति॥ १५॥
सह रामेण मधुरमतीव वनिताप्रियम्।
जगौ कलपदं शौरिर्नानातन्त्री-कृतव्रतम्॥ १६॥
रम्यं गीतध्वनिं श्रुत्वा सन्त्यज्यावसथांस्तदा।
आजग्मुस्त्वरिता गोप्यो यत्रास्ते मधुसूदनः॥ १७॥
शनैः शनैर्जगौ गोपी काचित् तस्य लयानुगम्।
दत्तावधाना काचित्तु तमेव मनसास्मरत्॥ १८॥
काचित् कृष्णेति कृष्णेति प्रोक्त्वा लज्ञामुपागता।
ययौ च काचित् प्रेमान्धा तत्पार्श्वमविलज्ञिता॥ १९॥

---

• आमोदितानि सुरभीकृतानि दिगन्तराणि स्वकीयसौरभेण यया ताम्। अथवा आमोदितानि आनन्दितानि तदीयसौरभानुभवेन सुखं प्रापितानि दिगन्तराणि तद्गता : सर्वे प्राणिन इत्यर्थ यया ताम्।

रासक्रीडार्थं गोपीः सम्मेलयिष्यन् जगावित्याह—**'सह रामेणे'** ति। कलपदं अव्यक्तमधुराक्षरं, नानातन्त्रीभिः कृतं व्रतं स्वरनियतिरस्मिन्। नानामात्रेति पाठे द्रुतसमविलम्बिताख्यं त्रिमात्रलयनियमेनेत्यर्थः। तारमन्द्रकृत इति पाठे तारमन्द्राभ्यामुचोपांशुस्वनाभ्यां कृतः क्रमो यस्मिंस्तान् इत्यर्थः॥ १६॥

आवसथान् गृहान्॥ १७॥

लयानुगमिति द्रुतमध्यविलम्बिताख्यत्रितयात्मकतार-विश्रान्तिकालानुगुणं जगौ। तदुक्तं—**'तालान्तरालवर्त्ती यः कालोऽसौ लयनाल्लय'** इति॥ १८-१९॥

**काचिदावसशस्यान्तः स्थिता दृष्ट्वा बहिर्गुरून्।**
**तन्मयत्वेन गोविन्दं दध्यौ मीलितलोचना॥ २०॥**
**तच्चिनताविपुलाह्लाद-क्षीणपुष्यचया तथा।**
**तदप्राप्ति-महादुःखविलीनाशेषपातका॥ २१॥**
**चिन्तयन्ती जगत्सूतिं• परब्रह्मस्वरूपिणम्।**
**निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका॥ २२॥**
**गोपीपरिवृती रात्रिं शरच्चन्द्रमनोरमाम्।**
**मानयामास गोविन्दो रासारम्भरसोत्सुकः॥ २३॥**
**गोप्यश्च वृन्दशः कृष्णचेष्टास्वायत्तमूर्त्तयः।**
**अन्यदेशं गते कृष्णे चेरुर्वुन्दावनान्तरम्॥ २४॥**

---

काचिद्गोपकन्यका आवसथस्यान्तः स्थित्वा बहिः गुरुन् श्वशुरादीन् दृष्टवा अलब्धनिर्गमा तन्मयत्वेन गोविन्दं दध्यौ, ततश्च तत्क्षणमेव भोगेन क्षीणाशेषपुण्यपापा कान्तबुद्ध्या वस्तुतो जगत्कारणं परब्रह्मरुपिणं तमेव चिन्तयन्ती निरुच्छ्वासतया सद्य एव मुक्तिं गतेति त्रयाणामन्वयः॥ २०॥

नन्वेकजन्माभ्यस्तयोगानामपि ब्रह्मविदां प्रारब्धकर्मभोगं विना न क्षीयते, तत् किं एतस्यास्तत्क्षणमेव क्षीणम्? भोगादेव क्षीणमित्याह—'**तच्चिन्ते**' ति। तस्य चिन्तया यो महानाह्लादस्तेन क्षीणः पुण्यचयो यस्याः सा तथा। तस्याप्राप्त्या यन्महादुःखं तेन विलीनानि अशेषपातकानि यस्याः सा॥ २१॥

तदेवं तत्क्षणमेव भोगेन क्षीणासमस्तपुण्यपापा भगवद्ध्यानमहिम्ना च लब्धापरोक्षात्मज्ञानात् सद्य एव मुक्तिं प्राप॥ २२॥

• जगतसूतिं जगत्कारणभूतम्। निरुच्छ् वासतया निष्प्राणतया, मक्तिं विदेह मुक्तिं गता।

रासस्यारम्भे रसो रागः तस्मिन्नुत्सुकः। अन्योन्यव्यतिषक्तहस्तानां स्त्रीपुसानां गायतां मण्डीलीरूपेण भ्रमतां नृत्यविनोदः रासो नाम। तथा च भरतः—'**अनेकनर्त्तकीयोग्यं चित्रताललयान्वितम्। अत्तुः षष्टियुगमत्वाद्रासकं मसृणोद्धत**' मिति॥ २३॥

अन्यदेशं गते कृष्णे सति कृष्णचेष्टास्वायत्तास्तदनुकारिण्यो मूर्त्तयो यासां ताः। कृष्णमन्विच्छन्त्यो वृन्दावनमध्ये चेरुः॥ २४॥

कृष्णे निरुद्धहृदयां इदमूचुः परस्परम्।

कृष्णोऽहमेतल्ललितं व्रजाम्यालोक्यतां गतिः।

अन्या ब्रवीति कृष्णस्य मम गीतिर्निशम्यताम्॥ २५॥

दुष्टकालिय! तिष्ठात्र कृणोऽहमिति चापरा।

बाहुमास्फोट्य कृष्णस्य लीलासर्वस्वमाददे॥ २६॥

अन्या ब्रवीति भो गोपा! निःशङ्कैः स्थीयतामिह।

अलं वृष्टिभयेनात्र धृतो गोवर्द्धनो मया॥ २७॥

धेनुकोऽयं मया क्षिप्तो विचरन्तु यथेच्छया।

गोपी ब्रवीति वै चान्याकृष्णलीलानुकारिणी॥ २८॥

एवं नानाप्रकारासु कृष्णचेष्टासु तास्तदा।

गोप्यो व्यग्राः समं चेरु रम्यं वृन्दावनान्तरम्॥ २९॥

विलोक्यैका भुवं प्राह गोपी गोपवराङ्गना।

पुलकाञ्चितसर्वाङ्गी विकाशि-नयनोत्पला॥ ३०॥

ध्वजबज्राङ्कशाब्जाङ्क-रेखावन्त्यालि पश्यत।

पदान्येतानि कृष्णस्य लीलालङ्कृतगामिनः॥ ३१॥

कापि तेन समं याता कृतपुण्या मदालसा।

पदानि तस्याश्चैतानि घनान्यल्पतनूनि च ● ॥ ३२॥

---

कृष्णचेष्टा एवाह—'**कृष्णोऽहं**' मिति पञ्चभिः। यदि कृष्णमन्विच्छथ तर्हि इतः, समायातः, यतोऽहमेव कृष्ण इति॥ २५-२८॥

व्यग्राः उत्सुकाः॥ २९॥

अन्वेषणप्रकारमाह—'**विलोक्ये**' ति दशभिः पुलकैराचितं व्याप्तं सर्वमङ्गं यस्याः सा॥ ३०॥

ध्वजवज्रांकुशाब्जाङ्करेखावन्ति ध्वजादिलक्षणां या रेखाः तद्युक्तानि पश्यत। हे आलि! सखि! बहुवचनार्थे चैकवचनम्। लीलयालङ्कृत यथा भवत्येवं गमनशीलस्य॥ ३१॥

धनानि मन्थरगतित्वादल्पान्तराणि अल्पतनूनि अदीर्घाण्यस्थूलानि चेति स्त्रीपदत्वे लिङ्गानि॥ ३२॥

**पुष्पावचयमत्रोच्चैश्चक्रे दामोदरो ध्रुवम्।**
**येनाग्राक्रान्तिमात्राणि पदान्यत्र महात्मनः॥ ३३॥**
**अत्रोपविश्य सा तेन कापि पुष्पैरलङ्कृता।**
**अन्यजन्मनि सर्वात्मा विष्णुरभ्यर्च्चितो यया॥ ३४॥**
**पुष्पबन्धनसम्मान-कृतमानामपास्य ताम्।**
**नन्दोपसुतो यातो मार्गेणानेन पश्यत॥ ३५॥**
**अनुयोगऽसमर्थान्या नितम्बभरमन्थरा।**
**या गन्तव्ये द्रुतं याति निम्नपादाग्रसंस्थितिः॥ ३६॥**
**हस्तन्यस्ताग्रहस्तेयं तेन याति तथा सखि।**
**अनायत्तपदन्यासा लक्ष्यते पदपद्धतिः॥ ३७॥**
**हस्तसंस्पर्शमात्रेण धूर्त्तेनैषा विमानिता।**
**नैरास्यमन्दगामिन्या निवृत्तं लक्ष्यते पदम्॥ ३८॥**

---

• पदानि पदचिह्नानि। एतानि प्रत्यक्षं दृश्यमानानि। मदेन कामजन्यमत्ततया अलसा मन्थरगतिः। घनानीत्यादिविशेषणभावः श्रीधरेणैव वर्णितः।

उच्चैः ऊर्द्ध्वीभूय स्थित्वा पुष्पावचयं चक्रे, तत्र लिङ्ग **'येने'**ति। अग्रेणैव प्रपदैनैवाक्रान्तिमात्रं ईषद्भूसंस्पर्शो येषां तानि॥ ३३॥

कृष्णजानुमध्योपवेशचिन्हं दृष्ट्वाह—**'अत्रोपविश्ये'** ति॥ ३४॥

पुष्पबन्धरूपेण सम्मानेन कृतो मानो गर्वो यया ताम्॥ ३५॥

तस्य पृष्ठतोऽन्यस्याः पदानि दृष्टवा कल्पयन्ति—**'अनुयाने'** ति। नितम्बभरेण मन्थरा स्थिरापि या कृष्णेन संह गन्तव्ये गमने कर्त्तव्ये सति द्रुतं याति, तत्र लिङ्गं निम्नै पादाग्रैः संस्थितिर्यस्याः सा॥ ३६॥

कृष्णेन स्वहस्ते न्यस्तोऽग्रहस्तो हस्ताग्रं यस्याः सेयं तेन सह याति. तत्र लिङ्गम् अनायत्तः अस्वाधीनः पदन्यासो यस्याः तथाभूता हि पदपङ्क्तिर्लक्ष्यते॥ ३७॥

ततश्च हस्तग्रहणमात्रं कृत्वा तेन धूर्त्तेन शठेनैषा विमानिता अवज्ञया त्यक्ता। तत्र लिङ्गम् नैराश्यमन्दगामिन्याः निराशतया मन्दं गच्छन्त्या निवृत्तं प्रतिलोमं पदं लक्ष्यते॥ ३८॥

नूनमुक्ता त्वरामीति पुनरेष्यामि तेऽन्तिकम्।
तेन कृष्णेन येनैषा त्वरिता पदपद्धतिः॥३९॥
प्रविष्टो गहनं कृष्णः पदमत्र न लक्ष्यते।
निवर्त्तध्वं शशाङ्कस्य नैतद्दीधितिगोचरे॥४०॥
निवृत्तास्तास्ततो गोप्यो निराशाः कृष्णदर्शने।
यमुनातीरमागत्य जगुस्तच्चरितं तदा॥४१॥
ततो ददृशुरायान्तं विकाशिमुखपङ्कजम्।
गोप्यस्त्रैलोक्यगोप्तारं कृष्णमक्लिष्टचेष्टितम्॥४२॥
काचिदालोक्य गोविन्दमायान्तमतिहिर्षिता।
कृष्ण कृष्णेति कृष्णेति प्राह नान्यवुदैरयत्॥४३॥
काचिद् भ्रूभङ्गुरं कृत्वा ललाटफलकं हरिम्।
विलोक्य नेत्रभृङ्गाभ्यां पपौ यन्मुखपङ्कजम्॥४४॥
काचिदालोक्य गोविन्दं निमीलित-विलोचना •।
तस्यैव रूपं ध्यायन्ती योगारूढेव चाबभौ॥४५॥

---

'**नूनमुक्त**'ति,—त्वमत्रैव तिष्ठ, इतः कश्चिद्राक्षसोऽस्ति, तं हन्तुम्, अहं त्वरामि शीघ्रं यामि, पुनश्च तवान्तिकामागमिष्यामीति नूनमेव तेनोक्ता। तत्र लिङ्गम् येनैषा कृष्णस्य पदानांः पङ्क्ति त्वरिता निम्नाग्रा लक्ष्यते॥३९॥

कृष्णान्वेषणात्तामां निवृत्तिमाह—'**प्रविष्ट**' इति द्वाभ्याम् । गहनं निविडं दुर्गमं वनं प्रविष्टः अतएव शसाङ्करश्मिप्रवेशाभावात् तस्य पदमत्र न लक्ष्यते॥४०॥

ततो निंवृत्ताः सत्यो यमुनातीरं प्राक्तनं रासस्थानं शीघ्रमागत्य कृष्णोपलब्धये तच्चरितं जगुः॥४१॥

स्वप्रेमगानमाकर्ण्य गते कृष्णे तासां तद्दर्शनोत्सवमाह—'**तत**' इति चतुर्भिः॥४२-४३॥

''**कात्द् भ्रूभङ्गुर**' मिति। प्रणयकोपेन वक्रिताभ्यां भ्रूभ्यां भङ्गुरम् आकुञ्चितं ललाटफलकं कृत्वा हरिं विलोक्य नेत्ररूपाभ्यां भृङ्गाभ्या तस्य मुखपङ्कज पपौ॥४४॥

काचिद् गोविन्दमालोक्य विवृतेन नेत्रद्वारेणान्तः प्रवेश्य विवृतेन नेत्रद्वारेणैव पुनर्यास्यतीति निमीलितलोतचना ध्यायन्ती सती बभौ॥४५॥

• निमीलिते मुद्रिते लोचने यया सा। तस्यैव प्रियस्य गोविन्दस्यैव रूपं मूर्त्ति ध्यान्ती योगारूढेव योगमास्थितेव आबभौ।

ततः काश्चित् प्रियालापैः काश्चिद् भ्रूभङ्गवीक्षणैः।

निन्येऽनुनयमन्याश्च करस्पर्शेन माधवः॥४६॥

ताभिः प्रसन्नचित्ताभिर्गोपीभि सह सादरम्।

रराम रासगोष्ठीभिरुदारचरितो हरिः॥४७॥

रासमण्डलबन्धोऽपि कृष्णपार्श्वमनुज्झता।

गोपीजनेन नैवाभूदेकस्थानस्थिरात्मना ॥४८॥

हस्ते प्रगृह्य चैकेकां गोपिकां रासमण्डलीम्।

चकार तत्करस्पर्श-निमीलितदृशं हरिः॥४९॥

ततः स ववृते रासश्चलद्वलयानिःस्वनः।

अनुयातशरत्काव्यगेयगीतिरनुक्रमात् ॥५०॥

कृष्णः शरच्चन्द्रमसं कौमुदी कुमुदाकरम्।

जगौ गोपीजनस्त्वकं कृष्णानाम पुनः पुनः॥५१॥

---

तासामनुनयपूर्वकं ताभिः रासक्रीडामाह—'**ततः काचि**' दित्यादिना '**क्षपिताहित**' इत्यन्तेन। अनुनयं निन्ये सान्त्वयामास॥४६-४७॥

'**रासमण्डलबन्धोऽपी**' ति कृष्णस्य पार्श्वमनिन्ज्झता अत्यजता एकस्मिन्नेव स्थाने कृष्णसमीप एवाहमहमिकया स्थिरात्मना निश्चलचित्तेन गोपीजनेन रासोचितो मण्डलबन्धोऽपि नैवाभूत कुतः पुनः रासक्रीडा॥४८॥

तदा च हरिर्यथा रासमण्डलं कृतवान्—'**हस्ते प्रगृह्ये**' ति। हरिः एकां गोपीं हस्ते गृहीत्वैकत्र स्थापितवान्, सा च तत करस्पर्शसुखेन निमीलिताक्षी आसीत्। तां च अन्यस्याः स्वकारस्पर्शसुखपरवशाया हस्तं ग्राहयामास, तामप्येवमन्यस्या हस्तमित्येकैकां हस्ते गृहीत्वा रासमण्डली चकार, ताश्च सर्वा हरिहस्तस्पर्शसुखपरवशाः प्रत्येकं हरिणैव गृहीतहस्तमात्मानं मेनिरे॥४९॥

चलतां बलयानां निःस्वनो यस्मिन् सः। अनुयातशरत्काव्यगेयगीतिरिति—शरद्वर्णनादिरूप यत् काव्येषु गेयं तस्य या गीतिर्गानं सा अनुयाता अनुसृता यस्मिन् स रासः प्रवृत्तः॥५०॥

परिवर्त्तश्रमेणैका चलद्वलयलापिनीम्।
ददौ बाहुलतां स्कन्धे गोपी मधुनिघातिनः॥५२॥
काचित् प्रविलसद्बाहुः परिरभ्य चुचुम्ब तम्।
गोपी गीतस्तुतिव्याज-निपुणा मधूसूदनम• ॥५३॥
गोपी-कपोलं-संश्लेषमभिपत्य हरेर्भुजौ।
पुलकोद्गमशस्याय स्वेदाम्बुधनतां गतौ॥५४॥
रासगेयं जगौ कृष्णो यावत् तारतरध्वनिः।
साधु कृष्णेति कृष्णेति तावत् ता द्विगुणं जगुः॥५५॥
गते तु गमनं चक्रुर्वलने सम्मुखं ययुः।
प्रतिलोमानुलोमाभ्यां भेजुर्गोपाङ्गना हरिम्॥५६॥
स तथा सह गोपीभि रराम मधुसूदनः।
यथाब्दकोटिप्रमितः क्षणस्तेन विनाभवत्॥५७॥
ता वार्य्यमाणाः पतिभिः पितृभिर्भ्रातृभिस्तथा।
कृष्णं गोपाङ्गना रात्रौ रमयन्ति रतिप्रियाः॥५८॥
सोऽपि कैशोरकवयो मानयन् मधुसूदनः.
रेमे ताभिरमेयात्मा क्षपासु क्षपिताहितः॥५९॥

---

एतदेवाह—''**कृष्णः शरच्चन्द्रमस**'' मिति।।५२।।

प्रकर्षेण विलसन्तौ सविलासं सञ्चलन्तौ बाहू यस्याः स, तथाभूता काचिद् गोपी गीतस्तुतिः गीतेन या स्तुतिः प्रशस्तिः श्रीकृष्णस्येति शेषः सैव व्याजः व्यपदेशः तत्र निपुणा दक्षा। परिरभ्य आलिङ्गय। आत्मनः श्रीकृष्णपरिमभ्ण चुम्बनाभिप्रायमहनोतुं तथा निपुणं व्याजाश्रयणमिति ध्येयम्।

• प्रकर्षेण विलसन्तौ सविलासं सञ्चलन्तौ बाहू यस्याः स, तथाभूता काचिद् गोपी गीतस्तुतिः गीतेन या स्तुतिः प्रशस्तिः श्रीकृष्णस्येति शेषः सैव व्याजः व्यपदेशः तत्र निपुणा दक्षा। परिरभ्य आलिङ्गय। आत्मनः श्रीकृष्णपरिमभ्ण चुम्बनाभिप्रायमहनोतुं तथा निपुणं व्याजाश्रयणमिति ध्येयम्।

बलने आवृत्तौ। '**प्रतिलोमानुलोमाभ्या**' मिति—गमने अनुलोमगत्या बलने च प्रतिलोमगत्येत्येत्यर्थः॥५६-५८॥

कैशोरकं कौमारं वयो मानयन् तद्वयः स्थोचितं चापलमनुकुर्वन् रेमे॥५९॥

तद्भर्तृषु तथा तासु सर्वभूतेषु चेश्वरः।
आत्मस्वरूपरूपोऽसौ व्याप्य सर्वमवस्थितः॥६०॥
यथा समस्तभूतेषु नभोऽग्निः पृथिवी जलम्।
वायुश्चात्मा तथैवासौ व्याप्य सर्वमवस्थितः॥६१॥

इति श्रीविष्णुपुराणे पञ्चमांशे त्रयोदशः अध्यायः॥

---

ननु धर्मस्थापनायावतीर्णो भगवान् कथं गोपाङ्ग पापे प्रवर्त्तयन् स्वयमपि पापं चकारेत्यत्राह—'**तदभर्त्तृष्वि**' ति न तावद्गोपीनां पापभस्ति स्वभक्ताहितक्षपणस्य तस्य तद्दोषक्षणेऽपि समर्थत्वात्। न च तस्य दोषः, तद्भर्त्रादि—सर्वव्यापिपरमात्मरूपत्वात्॥६०॥

सर्वव्यापित्वमेव दृष्टान्तेनाह—'**यथे**' ति॥६१॥

**इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा**
**श्रीविष्णुपुराणटीकायां पञ्चमांशे त्रयोदशोऽध्यायः॥**

## चतुर्दशोऽध्याय:

### (वृषभासुरवध:)

पराशर उवाच

प्रदोषार्द्धे कदाचित्तु रासासक्ते जनार्द्दने।
त्रासयन् समदो गोष्ठमरिष्टः समुपागतः॥ १॥
सतोय-तोयदच्छायस्तीक्ष्णशृङ्गोऽर्कलोचनः• ।
खुमाग्रपातैरत्यर्थ दारयन् वसुधातलम्॥ २॥
लेलिहानः सनिष्पेषं जिह्वयोष्ठौ पुनः पुनः।
संरम्भाविद्धलाङ्गूलः कठिनस्कन्धबन्धनः॥ ३॥
उदग्रककुदाभोगः प्रमाणाद् दुरतिक्रमः।
विण्मूत्रलिप्तपृष्ठाङ्गो गवामुद्वेगकारकः॥ ४॥
प्रलम्बकण्ठोऽतिमुखस्तरुघातङ्कितानन:।
पातयन् स गवां गर्भान् दैत्यो वृषभरूपधृक्।
सूदयंस्तापसानुग्रो वनान्यटति यः सदा॥ ५॥
ततस्तमतिघोराक्षमवेक्ष्यातिभयातुराः।
गोपा गोपस्त्रियश्चैव कृष्ण कृष्णेति चुक्रुशुः॥ ६॥
सिंहनादं ततश्चक्रे तलशब्दञ्च केशवः।
तच्छब्दश्रवणाच्चासौ गोविन्दाभिमुखं ययौ॥ ७॥

---

प्रदोषार्द्धे सन्ध्यावसाने अरिष्टो नाम वृषभाकृतिर्दैत्यः समदो गोष्ठं त्रायसन् समुपागतः॥ १॥ अर्कवल्लोचने यस्य सः॥ २॥

• सतोयः जलयुक्तः यः तोयदः मेघः तस्य छाया कान्तिरिव छाया कान्तिर्यस्य सः कृष्णवर्ण इत्यर्थः।

सनिष्पेषं ससङ्घर्षं यथा भवत्येवमोष्ठौ जिह्वया लेलिहानः, संरम्भादाविद्धमुन्नमितं लाङ्गूलं येन, कठिनं स्कन्धबन्धनं यस्य॥ ३॥

उदग्रस्योच्छ्रितस्य ककुदो गलपृष्ठाशृङ्गस्याभोगो विस्तारो यस्य सः उच्चतरप्रमाणदन्यैर्दुरतिक्रमः॥ ४-७॥

अग्रन्यस्तविषाणाग्रः कृष्णकुक्षि-कृतेक्षणः।
अभ्यधावत• दुष्टात्मा कृष्णं वृषभदानवः॥८॥
आयान्तं दैत्यवृषभं दृष्ट्वा कृष्णो महाबलः।
न चचाल ततः स्थानादवज्ञास्मितलीलया॥९॥
आसन्नं चैव जग्राह ग्राहवन्मधुसूदनः।
जघान जानुना कुक्षौ विषाणग्रहणाचलम्॥१०॥
तस्य दर्पबलं भङ्क्त्वा गृहीतस्य विषाणयोः।
अपीड़यदरिष्टस्य कण्ठं क्लिन्नमिवाम्बरम्॥११॥
उत्पाट्य शृङ्गमेकन्तु तेनैवाताडयत् ततः।
ममार स महादैत्यो मुखाच्छोणितमुद्वमन्॥१२॥
तुष्टुवुर्निहते तस्मिन् दैत्ये गोपा जनार्दनम्।
जम्भे हते सहस्राक्षं पुरा देवगणा यथा॥१३॥

इति श्रीविष्णुराणे पञ्चमांशे चतुर्दशः अध्यायः॥

---

अग्रे पुरतो न्यस्ते विषाणाग्रे येन। कृष्णस्य कुक्षी कतमीक्षणं येन॥८॥

• अभ्यधावतेत्यात्मनेपदमार्षम्। कृष्णमुद्दिश्येति शेषः अथवा अभ्यधावतेत्यत्र अभिशब्दः कर्मप्रवचनीयः पृथग्भूतं पदं तद्योगे कृष्णमिति द्वितीया।

अवज्ञया स्मितं सैव लीला तया॥९॥

विषाणग्रहणादचलं स्थिरं सन्तं जघान॥१०॥

**इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे चतुर्दशोऽध्यायः॥**

## पञ्चदशोऽध्यायः

### (श्रीकृष्णमानेतुं कंसेनाक्रूरस्य प्रेषणम्)

पराशर उवाच

ककुद्मिनि हतेऽरिष्टे धेनुके विनिपातिते।
प्रलम्बे निहिते वीरे दृते गोवर्द्धनाचले॥ १॥
दमिते कालिये नागे भग्ने तुङ्गत्तरुद्वये।
हतायां पूतनायाञ्च शकटे परिवर्त्तिते॥ २॥
कंसाय नारदः प्राह यथावृत्तमनुक्रमात्।
यशोदादेवकीगर्भपरिवर्त्ताद्यशेषतः॥ ३॥
श्रुत्वा तत् सकलं कंसो नारदाद् देवदर्शनात्।
वसुदेवं प्रति तदा कोपं चक्रे सुदुर्म्मतिः॥ ४॥
सोऽतिकोपादुपालभ्य सर्वयादवसंसदि।
जगर्ह यादवांश्चैव कार्य्यञ्चैतदचिन्तयत्॥ ५॥
यावन्त बलमारूढौ राम-कृष्णौ सुबालकौ।
तावदेव मया वध्यावसाध्यौ रूढयौवनौ॥ ६॥
चाणूरोऽत्र महायीर्य्यो मुष्टिकश्च महाबलः।
एताभ्यां मल्लयुद्धेन घातयिष्यामि दुर्मदौ॥ ७॥
धनुर्म्महमहायागव्याजेनानीय तौ व्रजात्।
तथा तथा यतिष्यामि यास्तेते सङ्क्षयं यथा॥ ८॥

---

वसतो गोकुले चित्रं कर्म कृष्णस्य वर्णितम्। अथाह मथुराकृत्यं प्रस्तोतुं नारदादमम्। तदेवम् गोकुले रास-क्रीडादिविनोदैः कंसवधादिदेवकार्यं हरिणा विस्मृतमिवालक्ष्य तत्स्मरणप्रसङ्गात् नारदागमनादिकमाह—'**ककुद्मिनी**' त्यादिना यावदध्यायसमाप्तिः। ककुद्मिनि वृषभाकृतौ दैत्ये॥ १।२॥

यशोदा-देवक्योर्गर्भयोरपत्ययोः परिवर्त्तादिः॥ ३।४॥

वसुदेवमुपालभ्य निर्भर्त्स्य जगर्ह निन्दितवान्॥ ५॥

कंसस्य मनोरथप्रकारमाह—'**यावदि**'ति षड्भिः॥ ६॥

श्वफल्कतनयं सोऽहमक्रूरं यदुपुङ्गवम्।
तयोरानयनार्थाय प्रेषयिष्यामि गोकुलम्॥ ९॥
वृन्दावनचरं घोरमादेक्ष्यामि च केशिनम्।
तत्रैवासावतिबलस्तावुभौ घातयिष्यति॥ १०॥
गजः कुवलयापीडो मत्समीपमुपागतौ।
घातयिष्यति वा गोपौ वसुदेवसुतावभौ॥ ११॥

पराशर उवाच

इत्यालोच्य स दुष्टात्मा कंसो राम-जनार्दनौ।
हन्तुं कृतमतिर्वीरमक्रूरं वाक्यमब्रवीत्॥ १२॥

कंस उवाच

भो भो दानपते! वाक्यं क्रियतां प्रीतये मम।
इतः स्यन्दनमारुह्य गम्यतां नन्दगोकुलम्॥ १३॥
वसुदेवसुतौ तत्र विष्णोरंशसमुद्भवौ।
नाशाय किल सम्भूतौ मम दुष्टौ प्रवर्द्धतः॥ १४॥
धनुर्महा ममाप्यत्र चतुर्द्दश्यां भविष्यति।
आनेयौ भवता गत्वा मल्लयुद्धाय तावुभौ॥ १५॥
चाणूर-मुष्टिकौ मल्लौ नियुद्धकुशलौ मम।
ताभ्यां सहानयोर्युद्धं सर्वलोकोऽत्र पश्यतु॥ १६॥
नागः कुवलयापीडो महामात्रप्रचोदितः।
स वा निहंस्यते पापौ वसुदेवात्मजौ शिशू॥ १७॥
तौ हत्वा वसुदेवञ्च नन्दगोपञ्च दुर्म्मतिम्।
हनिष्ये पितरं चैनमुग्रसेनं सुदुर्म्मतिम्॥ १८॥

---

स्वाभिप्रायः निवेदयन् कंसोऽक्रूरमादिशति—**'भो भो'** इत्यादि—दशभिः॥ १३॥

प्रवर्द्धतः प्रकर्षेण वर्द्धेते॥ १४॥

नियुद्धकुशलौ द्वन्द्वयुद्धाभिज्ञौ॥ १५-१६॥

ततः समस्तगोपानां गोधनान्यखिलान्यहम्।
वित्तं चापि हरिष्यामि दुष्टानां मद्वधैषिणाम्॥ १९॥
त्वामृते यादवाश्चैते, दुष्टा दानपते! मयि।
एतेषाञ्च वधायाहं प्रयतिष्याम्यनुक्रमात्॥ २०॥
ततो निष्कण्टकं सर्व राज्यमेतदयादवम्।
प्रशासिष्ये त्वया तस्मान्मत्प्रीत्या वीर! गम्यताम्• ॥ २१॥
यथा स माहिषं सर्पिर्दधि वाप्युपहार्य वै।
गोपाः समानयन्त्याशु त्वया वाच्यास्तथा तथा॥ २२॥

पराशर उवाच

इत्याज्ञप्तस्तदाक्रूरो महाभागवतो द्विज।
प्रीतिमानभवत् कृष्णं श्वो द्रक्ष्यामीति सत्वरः॥ २३॥
तथेत्युक्त्वा च राजानं रथमारुह्य शोभनम्।
निश्चक्रान्त ततः पुर्य्या मथुराया मधुप्रियः॥ २४॥

इति श्रीविष्णुपुराणे पञ्चमांशे पञ्चदशः अध्यायः॥

---

महामात्रो हस्तिपस्तेन प्रचोदितः॥ १७-२१॥

• निः न विद्यते, कण्टकः क्षुद्रशत्रुः यस्य तथाभूतम्। **'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टक'** इति कोषात्। प्रशसिष्ये इत्यात्मनेपदमार्षम्।

उपहार्य उपायनीकृत्य॥ २२॥

मधुप्रियः माधोर्वंश्यानां प्रियः॥ २४॥

**इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे पञ्चदशोऽध्यायः॥**

# षोडशोऽध्यायः

## (केशिवधः)

पराशर उवाच

केशी चापि बलोदग्रः कंसदूत-प्रणोदितः
कृष्णस्य निधनाकाङ्क्षी वृन्दावनमुपागमत्॥ १॥
स खुरक्षतभूपृष्ठः सटाक्षेपधूताम्बूदः।
प्लुतविक्रान्तचन्द्रार्कमार्गे गोपानुपाद्रवत्॥ २॥
तस्य ह्रेषिशब्देन गोपाला दैत्यवाजिनः।
गोप्यश्च भयसंविघ्ना गोविन्दं शरणं ययुः॥ ३॥
त्राहि त्राहीति गोविन्दः श्रुत्वा तेषां तदा वचः।
सतोयजलदध्वानगम्भीरमिदमुक्तवान्॥ ४॥

श्रीकृष्ण उवाच

अलं त्रासेन गोपालाः केशिनः किं भयातुरैः।
भवद्भिर्गोपजातीयैर्वीरवीर्य्य विलोप्यते॥ ५॥
किमनेनाल्पसारेण ह्रेषिताटोपकारिणा।
दैतेयबलावहेन वल्गता दुष्टवाजिना॥ ६॥

---

बलोदग्रः बलेनोद्धतः कंसस्य. दूतेन स्वस्थानादेव प्रचोदितः। न तु कंसेनाहूय स्वयं प्रेषितः आशु कार्यत्वादस्यार्थस्य तावद्विलम्बासहनात्॥ १॥

स्वखुरैः क्षतं भूपृष्ठं येन सटानां केशराणां क्षेपेन धूननेन धूता विचलिता अम्बुदा येन। प्लुतेन प्लवनेन विक्रान्तौ विलंघितौ चन्द्रार्कमार्गौ येन॥ २-३॥

सतोयस्य जलदस्य ध्वानो गर्जित तद्वद्गम्भीरं यथा भवत्येवमुक्तवान्॥ ४॥

किं वीरवीर्य्यं विलोप्यत इतिं। यदा स्वामिनि सन्निहिते सत्यपि परिजनो भयातुरः स्यात्तदासौ स्वामी मन्दवीर्य्य इत्यन्येषां बुद्धिः स्यात्। अतो मदीयैर्भवद्भिर्भीरुतया मम वीर्य्यस्य वीर्यलोपः किमिति क्रियत इत्यर्थः॥ ५॥

षितमेवाटोपस्तत्कारिणा दैत्येन बलाद् बाह्येन दैत्यैर्हि बलादाक्रम्यायमारुह्यते अतो दैत्यहन्तृणामस्माकं किमनेन भवेदित्यर्थः । वलातत्रिकमवनम्य गच्छता। तदुक्तं वलितं तु नतत्रिकमिति॥ ६॥

एह्ये हि दुष्ट कृष्णोऽहं पूष्णस्त्विव पिनाकधृक्।
पातयिष्यामि दशनान् वदनादखिलांस्तव॥७॥
इत्युक्त्वास्फोट्य गोविन्दः केशिनः सम्मुखं ययौ।
विवृतास्यस्तु सोऽप्येनं दैतेश्चाप्युपाद्रवत्॥८॥
बाहुमाभोगिनं कृत्वा मुखे तस्य जनार्द्दनः।
प्रवेशयामास तदा केशिनो दुष्टवाजिनः॥९॥
केशिनो वदनं तेन विशता कृष्णबाहुना।
शातिता दशनाः पेतुः सिताभ्रावयवा इव॥१०॥
कृष्णस्य ववृधे बाहुः केशिदेहगतो द्विज।
विनाशाय यथा व्याधिरासम्भूतेरुपेक्षितः॥११॥
विपाटितोष्ठो बहुलं सफेनं रुधिरं वम्।
सोऽक्षिणी विवृते चक्रे निःसृते मुक्तबन्धने॥१२॥
जघान धरणीं पादैः शकृन्मूत्रं समुत्सृजन्।
स्वेदार्द्रगात्रः श्रान्तश्च निर्यन्तः सोऽभवत् ततः• ॥१३॥
व्यादितास्यो महारौद्रः सोऽसुरः कृष्णबाहुना।
निपपात द्विधाभूतो वैद्युतेनः द्रुमो यथा॥१४॥
द्विपादपृष्ठपुच्छार्द्धे श्रवणैकाक्षिनासिके।
केशिनस्ते द्विधाभूते शकले द्वे विरेजतुः• ॥१५॥

---

पूष्णो दन्तान् पिनाक्धृक् वीरभद्र इव पूष्णोरिवेति पाठे पौष्णश्चरुरैन्द्रा पौष्णश्चरुरित्यादिषु पूष्ण एव केवलरूपेणेन्द्रसाहित्यरूपेण च देवतारूपभेदाद् द्विवचनम्॥७-८॥

आभोगिनं विस्तारिणम्॥९॥

शातिताः आहताः॥१०॥

आसम्भूतेरुत्पत्तेर्वृद्धिपर्यन्तम्॥११-१३॥

• शकृत् पुरीषं विष्ठेत्यर्थः, '**उच्चारावस्करौ शमलं शकृत्। गूछं पुरीषं वर्चस्कमस्त्री विष्ठाविषौ स्त्रिया**' मिति कोषात्। स्वेदेन घर्मजलेन आर्द्रसिक्तं गात्रं यस्य सः। निर्यन्तः निश्चेष्टः, व्यादितं विवृतमास्यं यस्य वैद्युतेन अशनिना॥१४॥

• शकले द्वे खण्डे, '**भित्तं शकल-खण्डे वा**' इति कोषात्।

हत्वा तु केशिनं कृष्णो गोपलैर्मुदितैर्वृतः।
अनायास्ततनुः स्वस्थो हसंस्तत्रैव तस्थिवान्॥ १६॥
ततो गोप्यश्च गोपाश्च हते केशिनि विस्मिताः।
तुष्टुवुः पुण्डरीकाक्षमनुरागमनोरमम्• ॥ १७॥
अथाहान्तरितो विप्रो नारदो जलदे स्थितः।
केशिनं निहतं दृष्ट्वा हर्षनिर्भरमानसः॥ १८॥
साधु साधु जगन्नाथ लीलयैव यदच्युत।
निहतोऽयं त्वया केशी क्लेशदस्त्रिदिवौकसाम्॥ १९॥
युद्धोत्सुकोऽहमत्यर्थं नरवाजि-महाहवम्।
अभूतपूर्वमन्यत्र द्रष्टुं स्वर्गादुपागतः• ॥ २०॥
कर्म्माण्यत्रावतारे ते कृतानि मधुसूदन।
यानि तैर्विस्मितं चेतस्तोषमेतेन मे गतम्॥ २१॥
तुरङ्गस्यास्य शक्रोऽपि कृष्ण! देवाश्च बिभ्यति।
धुतकेशलजालस्य ह्रेषतोऽभ्रावलोकिनः॥ २२॥
यस्मात् त्वयैव दुष्टात्मा हतः केशी जनार्द्दन।
तस्मात् केशवनाम्ना त्वं लोके गेयो भविष्यसि॥ २३॥

---

द्वौ द्वौ पादौ ययोः पृष्टपुच्छे च अर्द्धरूपे ययोः। एकशब्दः श्रवणपदात् प्राग्योज्यः तेन एकैकाः श्रवणाक्षिनामिका ययोस्ते च तथोक्ते॥ १५-१६॥

• अनुरागेण कृष्णप्रेम्णा मनोरमं मनोज्ञं यथा स्यात् तथा तुष्टुवुः। अथवा अनुरागेण गोपगोपिकासु प्रीत्या मनोरमम् मुखस्मितादिसुभगं पुण्डरीकाक्षमिति सम्बन्धः। मनसि रममाणं क्रीडन्त गोपगोपिकानामिति वार्थः।

युद्धोत्सुकः युद्धदर्शनोत्सुकः॥ २०-२१॥

• नरः मानवः प्रकृते नररूपधारी श्रीकृष्णः, वाजी अश्वः प्रकृते अश्वरूपः केशिदानवः, तयो नरवाजिनोः महाहवः महायुद्ध। अन्यत्र अस्मादपरस्थाने अभूतपूर्वम् अवृत्तपूर्व पूर्वमज्ञामित्यर्थः. स्वर्गात् उपागतः अपूर्ववस्तुदर्शनलोभादिति भावः।

धुतं कम्पितं केशराणां जालं समूहो येन तस्य ह्रेषतः ह्रेषारवं कुर्वतः॥ २२॥

केशिवधात् केशव इत्यक्षरसाम्यान्नामनिरुक्तिः॥ २३॥

स्वस्तस्तु ते गमिष्यामि कंसयुद्धेऽधुना पुनः।
परश्वोऽहं समेष्यामि त्वाय केशिनिसूदन॥ २४॥
उग्रसेनसुते कंसे सानगे विनिपातिते।
भारावतारकर्त्ता त्वं पृथिव्याः पृथिवीधर॥ २५॥
तत्रानेकप्रकाराणि युद्धानि पृथिवीक्षिताम्।
द्रष्टव्यानि मया युस्मत्प्रणीतानि जनार्द्दन॥ २६॥
सोऽहं यास्यामि गोविन्द! देवकार्य महत् कृतम्।
त्वया सभाजितश्चायं स्वस्ति तेऽस्तु व्रजाम्यहम्॥ २७॥

पराशर उवाच

नारदे तु गते कृष्णः सह गोपैरविस्मितः।
विवेश गोकुलं गोपी-नेत्रपानैकभाजनम्॥ २८॥

इति श्रीविष्णुपुराणे पञ्चमांशे षोडशः अध्यायः॥

---

अधुना गमिष्यामि परश्वः कंसयुद्धे पुनस्त्वया समेष्यामि॥ २४॥
पृथिव्या भारहर्त्ता त्वं भविष्यसि॥ २५॥
तत्र भारावतारकारणे आयुष्मता त्वया प्रणीतानीति लोकोक्तिः॥ २६॥
इत्थं मनोहरैः कर्मभिः सभाजितः सत्कृतः॥ २७॥
गोपीनेत्राणां पानस्यादरवीक्षणस्यैकमेव भाजनं विषयः कृष्णौ विवेश॥ २८॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमांशे षोडशोऽध्यायः॥

# सप्तदशोऽध्यायः

## (अक्रूरस्य गोकुलयात्रा)

पराशर उवाच

अक्रूरोऽपि विनिष्क्रम्य स्यन्दनेनाशुगामिना।
कृष्णसन्दर्शनायैकः प्रययौ नन्दगोकुलम्॥ १॥
चिन्तयामास चाक्रूरो नास्ति धन्यतरो मया।
योऽहमंशावतीर्णस्य मुखं द्रक्ष्यामि चक्रिणः॥ २॥
अद्य मे सफलं जन्म सुप्रभाता च मे निशा।
यदुन्निद्राब्जपत्राक्षं विष्णोर्द्रक्ष्याम्यहं मुखम्॥ ३॥
अद्य मे सफले नेत्रे अद्य मे सफला गिरः।
यन्मे परस्परालापो दृष्ट्वा विष्णुं भविष्यति॥ ४॥
पापं हरित यत् पुंसा स्मृतं सङ्कल्पनामयम्।
तत् पुण्डरीकनयनं विष्णोर्द्रक्ष्याम्यहं मुखम्● ॥५॥
निर्जग्मुश्च यतो वेदा वेदाङ्गान्यखिलानि च।
द्रक्ष्यामि तत् परं धाम धाम्नां भगवतो मुखम्॥ ६॥

---

श्रीकृष्णो गोकुलं विवेश, अक्रूरोऽपि मथुराया विनिष्क्रम्य गोकुलं प्रययौ॥ १॥

पथि गच्छतोऽक्रूरस्य मनोरथानाह—'चिन्तयामासे' त्यादिना 'अक्रूरेति वक्ष्यती' त्यन्तेन। मया सदृशो धन्यतरो नास्ति॥ २-४॥

सङ्कल्पनामयं ध्यानामात्रालम्बनमपि॥५॥

• पुण्डरीवत् श्वेतपद्मवत् नयने यत्र तत्. एतेन अक्रूरस्य कंसेन प्रेषितत्वे सत्यपि तस्य कृष्णभक्ततयां तं प्रति कृष्णनयनयोः क्रोधप्रयुक्तरक्तत्वा भावप्रत्यायनात् विद्वेषाभावो गम्यते।

धाम्नां तेजोमयानां सूर्यादीनां परं धाम आश्चर्य मुखावयवेषु लोचनरसनवदनेषु सूर्यवरुणाग्नीनामाश्रयत्वात्॥ ६-७॥

यज्ञेषु यज्ञपुरुषः पुरुषैः पुरुषोत्तमः।
इज्यते योऽखिइलाधारस्तं द्रक्ष्यामि जगत्पतिम्॥ ७॥
इष्ट्वा यमिन्द्रो यज्ञानां शतेनामरराजताम्।
अवाप तमनन्तादिमहं द्रक्ष्यामि केशवम्॥ ८॥
न ब्रह्मा नेन्द्र-रुदा-श्वि-वस्वा-दित्य-मरुद्गणाः।
यस्य स्वरूपं जानन्ति स्प्रक्ष्यत्यङ्गं स मे हरिः॥ ९॥
सर्वात्मा सर्ववित् सर्वः सर्वभूतेष्वस्थितः।
यो वितत्याव्ययो व्यापी स वक्ष्यति मया सह॥ १०॥
मत्स्य-कूर्म-वराहा-श्व-सिंहरूपादिभिः स्थितिम्।
चकार जगतो योऽजः सोऽद्य मामालपिष्यति॥ ११॥
साम्प्रतञ्च जगत्स्वामी कार्यमात्महृदि स्थितम्।
कर्त्तु मनुष्यतां प्राप्तः स्वेच्छादेहधृगव्ययः॥ १२॥
योऽनन्तः पृथिवीं धत्ते शेखरस्थितिसंस्थिताम्।
सोऽवतीर्णो जगत्यर्थे मामक्रूरेति वक्ष्यति॥ १३॥
पितृ-पुत्र-सुहृद-भ्रातृ-मातृ- बन्धुमयीमिमाम्।
यन्मायां नालमुत्तर्त्तु जगत् तस्मै नमो नमः॥ १४॥
तरस्यविद्यां विततां हृदि यस्मिन् निवेशिते।
योगी मायममेयाय तस्मै विद्यात्मने नमः॥ १५॥

---

नास्त्यन्तश्चादिश्च यस्य तमनन्तादिम्॥ ८॥

वितत्यावस्थितः, वक्ष्यति वदिष्यति॥ १०॥

मत्स्य-कूर्म-वराहाश्व-सिंहारूपादिभिः अश्वः हयग्रीवः सिंहो नृसिंहः मामालपिष्यति। अक्रूरेति तातेत्याभाषिष्यते॥ ११॥

शेखरस्येव स्थित्या सन्निवेशन स्थितां सोऽवतीर्णो रामः॥ १३॥

तद्दर्शनप्रतिबन्धकपातकनिवृत्तये तमेव प्रणमति–'**पितृपुत्रे**' ति त्रिभिः॥ १४॥

अविद्याम् आत्मच्छादिकां तामेव मायाम् अहङ्कारममकारादिमोहकरीं बुद्ध्यानेन तरति॥ १५॥

यज्विभिर्यज्ञपूरूषी वासुदेवश्च सात्वतैः।
वेदान्तेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्मि तम्• ॥१६॥
यथा तत्र जगद्धाम्नि धातर्य्येतत् प्रतिष्ठितम्।
सदसत् तेन सत्येन मय्यसौ यातु सौम्यताम्॥१७॥
स्मृते सकलकल्याण-भाजनं यत्र जायते।
पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम्॥१८॥

पराशर उवाच

इत्थं सञ्चिन्तयन् विष्णुं भक्तिनम्रात्ममानसः।
अक्रूरो गोकुलं प्राप्तः किञ्चित् सूर्ये विराजति • ॥१९॥
स ददर्श तदा तत्र कृष्णमादोहने गवाम्• ।
वत्समध्यगतं फुल्लनीलोत्पलदलच्छविम्॥२०॥

---

• विष्णुः सर्वव्यापनशीलं परं ब्रह्मेत्यर्थः। तं श्रीकृष्णम् नतः प्रणतः अस्मि अहमिति शेषः।

यज्विभिः कर्मनिष्ठैः, सात्वतैरुपासकैः, वेदान्तवेदिभिः ज्ञाननिष्ठैश्च यज्ञपुरुषादिशब्दैर्यः प्रोच्यते॥१६॥

अथ कंसस्य दूतोऽहमिति मय्यसूयामकुर्वन् प्रसन्नो भवत्विति प्रार्थयते **'यथे'**ति। सदसत् कार्यकारणात्मकं साध्वसाधुवृत्तं वा जगदेतत् धाम्नि प्रतिष्ठितं तेन सत्येन सर्वाधारतया सर्वसाक्षित्वेन मयि सौम्यतां प्रसन्नतां यातु॥१७॥

सत्यपराधे तत् सर्वं क्षम्यतामित्याशयेनाह—**'स्मृत'** इति॥१८॥

भक्त्या नम्र आत्मा बुद्धिर्मानसञ्च यस्य सः॥१९॥

आदोहने दोहनस्थाने। आयामि विस्तारवत्तुङ्गमुरःस्थलं यस्य तम्॥२०-२१॥

• भक्तिनम्रात्ममानस इति—अत्र भक्त्या नम्र आत्मा बुद्धिः मानसञ्च यस्य स इति श्रीधरः। —उदञ्च सांख्यप्रमुखदर्शनमतमाश्रित्योक्तं श्रीधरेण। तन्मते बुद्धेर्निश्चयात्मकवृत्तिशालिन्या मनसश्च संकल्पविकल्पाकवृत्तिशालिनो वृत्तिभेदेन मिथो भेदात्। मतान्तरे तु भक्तिनम्रमः मानसं मनः अन्तःकरणामित्यर्थः, यस्य तथाभूतम्, इति भिन्नोऽर्थः. सूर्ये किञ्चित् अल्पमात्रं विराजति दीप्यमाने सति. एतेन प्रायः प्रदोषकालः सूच्यते।

• फुल्लं विकसितं यत् तस्य नीलोत्पलं दलवत् छविः शरीरकान्तिर्यस्य तम्।

अस्पष्टपद्मपत्राक्षं श्रीवत्साङ्कितवक्षसम्।
प्रलम्बबाहुमायामि तुङ्गोर:स्थलमुन्नसम्॥ २१॥
सविलासस्मिताधारं बिभ्राणं मुखपङ्कजम्।
तुङ्गरक्तनखं पद्भ्यां धरण्या सुप्रतिष्ठितम् • ॥ २२॥
बिभ्राणं वाससी पीते वन्यपुष्पविभूषितम्।
सार्द्रनीललताहस्तं सिताम्भोजावतंसकम्॥ २३॥
हंसकुन्देन्दुधवलं नीलाम्बरधरं द्विज।
तस्यानु बलभद्रञ्च ददर्श यदुनन्दनम्॥ २४॥
प्रांशुमुन्नतबाह्वंसं विकाशिमुखपङ्कजम्।
मेघमालापरिवृतं कैलासाद्रिमिवापरम्॥ २५॥
तौ दृष्ट्वा विकसद्वक्त्रसरोज: स महामति:।
पुलकाञ्चितसर्वाङ्गस्त-
दाक्रूरोऽभवन्मुने॥ २६॥
एतत् तत् परमं धाम
तदेतत् परमं पदम्।
भगवद्वासुदेवांशो
द्विधा योऽयमवस्थित:॥ २७॥
साफल्यमक्ष्णोर्युगमेतदत्र
दृष्टे जगद्धातरि यातमुच्चै:।
अप्यङ्गमेतद् भगवत् प्रसादाद्
दत्तेऽङ्गसङ्गे फलवन्मम स्यात्• ॥ २८॥

---

• सविलासं विभ्रमयुक्तं यत् स्मितं मृदुहास्यं तदाधारं तद्युक्तम्। तुङ्ग: उन्नतमुख: रक्तश्च नखो यत्र तद् यथा स्यात् तथा। सुप्रतिष्ठितं दृढमवस्थितम्।

भगवता स्वाङ्गसङ्गे दत्ते सति तत्प्रसादादेतन्ममाङ्गमपि फलवत् स्यादित्याशंसा॥ २८॥

• अत्र द्विधावस्थिते भगवद्वासुदेवांशे दृष्टे सति उच्चै: अतिमात्रं साफल्यं यातं प्राप्तम्।

अप्येष पृष्ठे मम हस्तपद्मं
करिष्यति श्रीमदनन्तमूर्त्तिः।
यस्याङ्गुलिस्पर्शहताखिलाघैर
वाप्यते सिद्धिरनाशदोषा॥ २९॥
येनाग्निविद्युद्रविरश्मिमाला
करालमत्युग्रमपास्य चक्रम्।
चक्रं घ्नता दैत्यपतेर्हृतानि
दैत्याङ्गनानां नयनाञ्जनानि॥ ३०॥
यत्राम्बु विन्यस्य बलिर्म्मनोज्ञा-
नवाप भोगान् वसुधातलस्थः।
तथामरत्वं त्रिदशाधिपत्यं
मन्वन्तरं पूर्णमपेतशत्रुः• ॥ ३१॥
अप्येष मां कंसपरिग्रहेण
दोषास्पदीभूतमदोषदुष्टम्।
कर्त्तावमानोपहतं धिगस्तु
तज्जन्मनः साधुबहिष्कृतं यत्॥ ३२॥
ज्ञानात्मकस्यामलसत्त्वराशे
रपेतदोषस्य सदा स्फुटस्य।
किं वा जगत्यत्र समस्तपुंसा
मज्ञातमस्यास्ति हृदि स्थितस्य॥ ३३॥

---

यस्य हस्ताङ्गुलिस्पर्शेन हताखिलाघैरिति पवित्रतोक्ता॥ २९॥

येन हस्तेन चक्रमपास्याक्षिप्य दैत्यपतेः कालनेमिप्रभृतेश्चक्रं सैन्यं घ्नता मारयता दैत्याङ्गनानां नयनानां जलानि तद्भर्त्तृवधादपहृतानीति शौर्योक्तिः। यत्राम्बु विन्यस्येति हस्तौदार्यमुक्तम्। वसुधातलस्थः भूतले स्थितः॥ ३०-३१॥

• यत्र वामनरूपस्य भगवतो हस्ते अम्बुदानार्थ जलं विन्यस्य, अमरत्वं **'अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषण'** इत्यादिवचनोपात्तं चिरजीवित्वम्।

तस्मादहं भक्तिविनम्रचेता व्रजामि सर्वेश्वरमीश्वराणाम्।
अंशावतारं पुरुषोत्तमस्य अनादिमध्यान्तमयस्य विष्णोः॥ ३४॥

इति श्रीविष्णुपुराणे पञ्चमांशे सप्तदशः अध्यायः॥

---

अदोष दुष्टमपि मां दोषास्पदीभूतं मत्वा अपिं यदि अवमानोपहतं कर्त्ताकरिष्यतीत्याशङ्क्य स्वयमेव तन्न सम्भवतीत्याह, ज्ञानात्मकस्येति। जीवस्य ज्ञानात्मकत्वेऽपि रजस्तमोमलावृतत्वान्न सर्वज्ञता, ईश्वरस्य तु तन्तास्तीत्याह अमलेति। शुद्धसत्वमयस्य न च जीववद्रागादिभिर्ज्ञानप्रमोष इत्याह,—अपेतदोषस्येति। न च चक्षुराद्यपेक्षस्य जीवस्येव कादाचित्कं ज्ञानमीश्वरस्येत्याह,—सदा स्फुटस्येति। न च जीवस्यैवोपाधिपरिच्छेदादसार्वज्ञमित्याह,—सर्वपुंसा हृदि स्थितस्येति अतोऽत्र किं नाम तस्याज्ञातमस्ति तस्मानिः शङ्कस्तमहं व्रजामीत्याह,—तस्मादिति॥ ३३-३४॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमांशे सप्तदशोऽध्यायः॥

## अष्टादशोऽध्यायः

### (भगवतः श्रीकृष्णस्य मथुरागमनम्, गोपीनां विरहवर्णनम्, अक्रूरस्य मोहश्च)

पराशर उवाच

चिन्तयन्निति गोविन्दमुपागम्य स यादवः।
अक्रूरोऽस्मीति चरणौ ननाम शिरसा हरेः॥ १॥
सोऽप्येनहं ध्वजवज्राब्ज-कृतचिह्नेन पाणिना।
संस्पृश्याकृष्य च प्रीत्या सुगाढं परिषस्वजे॥ २॥
कृतसंवादनौ तेन यथावद् बल-केशवौ।
ततः प्रविष्टौ संहृष्टौ तमादायात्ममन्दिरम् • ॥ ३॥
सह ताभ्यां तदाक्रूरः कृतसंवादनादिकः।
भुक्तभोज्यो यथान्यायमाचचक्षे ततस्तयोः॥ ४॥
यथा निर्भर्त्स्यते तेन कंसेनानकदुन्दुभिः।
यथा च देवकी देवी दानवेन दुरात्मना॥ ५॥

---

यादवोऽक्रूरोऽस्मीति यादवोक्त्वा स्वस्य तत् सम्बन्धितां ज्ञापयन् प्रणमति॥ १॥

परिषास्वजे आलिङ्गितवान्॥ २॥

रामञ्च ननामेति सूचयन्नाह,—कृतसंवादनौ तेनेति॥ ३॥

• रामञ्च ननामेति सूचयन्नाह 'कृतसंवादनौ तेने' ति श्रीधरः। अत्रायमभिप्रायः— रामः कृष्णस्यग्रजः, कृष्णो रामस्यानुजः, तयोरुभयोः सन्निहितयो रामं त्यक्त्वा यदि कृष्णस्य प्रणतिरक्रूरेण कृता, तदा समुद्धतस्वभावो रामः स्वीदस्यभङ्गमंत्वा तेन संवादमेव नाकरिष्यत्, अतः श्रीरामकृष्णाभ्यां सममेव तेन सह संवादस्य कुतत्वात् अक्रूरेण रामस्यापि नतिः कृतेति सूच्यते।

कृतं संवादनादिकं संवादादि येन सः। यथान्यायं सम्मानपूर्वकं भुक्तं भोज्यं भोजनार्हं सुसंस्कृतमन्नादि येन सः॥ ४-७॥

उग्रसेने यथा कंसः सुदुरात्मा च वर्त्तते।
यं चैवार्थं समुद्दिश्य स कंसेन विसर्ज्जितः॥ ६॥

तत् सर्वं विस्तराच्छुत्वा भगवान् केशिसूदनः।
उवाचाखिलमप्येतज्ज्ञातं दानपते! मया॥ ७॥

करिष्ये च महाभाग! यदत्रौपयिकं मतम्।
विचिन्त्यं नान्यर्थतत् ते विद्धि कंसं हतं मया॥ ८॥

अहं रामश्च मथुरां श्वो यास्याव: समं त्वया।
गोपवृद्धाश्च यास्यन्ति आदायोपायनं बहु॥ ९॥

निशेयं नीयतां वीर! न चिन्तां कर्त्तुमर्हसि।
त्रिरात्राभ्यन्तरे कंसं हनिष्याभिम सहानुगम्॥ १०॥

पराशर उवाच

समादिश्य ततो गोपनक्रूरोऽपि सकेशवः।
सुष्वाप बलभद्रश्च नन्दगोपगृहे सुखम्॥ ११॥

ततः प्रभाते विमले कृष्ण-रामौ महामती।
अक्रूरेण समं गन्तुमुद्यतौ मथुरां प्रति॥ १२॥

दृष्ट्वा गोपीजनः सास्रः श्लथद्वलयबाहुकः।
निःश्वस्य चातिदुःखार्त्तः प्राह चेदनं परस्परम्॥ १३॥

मथुरां प्राप्य गोविन्दः कथं गोकुलमेष्यति।
नागरस्त्री-कलालापमधु श्रोत्रेण पास्यति॥ १४॥

---

औपयिकम् उपयोगीयोग्यमित्यर्थः॥ ८-१०॥

राजदेशनिवेदनेन गोपान् समादिश्य नन्दगोपगृहे सुष्वापेति वदन् अतः परं नन्दे पितृत्वव्यवहारानुवृत्तिं सूचयति॥ ११॥

गन्तुमुद्यतौ दृष्ट्वा गोपीजनः प्राहेत्यन्वयः 'दृष्ट्वे' त्यादिना सीऽपि रेणुर्न 'लक्ष्यते' इत्यन्तेन गोपीविरहालापोक्तेः सास्रः साश्रुनेत्रः श्लथद्वलया बाहवो यस्येति विरहदुःखकार्श्यमुक्तम्॥ १३॥

कथमेष्यति? न कथञ्चित्, तत्र हेतुमाह—'नागरे'ति सार्द्धेन। नागरस्त्रीणां कलः अव्यक्तमधुराक्षरो य आलापः तदेव मधु तद् यस्मात् पास्याति॥ १४॥

**विलासिवाक्यपानेषु नागरीणां कृतास्पदम्।**
**चित्तमस्य कथं भूयो ग्राम्यगोपीषु यास्यति॥ १५॥**
**सारं समस्तगोष्ठस्य विधिना हरता हरिम्।**
**प्रहृतं गोपयोषित्सु निर्गुणेन दुरात्मना॥ १६॥**
**भावगर्भस्मितं वाक्यं विलासललिता गतिः।**
**नागरीणामतीवैतत् कटाक्षेक्षितमेव च॥ १७॥**
**ग्राम्यो हरिरयं तासां विलासनिगडैर्युतः।**
**भवतीनां पुनः पार्श्वं कया युक्त्या समेष्यति॥ १८॥**
**एषैष रथमारुह्य मथुरां याति केशवः।**
**क्रूरेणाक्रूरकेणात्र निराशेन प्रतारितः• ॥ १९॥**
**किं न वेत्ति नृशंसोऽत्र अनुरागपरं जनम्।**
**येनेममक्ष्णोराह्लादं नयत्यन्यत्र नो हरिम्॥ २०॥**

---

विलासवन्ति यानि वाक्यानि तेषां पानेषु, वाक्यानाञ्च पेयत्वं शृङ्गारादिरसवत्त्वात, मधुत्वोक्तेश्च॥ १५॥

अस्मद्वैमुख्यादपि नायास्यतीत्याह—सार मिति समस्तगोष्ठस्य सारभूतं हरिं हरता विधिना गोपयोषित्सु प्रहृतं प्रहारः कृतः॥ १६॥

किञ्च 'भागगर्भस्मित' मित्यादि भावदेर्लक्षणम्—'**बाह्यर्थालम्बनो यस्तु विकारो मानसो भवेत्। भावः स कथ्यते सद्भिस्तस्योत्कर्षो रसः स्मृतः। विलासो नेत्रजो ज्ञेयो विभ्रमो नयनानतज** इति।' नागरीणामेतद्वाक्यादिकम् अतीव सुपूजितमिव॥ १७॥

विलासरूपैर्निगडैर्युतो यतः। यत इति पाठे यतः संयतो बद्ध इत्यर्थः॥ १८॥

एषैष इति विस्मयाद् वीप्सा, सन्धिस्त्वार्षः, अक्रूरकेणेति कुत्सिते कः॥ १९॥

• निः न विद्यते आशा भविष्यतक्षेमसम्भावना यस्य येन निराशेन हताभाग्येनेत्यर्थः। अथवा निः न विद्यते आशा आशंसन कस्यापि क्षेमस्येति शेषः, यस्मात् तथाभूतेन।

नृशंसः क्रूरः, अत्र व्रजेस, किं न वेत्तीति—येन हेतुना नोऽस्माकं अक्ष्णोराह्लादं हरिमन्यत्र नयतीति तत् किमनुरागपरं जनं न वेत्तीति। यद्यसौ क्वाप्यनुरागरसाभिज्ञो भवेत्, तर्हि तद्वियोगदुःखं जानन्नेवं न कुर्यादिति भावः॥ २०॥

एष रामेण सहितः प्रयात्यत्यन्तनिर्घृणः।
रथमारुह्य गोविन्दस्त्वर्य्यमस्य वारणे॥ २१॥
गुरूणामग्रतो वक्तुं किं ब्रवीषि न नः क्षमम्।
गुरवः किं करिष्यन्ति दग्धानां विरहाग्निना॥ २२॥

नन्दगोपमुखा गोपा गन्तुमेते समुद्यताः।
नोद्यमं कुरुते कश्चिद् गोविन्दविनिवर्त्तते॥ २३॥
सुप्रभाताद्य रजनी मथुरावासियोषिताम्।
पास्यन्त्युतवक्त्राब्जं यासां नेत्रालिपङ्क्तयः॥ २४॥
धन्यास्ते पथि ये कृष्णमतो यान्त्यनिवारिताः।
उद्वहिष्यन्ति पश्यन्तः स्वदेहं पुलकाञ्चितम्• ॥ २५॥
मथुरानगरीपौरनयनानां महोत्सवः।
गोविन्दावयवैर्दृष्टैरतीवाद्य भविष्यति॥ २६॥
को नु स्वपनः सुभाग्याभिर्दृष्टस्ताभिरधोक्षजम्।
विस्तारिकान्तिनयना या द्रक्ष्यन्तनिवारितम्॥ २७॥
अहो गोपीजनस्यास्य दर्शयित्वा महानिधिम्।
उद्धृतान्यत्र नेत्राणि विधात्राकरुणात्मना॥ २८॥

---

ये जना इतः केनाप्यनिवारिताः सन्तो यान्ति, ते धन्याः, यस्मात् पथि यान्तं कृष्णं पश्यन्तः स्वदेहं पुलकव्यासमुद्वहिष्यन्ति धारयिष्यन्तीत्यर्थः॥ २५॥

अनिवारिता अनिषिद्धाः गुर्वादिभिरिति शेषः। तेषां गुर्वादिभिरनिवारितानां जनानां श्रीकृष्णदर्शनादिप्रयुक्ताधन्यत्वार्थाद् गुर्वादिभिर्निवारिता वयं तदभावादधन्या इति प्रस्तुतार्थप्रत्यायनाद् वैधर्म्येणापुरस्तुतप्रशंसालङ्कारः। उद्वक्ष्यन्तीतिसंस्कारेण व क्तव्ये उद्वहिष्यन्तीति प्रयोग आर्षः।

मथुरानगर्य्याः पौपस्त्रीनयनानाम्॥ २६॥

विस्तारीणि कान्तिमन्ति नयनानि यासां ताः॥ २७॥

अत्र प्रमाणे,—महानिधितुल्य श्रीकृष्णं दर्शयित्वा नेत्राणि उद्धतानि उद्धतप्रायाणि विरहदुःखाद् वस्त्वन्तरदर्शनस्यापेक्षाया निवृत्तेः॥ २८॥

अनुरागेण शैथिल्यमस्मासु व्रजता हरेः।
शैथिल्यमुपयान्त्याशु करेषु वलयान्यपि॥ २९॥
अक्रूरः क्रूरहृदयः शीघ्रं प्रेरयते हयान्।
एवमार्त्तासु योषित्सु घृणा कस्य न जायते• ॥ ३०॥
हा हा कृष्णरथस्योच्चैश्चक्ररेणुर्निरीक्ष्यताम्।
दूरीकृतो हरिर्येन सोऽपि रेणुनं लक्ष्यते॥ ३१॥
इत्येवमतिहार्द्देन गोपीजननिरीक्षितः।
तत्याज व्रजभूभागं स रामेण केशवः॥ ३२॥
गच्छतो जविताश्वेन रथेन यमुनातटम्।
प्राप्ता मध्याह्नसमये रामाक्रूरजनार्द्दनाः॥ ३३॥
अथाह कृष्णमक्रूरो भवद्भ्यां तावदास्यताम्।
यावत् करोमि कालिन्द्यामार्ह्निकार्हणमम्भसि॥ ३४॥
तथेत्युक्ते ततः स्नातः स्वाचान्तः स महामतिः।
दध्यौ ब्रह्म परं विप्र? प्रविश्य यमुनाजले॥ ३५॥
फणासहस्रमलाढ्यं बलभद्रं ददर्श सः।
कुन्दमालाङ्गमुन्निद्र-पद्मपत्रारुणेक्षणम्॥ ३६॥

---

किञ्च —'अनुरागणे'ति अस्मासु शैथिल्यं व्रजता हरेरनुरागेण सहास्मत्करेषु वलयान्यपि शैथिल्यमुपयान्ति कृष्णानुरागविषयभूता अस्मांस्त्यक्त्वा वलयान्यपि तमेवानुजिगमिषन्तीत्यर्थः। पाठान्तरे अस्मास्वनुरागेण शैथिल्यं व्रजन्तः अनुरागं शिथिलं कुर्वन्तः सन्तो वलयान्यपि करेषु शिथिलयन्ति इत्यर्थः. ॥ २९॥

• हयान् रथवाहकानश्वान् शीघ्रं प्रेरयते अग्रे गन्तुं प्रवर्तयति। क्रूरहदयत्वादार्त्तानां योषितां कृष्णादर्शनप्रयुक्तामार्तिमगणयुत्वेत्यर्थः। अक्रूरस्य तथा क्रूरहृदयत्वमेव समर्थयितुमाह।

क्रूरहृदयो निर्घ्रणः—'**तत्र हेतुः**' '**एवमार्त्तास्वि** ति॥ ३०-३१॥

व्रजभूभागं व्रजप्रान्तम्॥ ३२॥

आह्निकार्हणं माध्याह्निकस्नानं देवपूजादि च॥ ३४-३५॥

भवद्भ्यां तावदत्रैवास्यामित्यक्रूरस्योक्त्या तस्य मनसि बालावेतौ दुष्टकंससकाशं मया वृथैवानीताविति सशङ्कमिवालक्ष्य जले स्वीयभैश्वरं रूपं ताभ्यां दर्शितमसौ दृष्वा तुष्टावेत्याह—फणासहस्र त्यादिना यावत्समाप्ति। फणानां सहस्रस्य मालया पङ्क्त्या युक्तम् कुन्दानां मालेवातिश्वेतमङ्ग यस्य तम्॥ ३६॥

वृतं वासुकिरम्भाद्यैर्महद्भिः पवनाशिभिः।
संस्तूयमानं गन्धर्वैर्वनमालाविभूषितम्॥ ३७॥
दधानमसिते वस्त्रे चारुपद्मावतंसकम्।
चारुकुण्डलिनं भान्तमन्तर्जलतले स्थितम्॥ ३८॥
तस्योत्सङ्गे घनश्याममाताम्रायतलोचनम्
चतुर्बाहुमुदाराङ्गं चक्राद्ययुधाभूषणम्॥ ३९॥
पीते वसानं वसने चित्रमाल्य-विभूषणम्।
शक्रचापतडिन्माला-विचित्रमिव तोयदम्॥ ४०॥
श्रीवत् सवक्षसञ्चारुकेयूरमुकुटोज्ज्वलम्।
ददर्श कृष्णमक्लिष्ट-पुण्डरीकावतंसकम्॥ ४१॥
सनन्दनाद्यैर्मुनिभिः सिद्धियोगैरकल्मषैः।
विचिन्त्यात्मानं तत्रस्थैर्नासाग्रन्यस्तलोचनैः॥ ४२॥
बल-कृष्णौ तथाक्रूरः प्रत्यभिज्ञाय विस्मितः।
सोऽचिन्तयद् रथाच्छीघ्रं कथमत्रागताविति॥ ४३॥
विवक्षोः स्तम्भयामास वाचं तस्य जनार्द्दनः।
ततो निष्क्रम्य सलिलाद् रथमभ्यागतः पुनः॥ ४४॥
ददर्श तत्र चैवाभौ रथस्योपर्य्यधिष्ठितौ।
राम-कृष्णौ यथापूर्वं मनुष्यवपुषान्वितौ॥ ४५॥
निमग्नश्च ततस्तोये स ददर्श तथैव तौ।
संस्तूयमानौ गन्धर्व-मुनि-सिद्ध-महोरगैः॥ ४६॥
ततो विज्ञातसद्भावः स तु दानपतिस्तथा।
तुष्टाव सर्वविज्ञानमयमच्युतमीश्वरम्॥ ४७॥
सन्मात्ररूपिणेऽचिन्त्यमहिम्ने परमात्मने।
व्यापिने नैकरूपैकस्वरूपाय नमो नमः॥ ४८॥
सत्त्वरूपाय तेऽचिन्त्य! हविर्भूताय ते नमः।
नमोऽविज्ञातपाराय पराय प्रकृतेः प्रभो॥ ४९॥

---

वासुकिरम्भाद्यैः सर्पैवृतम्॥ ३७-४६॥

**भूतात्मा चेन्द्रियात्मा**
**प्रधानात्मा तथा भवान्।**
**आत्मा च परमात्मा च त्वमेक:पञ्चधा स्थित:॥५०॥**
**प्रसीद सर्वं सर्वात्मन् क्षराक्षरमयेश्वर।**
**ब्रह्म-विष्णु-शिवाद्याभि: कल्पनाभिरुदीरित:॥५१॥**
**अनाख्येयस्वरूपात्मन्!**
**अनाख्येयप्रयोजन।**
**अनाख्येयाभिधानं त्वां**
**नतोऽस्मि परमेश्वर॥५२॥**
**न यत्र नाथ! विद्यन्ते नामजात्यादिकल्पना:।**
**तद् ब्रह्म परमं नित्यमविकारि भवानज:॥५३॥**

---

विज्ञात्: सद्भाव: तयो, परमार्थो येन स: सर्वेषा यद्विज्ञानं तन्मयम्॥४७॥

नैकरूपोऽनेकरूप: स चासौ एकस्वरूपश्च तस्मै कार्य्यकारणरूपाय॥४८॥

हे अचिन्त्य! हविर्भूताय '**यत् पुरुषेण हविषे**' ति श्रुते:।

अविज्ञात: पारोऽन्तो यस्य तस्मै। प्रकृते: पराय तामतिक्रम्य स्थिताय, '**आदित्यवर्ण तमस: परस्ता**'दिति श्रुते:॥४९॥

भूतात्मा महाभूतारूप: इन्द्रियात्मा इन्द्रियरूप: प्रधानात्मा प्रकृतिरूप:, आत्मा भूतादित्रितयोपाधिपुरुष:, परमात्मा निरुपाधि:॥५०॥

हे सर्व! समस्तभूतरूप! सर्वस्यात्मन्! अत एव क्षराक्षरमय ईश्वर! क्षराक्षरनियामक! यदुक्तं गीतासु— '**क्षर: सर्वाणि भूतानि कूटस्थोऽक्षव उच्यते। उत्तम: पुरूषस्त्वन्य: परमात्मेत्युदाहृत:। यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वर**' इति। कल्पनाभिर्गुणापाधिब्रह्मादिसंज्ञाभिरुदीरितस्तत:॥५१॥

अनाख्येयस्वरूप: अनिर्देशार्हस्वरूप आत्मा स्वभावो यस्याम्। अनोख्येयं स्वरूपं आत्मा मूर्त्तिश्च यस्येति वा। अनाख्येयं प्रयोजनं यस्य आप्तकामत्वेन लीलाव्यतिरेकेण सृष्टयादिप्रयोजनस्यानाख्येयत्वात्। यद्वा अनाख्येयप्रयोजनं निर्गुणानन्दस्तद् रूप! अनाख्येयानि अभिधानानि यस्य तम् अनामत्वादनन्तनामत्वाद्वा॥५२॥

तत्रानामत्वे हेतुमाह—'**न यत्रे**'ति॥५३॥

न कल्पनामृतेऽर्थस्य सर्वस्याधिगमो यतः।
ततः कृष्णाच्युतानन्तविष्णुसंज्ञाभिरीड्यसे॥५४॥
सर्वार्थंस्त्वमज! विकल्पनाभिरेद्
देवाद्यं जगदि्खलं त्वमेव विश्वम्।
विश्वात्मंस्त्वमिति विकारभावहीनः
सर्वस्मिन् न हि भवतोऽस्ति किञ्चिदन्यत्॥५५॥
त्वं ब्रह्मा पशुपतिरर्य्यमा विधाता
धाता त्वं त्रिदशपतिः समीरणोऽग्निः।
तोयेशो धनपतिरन्तकस्त्वमेको
भिन्नार्थैर्जगदपि पासि शक्तिभेदैः॥५६॥
विश्वं भवान् सृजति सूर्य्यगभस्तिरूपो
विश्वञ्च ते गुणमयोऽयमज! प्रपञ्च।
रूपं परं सदितिवाचकमक्षरं यज्
ज्ञानात्मने सदसते प्रणतोऽस्मि तस्मै॥५७॥
ॐ नमो वासुदेवाय नमः सङ्कर्षणाय ते।
प्रद्युम्नाय नमस्तुभ्यनिरुद्धाय ते नमः॥५८॥
इति श्रीविष्णुपुराणे पञ्चमांशे अष्टादशः अध्यायः॥

---

माययानन्तनामत्वामाह—'न कल्पनामि'ति ॥५४॥

रूपानन्त्येनानवनामत्वं प्रपञ्चयन्नाह—'**सर्वार्थस्त्वमि**'ति त्रिभिः॥५५-५६॥

सूर्यगभस्तिरूप इति सूर्य्यरश्मिरूपेण वर्षन् भवान् चराचरं विश्वं सृजति। गभस्तिरूपः प्रकाशात्मा। सदिति पदं वाचकं यस्य तदक्षरं तव रूपं तस्मै, तुमो लोपे चतुर्थी, तं प्रासादयितुमित्यर्थः॥५७॥

चतुर्व्यूहरूपं प्रणमति—'ओं नमः' इति॥५८॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमांशे अष्टादशोऽध्यायः॥

## एकोनविंशः अध्यायः

### (श्री कृष्णस्य रजकवधः, मालाकारगृहे प्रवेशश्च)

पराशर उवाच

एवमन्तर्जले विष्णुमभिष्टूय स यादवः।
अर्चयामास सर्वेशं पुष्पैर्धूपैर्मनोरमैः॥ १॥
परित्यक्तान्यविषयो मनस्तत्र निवेश्य सः।
ब्रह्माभूते चिरं स्थित्वा विरराम समाधितः॥ २॥
कृतकृत्यमिवात्मानं मन्यमानो महामतिः।
आजगाम रथं भूयो निर्गम्य यमुनाम्भसः॥ ३॥
राम-कृष्णौ च ददर्श यथापूर्वं रथे स्थितौ।
विस्मिताक्षस्तदाक्रूरस्तञ्च कृष्णोऽभ्यभाषत॥ ४॥
नूनं ते दृष्टमाश्चर्य्यमक्रूर! यमुनाजले।
विस्मयोत्फुल्लनयनो भवान् संलक्ष्यते यतः॥ ५॥

अक्रूर उवाच

अन्तर्जले यदाश्चर्यं दृष्टं तत्र मयाच्युतः।
तदत्रापि हि पश्यामि मूर्त्तिमत् पुरतः स्थिरम्॥ ६॥
जगदेतन्महाश्चर्य्यं रूपं यस्य महात्मनः।
तेनाश्चर्य्यवरेणाहं भवता कृष्ण! सङ्गतः॥ ७॥
तत् किमेतेन मथुरां व्रजामो मधुसूदन।
बिभेमि कंसाद्धिग् जन्म परमिण्डोपजीविनाम्॥ ८॥

---

विस्मते अक्षिणी यस्य तथाभूतोऽक्रूरस्तदाभवत्॥ ४-५॥

तेनाश्चर्य्यवरेण भवतैवाहमन्तर्जले चात्र च सङ्गतोऽसि। अतो जल एव विशेषेणाश्चर्य्यं किं पृच्छसीत्यर्थः, रथे स्थितं मां जले त्वं दृष्टवानिति मोहयन्तमिवाह—**'तत् किमेतेने'** परमेश्वरे साक्षाद्दृष्टेऽपि विलम्बे सति कंसः कुप्येदिति कंसाद् बिभेभि, अतः परपिण्डम् अन्यैर्दत्तमन्नं ये उपजीवन्ति तेषां जन्म धिक्॥ ७-८॥

इत्युक्त्वा चोदयामास तान् हयान् वातरंहसः।
सम्प्राप्तश्चातिसायाह्ने सोऽक्रूरो मथुरां पुरीम्॥ ९॥
विलोक्य मथुरां कृष्णं रामञ्चाह स यादवः।
पद्भ्यां यातं महावीर्य्यो रथेनैको विशाम्यहम्॥ १०॥
गन्तव्यं वसुदेवस्य भवद्भ्यां न तथा गृहम्।
युवयोर्हि कृते वृद्धः स कंसेन निरस्यते॥ ११॥

पराशर उवाच

इत्युक्त्वा प्रविवेशाथ सोऽक्रूरो मथुरां पुरीम्।
प्रविष्टौ रामकृष्णौ च राजमार्गमुपगतौ॥ १२॥
स्त्रीभिर्नरैश्च सानन्दं लोचनैरभिवीक्षितौ।
जग्मतुर्लीलया वीरौ दृप्तौ बालगजाविव॥ १३॥
भ्रममाणौ तु तौ दृष्ट्वा जलकं रङ्गकारकम्।
अयाचेतां सुरूपाणि वासांसि रुचिराननौ॥ १४॥
कंसस्य रजकः सोऽथ प्रसादारूढ़विस्मयः।
बहून्याक्षेपवाक्यानि प्राहोच्चै राम-केशवौ॥ १५॥
ततस्तलप्रहारेण कृष्णस्य दुरात्मनः।
पातयामास कोपेन रजकस्य शिरो भुवि॥ १६॥
हत्वादाय च वस्त्राणि पीतनीलाम्बरौ ततः।
कृष्ण-रामौ मुदा युक्तौ मालाकारगृहं गतौ॥ १७॥
विकाशिनेत्रयुगलौ मालाकारोऽतिविस्मितः।
एतौ कस्य कुतो वैतो मैत्रेयाचिन्तयत् तदा॥ १८॥

---

वातस्येव रंहो वेगो येषां तान्॥ ९॥

कृष्णमायामोहितः सन् कंसभयादिव तौ शिक्षयन्नाह,— पद्भ्यां युवा यातं गच्छतम्॥ १०॥

ययोः युवयोः कृते युष्मन्निमित्तं निरस्यते आक्षिप्यते॥ ११-१३॥

रजको वस्त्राणां निर्णेजकः। स एव तानि धातुभी रञ्जयन् रङ्गकारः तम्॥ १४॥

पीतनीलाम्बरधरौ तौ दृष्ट्वामतिमनोहरौ।
स तर्कयामास तदा भुवं देवावुपागतौ॥ १९॥
विकाशिमुखपद्माभ्यां ताभ्यां पुष्पाणि याचितः।
भुवं विष्टभ्य हस्ताभ्यां पस्पर्श शिरसा महीम्॥ २०॥
प्रसादपरमौ नाथौ मम देहमुपागतौ।
धन्योऽहमर्चयिष्यामीत्याह तौ माल्यजीवकः॥ २१॥
ततः प्रहृष्टवदनस्तयोः पुष्पाणि कामतः।
चारूण्येतान्यथैतानि प्रददौ स विलोभयन्॥ २२॥
पुनः पुनः प्रणम्यासौ मालाकारो नरोत्तमौ।
ददौ पुष्पाणि चारूणि गन्धवन्त्यमलानि च॥ २३॥
मालाकाराय कृष्णोऽपि प्रसन्नः प्रददौ वरान्।
श्रीस्त्वां मत्संश्रया भद्र! न कदाचितः प्रहास्यति॥ २४॥
वलहानिर्न ते सौम्य! धनहानिस्थथैव च।
यावद्दिनानि तावच्च न नशिष्यति• सन्ततिः॥ २५॥
भुक्त्वा च विपुलान् भोगांस्तमन्ते मत्प्रसादजम्।
ममानुस्मरणं प्राप्य दिव्यं लोकमवाप्स्यसि॥ २६॥
धर्म्मे मनश्च ते भद्र! सर्वकालं भविष्यति।
युष्मत्सन्ततिजातानां दीर्घमायुर्भविष्यति॥ २७॥

---

प्रसादारूढविस्मयः राज्ञः प्रसादेन गर्वमाढः॥ १५-२०॥

प्रसादपरमौ अनुग्रहपरौ॥ २१॥

कामतस्तदिच्छातः पुष्पाणि दत्त्वा पुनश्चैतानि चारूणि अथैतानि ततोऽपि चारूणीति प्रलोभयन् अनुरागं जनयत् ददौ॥ २२-२३॥

• नशिष्यतीत्यत्र इटप्रयोग आर्षः। यावत् यावत् कालपर्य्यन्तं दिनानि सूर्य्यावच्छिना: कालाः, तावत् तत्कालपर्य्यन्तं, यावत् सूर्य्यः गगने सञ्चरिष्यति तावदित्यर्थः। सन्ततिः, वंश, त्वदीया वंशधारा तावदेव स्थास्यतीति भावः।

मत्संश्रया मम वक्षसि स्थिता श्रीस्त्वां न त्यक्ष्यति सर्वसम्पत्प्रदैरनुग्रहकटाक्षैस्त्वामवलोकयिष्यतीत्यर्थः॥ २४-२७॥

नोपसर्गादिकं दोषं युष्मत्सन्ततिसम्भवः।
सम्प्राप्स्यति महाभागः यावत् सूर्यो धरिष्यति॥२८॥

पराशर उवाच

इत्युक्त्वा तद्गृहात् कृष्णो बलदेवसहांयवान्।
निर्ज्जगाम मुनिश्रेष्ठ! मालाकारेण पूजितः॥२९॥

इति श्रीविष्णुपुराणे पञ्चमांशे एकोनविंशः अध्यायः।

---

यावत् सूर्य्यो धरिष्यति स्थास्यति॥२८-२९॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमांशे एकोनविंशोऽध्यायः॥

# विंशोऽध्याय:

## (श्रीकृष्णस्य कुब्जानुग्रहः धनु:शालाप्रवेश:, कंसवधश्च।)

पराशर उवाच

राजमार्गे ततः कृष्णः सानुलेपनभाजनाम्।
ददर्श कुब्जामायान्तीं नवयौवनगोचराम्॥ १॥
तामाह ललितं कृष्णः कस्येदमनुलेपनम्।
भवत्या नीयते सत्यं वदेन्दीवरलोचने॥ २॥
सकामेनेव सा प्रोक्ता सानुरागा हरिं प्रति।
प्राह सा ललितं कुब्जा तद्दर्शनबलात्कृता॥ ३॥
कान्त! कस्मान्न जानासि कंसेनाभिनियोजिताम्।
नैकवक्रेति विख्यातामनुलेपनकर्म्मणि॥ ४॥
नान्यपिष्टं हि कंसस्य प्रीतये ह्यनुलेपनम्।
भवाम्यहमतीवास्य प्रसादधनभाजनम्॥ ५॥

श्रीकृष्ण उवाच

सुगन्धमेतद् राजार्हं रुचिरं रुचिरानने।
आवयोगत्रिसदृशं दीयतामनुलेपनम्॥ ६॥

पराशर उवाच

श्रुत्वैतदाह सा कुब्जा गृह्यतामिति सादरम्।
अनुलेपञ्च प्रददौ गात्रयोग्यमथोभयो:॥ ७॥

---

अनुलेपनाभजनसहितां कुब्जाम्॥ १-२॥

तस्य दर्शनेन बलातकृता आकृष्टचित्ता सती प्राह॥ ३॥

अनुलेपनकर्मणि गन्धवस्तूनां साधने कंसेन नियुक्ता नैकवक्रा त्रिवक्रेत्यर्थ:॥ ४॥

अन्येन पिष्टं गन्धवस्तुयोगेन सम्मर्दितं कंसस्य प्रीतये न भवति, अतोऽहमतीवास्य कंसस्य प्रसादधनभाजनं प्रीतिदानस्य पात्रभूता॥ ५॥

गात्रसदृशं वर्णानुरूपम्॥ ६-७॥

भक्तिच्छेदानुलिप्ताङ्गौ ततस्तौ पुरुषर्षभौ।
सेन्द्रचापौ विराजेतां सितकृष्णाविवाम्बुदौ॥८॥
ततस्तां चिबुके शौरिरुल्लापनविधानवित्।
उत्पाट्य तोलयामास द्व्यङ्गुल्लेनाग्रपाणिना॥९॥
चकर्ष पद्भ्याञ्च तदा ऋजुत्वं केशवोऽनयत्।
ततः सा ऋजुतां प्राप्ता योषितामभवद् वरा॥१०॥
विलासललितं प्राह प्रेमगर्भभरालसम्।
वस्त्रे प्रगृह्य गोविन्दं व्रज गेहं ममेति वै॥११॥
आयास्ये भवतीगेहमिति तां प्रहसन् हरिः।
विससर्ज्ज जहासोच्चै रामस्योलोक्य चाननम्॥१२॥
भक्तिच्छेदानुलिप्ताङ्गौ नीलपीताम्बरौ च तौ।
धनुःशालां ततो यातौ चित्रमाल्योपशोभितौ॥१३॥
आयोगञ्च धनूरत्नं ताभ्यां पृष्टैश्च रक्षिभिः।
आख्याते सहसा कृष्णो गृहीत्वापूरयद्धनुः॥१४॥

---

कुंकुमादिवर्णकैः कपोलवक्षस्थलभुजादिषु पत्रभङ्गिरचना भक्तिच्छेदः। भक्तिच्छेदविधाधानानुलिप्ताङ्गौ, अत एव चित्रवर्णानुलेपनेन स्वाङ्गकान्त्या च तयोरिन्द्रचापसहितसितकृष्णाभ्बुदसादृश्यम्॥८॥

अनुलेपनार्पणफलं सद्य एव दर्शितवानित्याह—'**तत**' इति सार्द्धेन। उल्लापनमृजूकरणं, पाठान्तरे उल्लापनमरोगी करणं तत्प्रकारज्ञः शौरिः मध्यमातर्जनीरूपद्व्यङ्गुलोपलक्षितेनाग्रपाणिनां पाण्यग्रेण चिबुके मुखस्याधस्तात् उत्पाट्य उद्धृत्य तोलयामास उच्चालितवान्॥९॥

स्वपद्भ्यां च पादयोस्ताञ्चकर्ष आक्रान्तवान्, एवं तामृजुत्वमनयत्॥१०॥

विलासेन कटाक्षनिरीक्षणादिना ललितं यथा भवत्येवं प्राह। लालित्यमेवाह—प्रेमगर्भभरालसं प्रेमातिशयेन मन्थरं यथा भवत्येवम्॥११॥

कंस हत्वा बन्धूनां सोख्यं विधाय भवत्या गेहमायास्य इति तां प्रस्थापितवान्। असमय एव स्त्रीणां कामातुरत्वं दृष्ट्वै जहासवच॥१२-१३॥

ततः पूरयता तेन भज्यमानं बलाद्धनुः.
चकार सुमहाशब्दं मथुरा येन पूरिता॥ १५॥
अनुयुक्तौ ततस्तौ तु भग्ने धनुषि रक्षिभिः।
रक्षिसैन्यं निहत्योभौ निष्क्रान्तौ कार्मुकालयात्॥ १६॥
अक्रूरागमवृत्तान्तमुपलभ्य तथा धनुः।
भग्नं श्रुत्वाथ कंसोऽपि प्राह चाणूर-मुष्टिकौ॥ १७॥

कंस उवाच

गोपालदारकौ प्राप्तौ भवद्भ्या तौ ममाग्रतः।
मल्लयुद्धेन हन्तव्यौ मम प्राणहरौ हि तौ॥ १८॥
नियुद्धे तद् विनाशेन भवद्भ्या तोषिको ह्यहम्।
दास्याम्यभिमतान् कामान् नान्यथैतन्महाबलौ॥ १९॥
न्यायतोऽन्यायतो वापि भवद्भ्या तौ ममाहितौ।
हन्तव्यौ तद्वधाद् राज्यं सामान्यं नो भविष्यति॥ २०॥
इत्याज्ञाप्य स तौ मल्लौ तत आहूय हस्तिपम्। •
प्रोवाचोच्चैस्त्वया मेऽद्य समाजद्वारि कुञ्जरः॥ २१॥
स्थाप्यः कुवलयापीडस्तेन तौ गोपदारकौ।
घातनीयौ नियुद्धाय रङ्गद्वारमुपागतौ॥ २२॥
तमथाज्ञाप्य दृष्ट्वा च मञ्चान् सर्वानुपाकृतान्।
आसन्नमरणः कंसः सूर्योदयमुदैक्षत॥ २३॥

---

• हस्तिपं हस्तिपकं हस्तिनः महामात्रमित्यर्थः। समाजद्वारि सभाद्वारे स्थाप्य इत्युत्तरेणान्वयः।

आयोगम् आभिमुख्येन प्राप्ययोगं पूजायामुद्देश्यं पाठान्तरे आजोज्यं समन्तातं योज्य बहुभियौज्यमित्यर्थः धनूरन्त्रं श्रेष्ठं धनुः क्वास्तीति पृष्ठैः रक्षिमिस्तस्मिन्नाख्याते सति॥ १४-१५॥

अनुयुक्तौ आक्षिप्तौ अवरुद्धाविति वा॥ १६-१९॥

न्यामतः मल्लशास्त्रोक्तमार्गेण, अन्यायतः तदतिक्रमेण वा। सामान्यं समानम्॥ २०-२२॥

उपाकृतान् उपकल्पितान्॥ २३-२४॥

ततः समस्तमञ्चेषु नागरः स तदा जनः।
राजमञ्चेषु चारूढाः सहामात्यैर्म्महीभृतः॥ २४॥
मल्लप्राशिनकवर्गश्च रङ्गमध्यसमीपतः।
कृतः कंसेन कंसोऽपि तुङ्गमञ्चे व्यवस्थितः॥ २५॥
अन्तःपुराणां मञ्चाश्च तथान्ये परिकल्पिताः।
अन्ये च वारमुख्यानामन्ये नागरयोषिताम्॥ २६॥
नन्दगोपादयो गोपा मञ्चेष्वन्येष्ववस्थिताः।
अक्रूर-वासुदेवौ च मञ्चप्रान्ते व्यवस्थितौ॥ २७॥
नागरीयषिता• मध्ये देवकी पुत्रगृद्धिनी।
अन्तकालेऽपि पुत्रस्य द्रक्ष्यामि रुचिरं मुखम्॥ २८॥
वाद्यमानेषु तूर्येष चानूरे चापि वल्गति।
हाहाकारपरे लोके ह्यास्फोटयति मुष्टिके॥ २९॥
हत्वा कुवलयापीड़ं हस्त्यारोहप्रणोदितम्।
मदासृगनुलिप्ताङ्गौ गजदन्तवरायुधौ॥ ३०॥
मृगमध्ये यथा सिंहौ गर्वलीलाविलोकितौ।
प्रविष्टो सुमहाङ्गं बलभद्र-जनार्द्दनौ॥ ३१॥
हाहाकारी महान् जज्ञे सर्वमञ्चेष्वनन्तरम्।
कृष्णोऽयं बलभद्रोऽयमिति लोकस्य विस्मयः॥ ३२॥
सो॥यं येन हता घोरा पूतना सा निशाचरी।
क्षिप्तञ्च शकटं येन भग्नौ च यमलार्ज्जुनौ॥ ३३॥
सोऽयं यः कालियं नागं ननर्त्तारुह्य बालकः।
धृतो गोवर्द्धनो येन सप्तरात्रं महागिरिः॥ ३४॥
अरिष्टो धेनुकः केशी लीलयैव महात्मना।
निहता येन दुर्वृत्ता दृश्यतां सोऽयमच्युतः॥ ३५॥

---

• नागरीयोषितामित्यत्र कर्मधारयसमासे नागरीशब्दस्य पुवंद्भावे प्राप्ते तदभावेन प्रयोग आर्षः।

मल्लप्राशिनकाः मल्लयुद्धेषु युक्तायुक्तपरीक्षकास्तेषां वर्गः समूहः॥ २५-२८॥

पुत्रागृद्धिनी पुत्रक्षेमाभिकांक्षिणी पुत्रस्य मुखं द्रक्ष्यमीति स्थिता॥ २९॥

अयञ्चास्य महाबाहुर्बलभद्रोऽग्रजोऽग्रतः।
प्रयाति लीलया योषिन्मनोनयननन्दनः॥ ३६॥
अयं स कथ्यते प्राज्ञैः पुराणार्थावलोकिभिः।
गोपालो यादवं वंशं मग्नमभ्युद्धरिष्यति॥ ३७॥
अयं स सर्वभूतस्य विष्णोरखिलजमनः।
अवतीर्णो महीमंशो नूनं भारहरो भुवः॥ ३८॥
इत्येवं वर्णिते पौरे रामे कृष्णे च तत्क्षणात्।
उरस्तताप देवक्याः स्नेहस्नुतपयोधरम्॥ ३९॥
महोत्सवमिवासाद्य पुत्राननविलोकनम्।
युवेव वसुदेवोऽभूद् विहायाभ्यागतां जराम्॥ ४०॥
विस्तारिताक्षियुगलो राजान्तःपुरयोषिताम्।
नागरस्त्रीसमूहश्च द्रष्टुं न विरराम तम्॥ ४१॥
सख्यः पश्यत कृष्णस्य मुखमत्यरुणेक्षणम्।
गजयुद्धकृतायास-स्वेदाम्बुकणिकाचितम्॥ ४२।
श्रीवत्साङ्कं महद्धाम बालस्यैतद् विलोक्यताम्।
परिभूय स्थितं जन्म सफलं क्रियतां दृशोः॥ ४३॥

---

मदासृगनुलिप्ताङ्गौ गजस्य मदरक्ताभ्यामुक्षितगात्रौ गजस्य दन्तावेव वरायुधौ ययौस्तौ॥ ३०-३७॥

सर्वभूतस्य विष्णोरिति व्याधिकरणे षष्ठी। सर्वभूतस्य व्याप्यवर्गस्य यो विष्णुर्व्यापकस्तस्य। अस्य हेतुगर्भं विशेषणम् अखिलजन्मनः सर्वकारणस्यांशो महीमवतीर्ण इति सम्बन्धः॥ ३८-४०॥

राजान्तः पुरयोषितां समूह इति शेषः॥ ४१॥

स्त्रीणां विस्मयोक्तिमाह—'सख्य' इत्यादि—नवभिः। गजयुद्धकृतेनायासेन स्वेदाम्बूकणिकाभिराचितं व्याप्तम्॥ ४२॥

अवश्यायजलोक्षितं हिमवार्य्यलङ्कृत शरत्कालीनमम्भोजं परिभूय स्वशोभाधिक्येन तिरस्कृत्य स्थितं मुखं पश्यत, तेन च दृशोर्जन्म सफलं क्रियताम्॥ ४३॥

श्रीवत्साङ्कं महद्धाम बालस्यैतद् विलोक्यताम्।
विपक्षक्षपणं वक्षो भुजयुग्मञ्च भामिनि॥४४॥
किन्न पश्यासि दुग्धेन्दु-मृणालधवलाननम्।
बलभद्रमिमं नीलं-परिधानमुपागतम्॥४५॥
वल्गाता मुष्टिकेनैतच्चाणूरेण तथा सखि!
क्रियते बलभद्रस्य हास्यमीषद्विलोक्यताम्॥४६॥
सख्य! पश्यत चाणूरो नियुद्धार्थमयं हरिम्।
समुरपैति न सन्त्यत्र किं वृद्धा युक्तकारिणः॥४७॥
क्व यौवनोन्मुखीभूत-सुकुमारतनुर्हरिः।
क्व वज्रकठिनाभोगि-शरीरोऽयं महासुरः॥४८॥
इमौ सुललितौ रङ्गे वर्त्तेति नवयौवनौ।
दैतेयमल्लाश्चाणूर-प्रमुखस्त्वतिदारुणाः॥४९॥
नियुद्ध-प्राश्निकानान्तु महानेष व्यतिक्रमः।
यद् बालबलिनोर्युद्ध मध्यस्थैः समुपेक्ष्यते॥५०॥

पराशर उवाच

इत्थं पुरस्त्रीलोकस्य वदतश्चालयन् भुवम्।
ववल्ग बद्धकक्षोऽन्तर्ज्जनस्य भगवान् हरिः॥५१॥
बलभद्रोऽपि चास्फोट्य ववल्ग ललितं यदा।
पदे पदे तदा भूमिर्यन शीर्णां तदद्भुतम्॥५२॥
चाणूरेण तदा कृष्णो युयुधेऽमितविक्रमः।
नियुद्धकुशलो दैत्यो बलभद्रेण मुष्टिकः॥५३॥

---

महद्धाम महत्या लक्ष्म्या देव्या धाम आश्रमभूतं वक्षः। विपक्षक्षपणञ्च भुजायुग्मं विलोक्यताम्॥४४-४५॥

बल्गाता प्रनृत्यता॥४६-४७॥

वज्रवत् कठिनमाभोगि विशालं शरीरं यस्य सः॥४८-४९॥

समुपेक्ष्यते न निवार्य्यते ॥५०॥

वद्धकक्षः दृढीकृतपरिकरः सन् जनस्यान्तः रङ्गमध्ये बबल्ग ननर्त्त॥५१-५३॥

सन्निपातावधूतैस्तु चाणूरेण समं हरिः।
क्षेपणैर्मुष्टिभिश्चैव कीलवज्रनिपातनैः॥५४॥
जानुभिश्चाश्मनिर्घातैस्तथा बाहुविघट्टितैः।
पादोद्धूतैः प्रसृष्टैश्च तयोर्युद्धमभून्महत्॥५५॥
अशस्त्रमतिघोरं तत् तयोर्युद्धं सुदारुणम्।
बलप्राणविनिष्पाद्यं समाजोत्सवसन्निधौ॥५६॥
यावद् यावच्च चाणूरो युयुधे हरिणा सह।
प्राणहनिमवापाग्र्यां तावत्तावल्लवाल्लवम्॥५७॥
कृष्णोऽपि युयुधे तेन लीलयैव जगन्मयः।
खेदाच्चालयता कोपान्निजशेखरकेशरम्॥५८॥
बलक्षयं विवृद्धिञ्च दृष्ट्वा चाणूरकृष्णयोः।
वारयामास तूर्याषु कंसः कोपपरायणः॥५९॥
मृदङ्गादिषु तूर्येषु प्रतिषिद्धेषु तत्क्षणात्।
खे सङ्गतान्यवाद्यन्त देवतूर्याण्यनेकशः॥
जय गोविन्द! चाणूरं जहि केशव! दानवम्।
इत्यन्तर्द्धानगा देवास्तदोचुरतिहर्षिताः॥६०॥
चाणूरेण चिरं कालं क्रीडित्वा मधुसूदनः।
उत्पाट्य भ्रामयामास तद्वधाय कृतोद्यमः॥६१॥

---

सन्निपातैः परस्परसंश्लेषैः अवधूतैरर्वाक्पातनैः क्षेपणैः दृढम् आकृष्य निरसनैः। मुष्टिभिर्मुष्टिप्रपातैः कीलनिपातनैः। कूर्परेण घातैः वज्रनिपातनैः अरन्तिद्वयेन घातैः, कीलवज्रनिपातिभिरिति पाठे कीलवत् वज्रवच्च निपातौ येषां स्त इति मुष्टिविशेषणम्। पादोदभूतैः पद्भ्यामुत्क्षेपणैः प्रसृष्टैः सर्वावयवसंश्लेषेण पिण्डीकरणैः॥५४-५६॥

बलेन शौर्य्येण प्राणेन च देहशक्त्या विनिष्पाद्यम्॥५७॥

प्राणहानिं वलक्षम् अग्र्याम् आद्यां प्रागदृष्टामित्यर्थः. लवाल्लवं किञ्चित् किञ्चित्॥५८॥

खेदात् कोपाच्च निजशेखरे स्वशिरोभूषणे स्थितं केशरञ्चालयता वारं वारं धुन्वता तेन चाणूरेण॥५९-६१॥

भ्रामयित्वा शतगुणं दैत्यमल्लममित्रजित्।
भूस्वास्फोटयामास गगने गतजीवितम्• ॥६२॥
भूमावास्फोटतस्तेन चाणूरः शतधाव्रजत्।
रक्तस्राव-महापङ्कां चकार स तदा भुवम्॥६३॥
वलदेवोऽपि तत्कालं मुष्टिकेन महाबलः।
युयुधे दैत्यमल्लेन चाणूरेण यथा हरिः॥६४॥
सोऽप्येनं मुष्टिना मूर्द्ध्नि वक्षस्याहत्य जानुना।
पातयित्वा धरापृष्ठे निष्पपेष गातयुषम्॥६५॥
कृष्णस्तोमलकं भूयो मल्लराजं महाबलम्।
वाममुष्टिप्रहारेण पातयामास भूतले॥६६॥
चाणूरे निहते मल्ले मुष्टिके विनिपातिते।
नीते क्षयं तोमलके सर्वे मल्लाः प्रयुद्रुवुः॥६७॥
ववल्गतुस्तदा रङ्गे कृष्णसङ्कर्षणावुभौ।
समानवयसो गोपान् बलादाकृष्य हर्षितौ॥६८॥
कंसोऽपि कोपरक्ताक्षः प्राहोच्चैर्व्यापृतान् नरान्।
गोपावतौ समाजौघान्निष्काश्येतां बलादितः॥६९॥
नन्दोपि गृह्यतां पापो निगड़ैरायसैरिह।
अवृद्धार्हेण दण्डेन वसुदेवोऽपि वध्यताम्॥७०॥
वल्गन्ति गोपाः कृष्णेन ये चेमे सहिताः पुरः।

---

• अमित्रजित् शत्रुजित्, गगने आकाशे शतवारम्, ऊर्द्ध्वभ्रामणवेलायामिति शेषः, गतं जीवितं प्राणा यस्य तं दैत्यमल्लं चाणूरम्। भूमौ आस्फोटयामास उत्पात्य सवेगं पातयामास।

शतगुणं शतवारम्॥६२-६३॥

तत्कालं तस्मिन्नेव काले॥६४-६७॥

ववल्गतुः नृत्यञ्चक्रतुः॥६८॥

व्यापृतान् सर्वतः स्थितान् समाजौघात् समाजस्थानात् लोकानां समूहात्॥६९-७०॥

गावो ह्रियन्तामेतेषां यच्चास्ति वसु किञ्चन॥७१॥

एवमज्ञापयानञ्च प्रहस्य मधुसूदनः• ।

उत्पत्यारुह्य तं मञ्चं कंसं जग्राह वेगतः॥७२॥

केशेष्वाकृष्य विगलत्किरीटमवनीतले।

कंस स पातयामास तस्योपरि पपात च॥७३॥

निःशेष-जगदाधार-गुरुणा पततोपरि।

कृष्णेन त्याजितः प्राणानुग्रसेनात्मजो नृपः॥७४॥

मृतस्य केशेषु तदा गृहीत्वा मधुसूदनः।

चकर्ष देहं कंसस्य रङ्गमध्ये महाबलः॥७५॥

गौरवेणातिमहता• परिखा तेन कृष्यता।

कृता कंसस्य देहेन वेगेनेव महाम्भसः॥७६॥

कंसे गृहीते कृष्णेन तद्भ्राताभ्यागतो रुषा।

सुमाली बलभद्रेण लीलयैव निपातितः॥७७॥

ततो हाहाकृतं सर्वमासीत् तद्रङ्गमण्डलम्।

अवज्ञया हतं दृष्ट्वा कृष्णेन मथुरेश्वरम्॥७८॥

कृष्णोऽपि वसुदेवस्य पादौ जग्राह सत्वरः।

देवक्याश्च महाबाहुर्ललभद्रसहायवान्॥७९॥

उत्थाप्य वसुदेवस्तं देवकी च जनार्दनम्।

स्मृतजन्मोक्तवचनौ तावेव प्रणतौ स्थितौ॥८०॥

---

• आज्ञापयामानमिति वक्तव्ये आज्ञापयानमित्यार्षः प्रयोगः।

वसु धनम्॥७१-७३॥

• कृष्यमाणेनेति कृष्यतेत्यार्षप्रयोगः गौरवेण हेतुना अतिमहता अतिमात्रगौरवशालिना देहेन।

निःशेषस्य जगत आधारेण अभिव्याप्य धारणेन गुरुणा॥७४॥

भूतस्य देहस्याप्याकर्षणं पित्रोः परितोषार्थम्.॥७५॥

कृष्यता आकृष्यमाणैन तेन देहेन परिखा कृता॥७६-७९॥

स्मृतजन्मोक्तवचनाविति—'**स्तुतोऽहं यत् त्वया पूर्वं पुत्रार्थिन्या तदद्य ते। सफलं देवि! संजातं जातोऽहं यत्तवोदरा**'दिति भगवता जन्मसमये यदुक्तं वचनं तत् स्मृतं याभ्यां तौ॥८०॥

वसुदेव उवाच

प्रसीद सीदतां नाथ! देवानां वरदः प्रभो।
तथावयोः प्रसादेन कृतोद्धारश्च केशव॥८१॥
आराधितो यद्भगवानवतीर्णो गृहे मम।
दुर्वृत्तनिधानार्थाय तेन नः पावितं कुलम्॥८२॥
त्वमतः सर्वभूतानां सर्वभूतेष्ववस्थितः।
प्रवर्त्तेते समस्तात्मन्! त्वत्तो भूतभविष्यती॥८३॥
यज्ञैस्त्वमिज्यसे नित्यं सर्वदेवमयाच्युत।
त्वमेव यज्ञो यष्टा च यज्ञानां परमेश्वरः॥८४॥
सापह्नवं मम मनो यदेतत् त्वयि जायते।
देवक्याश्चात्मजप्रीत्या तदत्यन्तविडम्बना॥८५॥
क्व कर्त्ता सर्वभूतानामनादिनिधनो भवान्।
क्व मे मनुष्यकस्यैषा जिह्वा पुत्रेति वक्ष्यति॥८६॥
जगदेतज्जगन्नाथ! सम्भूतमखिलं यतः।
कया युक्त्या विना मायां सोऽस्मत्तः सम्भविष्यति॥८७॥

---

हे केशव! सीदतां प्राणिनां प्रसीद। यथा देवानाञ्च वरो भूमारहरणलक्षणो दत्तः, तथावयोश्च प्रसादेन पुत्रत्वेनोत्पत्त्या कृतोद्धारोऽसि, कृत उद्धारः संसारस्य उद्धरणं येन तथाभूतोऽसि। पाठान्तरे—आवयोर्यः प्रसादः कृतः पुत्रो भविष्यामीत्येवं प्रतिज्ञालक्षणः स च कृतोद्धारः कृताविष्कारः स्फुटीकृत इति यावत् एवमन्येषामपि सीदतां प्रसन्नो भवेत्यर्थः॥८१॥

किञ्च यदुशापाभिभूतं चास्मत्कुलं पवित्रीकृयमित्याह—**'आराधित'**। इति न चैतावता त्वं मत्पुत्रः परमेश्वरत्वादित्याशयेनाह—**'त्वमन्त'** रिति द्वाभ्याम्। किञ्च मदाराधननिमित्तीकृत्य दुर्वृत्तानां निधनाय त्वं मद्गृहेऽवतीर्णोऽसि॥८२-८४॥

यत्त्वेन्मम च देवक्याश्च मनस्त्वयात्मज इति प्रीत्या सापत्यभावभ्रान्तियुक्तं जायते तत् अपहास्यतैव॥८५॥

एतदेव स्पष्टयति—**'क्व कर्त्ते'** ति त्रिभिः॥८६-८७॥

यस्मिन् प्रतिष्ठितं सर्वं जगत् स्थावरजङ्गमम्।
स कोष्ठोत्सङ्गशयनो मानुषाज्जायते कथम्॥८८॥
स त्वं प्रसीद परमेश्वर! पाहि विश्व-
मंशावतारकरणैर्न ममासि पुत्रः।
आब्रह्मपादपमयं जगदेतदीश!
त्वं नो विमोहयसि किं परमेश्वरात्मन्॥८९॥
मायाविमोहितदृशा तनयो ममेति
कंसाद्भयं कृतमपास्तभयातितीव्रम्।
नीतोऽसि गोकुलमितोऽतिभयाकुलस्य
वृद्धिं गतोऽसि मम नास्ति ममत्वमीश॥९०॥
कर्म्माणि रुद्र-मरुदश्वि-शतक्रतूनां
साध्यानि यानि न भवन्ति निरीक्षितानि।
त्वं विष्णुरीश! जगतामुकारहेतोः
प्राप्तोऽसि नः परिगतो विगतो हि मोहः॥९१॥

इति श्रीविष्णुपुराणे पञ्चमांशे विंशः अध्यायः॥

---

कोष्ठोत्सङ्गशयनः उदरान्तर्वर्त्ती भूत्वा॥८८॥

तदेवं परमेश्वर इति ज्ञात्वा प्रार्थयते—'**स त्व**' मिति. अंशावतारकरणैर्विश्वं पाहि। जगदेतत् त्वत्तो भवति॥८९॥

त्वन्मायामोहितेन मया त्वयेतावन्तं कालं या पुत्रबुद्धिः कृता, अधुना तु सा बुद्धिर्निवृत्तेत्याह—'**मायाविमोहिते**' ति हे अपास्तभय॥९०॥

ममत्वाभावे हेतुमाह '**कर्माणी**'ति। यस्य तव कर्माणि रुद्रादीनामपि साध्यानि न भवन्ति निरीक्षितानि च प्रत्यक्षतः सवैर्जनैर्नापलपितुं शक्यन्ते, स त्वं साक्षात् विष्णुरेव जगतामुपकाराय नोऽस्मान् प्राप्तोऽसीति परिगतः सम्यक् ज्ञातोऽसि अति विमोहो विगतः विनष्टः॥९१॥

**इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा**
**श्रीविष्णुपुराणटीकायां पञ्चमांशे विंशोऽध्यायः॥**

# एकविंशोऽध्यायः

## (उग्रसेनस्य राज्यभिषेकः, भगवतो वासुदेवस्य विद्याध्ययनञ्च)

पराशर उवाच

तौ समुत्पन्नविज्ञानौ भगवत्कर्म्मदर्शनात्।
देवकी-वसुदेवौ तु दृष्ट्वा मायां पुनर्हरिः।
मोहाय यदुचक्रस्य विततान् स वैष्णवीम्॥ १॥
उवाच चाम्ब! भोस्तात! चिरादुत्कण्ठितेन मे।
भवन्तौ कंसभीतेन दृष्टो सङ्कर्षणेन च॥ २॥
कुर्वतां याति यः कालो मातापित्रोरपूजनम्।
तत्खण्डमायुषो व्यर्थमसाधूनां हि जायते॥ ३॥
गुरु-देव-द्विजातीनां मातापित्रोश्च पूजनम्।
कुर्वतां सफलं जन्म देहिनां तात! जायते॥ ४॥
तत् क्षन्तव्यमिदं सर्वमतिक्रमकृतं पितः।
कंसप्रतापवीर्याभ्यामार्त्तयोः परवश्ययोः॥ ५॥

पराशर उवाच

इत्युक्त्वाथ प्रणम्योभौ यदुवृद्धाननुक्रमात्।
यथावदभिपूज्याथ चक्रतुः पौर-माननम्॥ ६॥
कंसपत्न्यस्ततः कंसं परिवार्य हतं भुवि।
विलेपुर्मातरश्चास्य दुःखशोकपरिप्लुताः॥ ७॥
बहुप्रकारमत्यर्थं पश्चात्तापातुरो हरिः।
ताः समाश्वासयामास स्वयमस्राविलेक्षणः• ॥८॥

---

तयोर्मोहाय यदुचक्रस्य च मोहाय मायां विस्तारितवान्॥ १-२॥

अपूजनं पूजाविरुद्धमन्यत् कुर्वतामित्यर्थः॥ ३-५॥

उग्रसेनं ततो बन्धान्मुमोच मधुसूदनः।
अभ्यषिञ्चत् तथैवैनं निजराज्ये हतात्मजम्• ॥९॥
राज्याभिषिक्तः कृष्णे यदुसिंहः सुतस्य सः।
चकार प्रेतकार्याणि ये चान्ये तत्र घातिताः॥१०॥
कृतौर्ध्वदैहिकं चैनं सिंहासनगतं हरिः।
उवाचाज्ञापय विभो! यत् कार्यमविशङ्कितः॥११॥
ययातिशापाद् वंशोऽयमराज्यार्होऽपि साम्प्रतम्।
मयि भृत्ये स्थिते देवानाज्ञापयतु किं नृपैः॥१२॥

पराशर उवाच

इत्युक्त्वा सोऽस्मरद् वायुमाजगाम स तत्क्षणात्।
उवाच चैनं भगवान् केशवः कार्यमानुषः॥१३॥
गच्छेन्द्रं ब्रूहि वायो! त्वमलं गर्वेण वासव।
दीयतामुग्रसेनाय सुधर्मा भवता सभा• ॥१४॥
कृष्णो ब्रवीति राजार्हमेतद्रत्नमनुत्तमम्।
सुधर्माख्या सभा युक्तमस्यां यदुभिरासितुम्॥१५॥

---

• पश्चात्तापेन कंसमारणजनितानुतापेन आतुरः आर्त्तः। अस्रेण अश्रुजलेन आविले कलुषिते ईक्षणे यस्य सः।

पौर–माननं पौराणां सम्मानम्॥६–१०॥

हतानां कृतमौर्द्धदैहिकं श्राद्धादि येन तम्॥११–१२॥

हतः कृष्णेन मारितः आत्मजः पुत्रः कंसो यस्य तम्। पुरा मथुरायामुग्रसेन एव राजासीत्, कंसस्तु दुर्वृत्तः पुत्रस्तं बलात्कारेण राजसिंहसनादपसार्य राजा बभूव, अतस्तस्य कंसपितुरुग्रसेनस्यैवेदं राज्यमत आह '**निजराज्यम**' इति।

कार्येण निमित्तेन मानुषः॥१३॥

सुधर्मा तदाख्या सभा देवसभा '**स्यात् सुधर्मा देवसभे**' ति कोषात्।

पुरन्दर इत्यनेन पुरं दारयतीति व्युत्पत्त्या तस्य शचीपतेः पुरदारणक्षमत्वादिरूपमहाप्रभावशालित्वेऽपि गोवर्द्धनधारणादिरूपस्य कृष्णप्रभावस्य तेन पूर्वमनभूतत्वात् तत्स्मरणादेव कृष्णादेशेन प्रकृते पुरन्दरस्य प्रवृत्तिरिति सूच्यते।

पराशर उवाच

इत्युक्तः पवनो गत्वा सर्वमाह शचीपतिम्।
ददौ सोऽपि सुधर्माख्यां सभां वायोः पुरन्दरः• ॥१६॥
वायुना चाहृता दिव्यां सभां ते यदु पुङ्गवाः।
बुभुजुः सर्वरत्नाढ्यां गोविन्दभुजसंश्रयात्॥१७॥
विदिताखिलविज्ञानो सर्वज्ञानमयावपि।
शिष्याचार्यक्रमं वीरौ ख्यापयन्तौ यदूत्तमौ• ॥१८॥
ततः सान्दीपनिं काश्यमवन्तीपुरवासिनम्।
अस्त्रार्थं जग्मतुर्वीरौ बलदेव-जनार्द्दनौ॥१९॥
तस्य शिष्यत्वमभ्येत्य गुरुवृत्तपरौ हि तौ।
दर्शयाञ्चक्रतुर्वीरावाचारमखिले जने॥२०॥
सरहस्यं धनुर्वेदं ससङ्ग्रहमधीयताम्।
अहोरात्रैश्चतुःषष्ट्यातुदद्भुतमभूद् द्विजः॥२१॥
सान्दीपनिरसम्भाव्यं तयोः कर्मातिमानुषम्।
विचितन्त्य तौ तदा मेने प्राप्तौ चन्द्र-दिवाकरौ॥२२॥
अस्त्रग्राममशेषञ्च प्रोक्तमात्रवाप्य तौ।
ऊचतुर्व्रियतां या ते दात्वाया गुरु दक्षिणा॥२३॥
सोऽप्यतीन्द्रियमालोक्य तयोः कर्म महामतिः।
अयाचत मृतं पुत्रं प्रभासे लवणार्णवे॥२४॥

---

वक्तव्यमाह—'अलं गर्वेणे' इत्यादि-पादोनद्वाभ्याम्।।१४-१८।।

शिष्याचार्यक्रमं गुरुशिष्ययोर्मिथ आचरणक्रमं ख्यापयन्तौ स्वीयव्यवहारपरम्परया प्रकाशयन्तौ बोधयन्ताविति यावत् गोकसंग्रहार्थमिति शेषः।

काश्यां वाराणस्यां जातम्॥१९-२०॥

सरहस्यम् अस्त्रमन्त्रोपनिषत् सहितम्। सङ्ग्रहः शास्त्रप्रयोगस्तत्सहितमधीतवन्तौ॥२१-२२॥

अतीन्द्रयम् अन्यत्रादृष्टपूर्वम्॥२४-२९॥

गृहीतास्त्रौ ततस्तौ तु सार्घ्यपात्रो महोदधिः।
उवाच न मया पुत्रो हतः सान्दीपनेरिति॥ २५॥
दैत्यः पञ्चजनो नाम शङ्खरूपः स बालवम्।
जग्राह सोऽस्ति सलिले ममैवासुरसूदन॥ २६॥
इत्युक्तोऽन्तर्जलं गत्वा हत्वा पञ्चजनं खलम्।
कृष्णो जग्राह तस्यास्थि-प्रभवं शङ्खमुत्तमम्॥ २७॥
यस्य नादेन दैत्यानां बलहानिरजायत।
देवानां ववृधे तेजो यात्यधर्मश्च संक्षयम्॥ २८॥
तं पाञ्चजन्यमापूर्य गत्वा यमपुरीं हरिः।
बलदेवश्च बलवान् जित्वा वैवस्वतं यमम्॥॥ २९॥
तं बालं यातनासंस्थं यथापूर्वशरीरिणम्।
पित्रे प्रदत्तवान् कृष्णो बलश्च बलिनां वरः॥ ३०॥
मथुराञ्च पुनः प्रासावुग्रसेनेन पालिताम्।
प्रहृष्टपुरुषस्त्रीकावूभौ राम-जनार्द्दनौ॥ ३१॥

इति श्रीविष्णुपुराणे पञ्चमांशे एकविंशः अध्यायः॥

---

यथा पूर्वशरीरिणं पूर्वं तस्य यादृशं शरीरमासीत्तादृशशरीरयुक्तं स्वमायया निर्माय ददौ॥ ३०-३१॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमांशे एकविंशोऽध्यायः॥

# द्वाविंशोऽध्यायः

## (जरासन्धस्य पराजयः)

पराशर उवाच

जरासन्धसुते कंस उपयेमे महाबलः।
अस्तिं प्राप्तिञ्च मैत्रेय! तयोर्भर्तृहनं हरिम्॥ १॥
महाबलपरीवारो मगधाधिपतिर्बली।
हन्तुमभ्याययौ कोपाज्जरासन्धः सयादवम्॥ २॥
उपेत्य मथुरां सोऽथ रुरोध मगधेश्वरः।
अक्षौहिणीभिः सैन्यस्य त्रयोविंशतिभिर्वृतः• ॥ ३॥
निष्क्रम्याल्पपरीवारावुभौ राम-जनार्द्दनौ।
युयुधाते समं तस्य बलिनौ बलिसैनिकैः॥ ४॥
ततो बलश्च कृष्णश्च चक्राते मतिमुत्तमाम्।
आयुधानां पुराणानामादाने मुनिसत्तम॥ ५॥
अनन्तरं हरेः शार्ङ्गं तूणौ चाक्षयसायकौ।
आकाशादगतौ वीर! तथा कौमोदकी गदा॥ ६॥
हलञ्च बलभद्रस्य गगनादागतं कवे।
मनसोऽभिमतं विप्र! सौनन्दं मुसलं तथा॥ ७॥
ततो युद्धे पराजित्य ससैन्यं मगधाधिपम्।
पूरीं विविशतुर्वीरावुभौ राम-जनार्द्दनौ॥ ८॥

---

अस्तिप्राप्तिसंज्ञे जरासन्धस्य सुते। तयोर्भर्तृहनं कंसहन्तारम्॥ १॥

मगधाधिपतिर्जरासन्धः सयादवं यादवैः सह हरिम्॥ २॥

सैन्यस्य च त्रयोविंशत्याऽक्षौहिणीभिर्वृतः॥ ३॥

• त्रयोविंशतिभिरित्यत्र बहुवचनमार्षम्, **'विंशत्याद्याः सदैकत्वे'** इत्याद्यनुशासनेन एकवचनस्यैवोचित्यात्।

तस्य बलिभिः सैनिकैः सह॥ ४-८॥

जिते तस्मिन् सुदुर्वृते जरासन्धे महामुने।

जीवमाने गते कृष्णस्तं नामन्यत निर्ज्जितम् • ॥९॥

पुनरप्याजगामाथ जरासन्धो बलान्वितः।

जितश्च राम-कृष्णाभ्यामपक्रान्तो द्विजोत्तम॥१०॥

दश चाष्टौ च सङ्ग्रामानेवभत्यन्तदुर्मदः।

यदुभिर्मागधो राजा चक्रे कृष्णपुरोगमैः॥११॥

सर्वेष्वेतेषु युद्धेषु यादवैः स पराजितः।

अपक्रान्तो जरासन्धः स्वल्पसैन्यैर्बलाधिकः• ॥१२॥

तद् बलं यादवानां तैर्ज्जितं यदनेकशः।

तत्तु सन्निधिमाहात्मयं विष्णोरंशस्य चक्रिणः॥१३॥

मनुष्यधर्मशीलस्य लीला सा जगतः पतेः।

अस्त्राणयनेकरूपाणि यदरातिषु मुञ्चति॥१४॥

मनसैव जगत्सृष्टिं संहारञ्च करोति यः।

तस्यारिपक्षक्षपणे कोऽयमुद्यमविस्तरः॥१५॥

तथापि यो मनुष्याणां धर्मस्तमनुवर्त्तते।

कुर्वन् बलवता सन्धिं हीनैर्युद्धं करोत्यसौ॥१६॥

साम चोपप्रदानञ्च तथा भेदं प्रदर्शयन्।

---

• जीवमाने जीवति गते सति। जीवधातोः परस्मैपदिनः शानप्रयोग आर्षः।

तं निर्जितं नामन्यत पुनस्तदागमस्यावश्यम्भावित्वात्॥

पाठान्तरे तेनैव निर्जितकमात्मानममन्यत इत्यर्थः॥९-१३॥

• स जरासन्धः. स्वल्पानि जरासन्धबलोपेक्षया अल्पसंख्यानि सैन्यानि योद्धारः येषां तैः। बलैः आपेक्षिकाधिकसंख्यकसैन्यैः अधिकः अधिकस्यैन्यसम्पन्न इत्यर्थः।

ननु चक्रिणः सन्निधिमात्रमाहात्म्यं तत्र भवति स्वयमेवानेकविधास्त्रप्रयोगात्तत्राह **'मनुष्यधर्मशीलस्ये'** ति॥१४॥

लीलात्वमेव प्रपञ्चयति—**'मनसैवे'** ति यावत्समाप्ति॥१५॥

करोति दण्डपातञ्च क्वचिदेव पलायनम्॥ १७॥

मनुष्यदेहिनां चेष्टामित्येवमनुवर्त्ततः।

लीला जगत्पतेस्तस्य च्छन्दतः सम्प्रवर्त्तते॥ १८॥

इति श्रीविष्णुपुराणे पञ्चमांशे द्वाविंशः अध्यायः॥

---

छन्दतः इच्छातः॥ १८॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे द्वाविंशोऽध्यायः॥

# त्रयोविंशोऽध्यायः

## (द्वारकाया दुर्गनिर्माणम्, कालयवनदहनम् मुचुकुन्दस्य भगवत्स्तुतिश्च)

पराशर उवाच

गार्ग्य गोष्ठे द्विजं श्यालः षण्ढ इत्युक्तवान् द्विज।
यदूनां सन्निधौ सर्वे जहसुः सर्वयादवाः॥ १॥
ततः कोपसमाविष्टो दक्षिणाब्धिमुपेत्य सः।
सुतमिच्छंस्तपस्तेपे यदुचक्रभयावहम्॥ २॥
अराधयन् महादेवं सोऽयश्चूर्णमभक्षयत्।
ददौ वरञ्च तुष्टोस्मै वासरे द्वादशे हरः॥ ३॥
सभाजयामास च तं यवनेशो ह्यनात्मजः।
तद्योषित्सङ्गमाद्यास्य पुत्रोऽभूदलिसन्निभिः॥ ४॥
तं कालयवनं नाम राज्ये स्वे यवनेश्वरः।
अभिषिच्य वनं यातो वज्राग्रकठिनोरसम्॥ ५॥
स तु वीर्यमदोन्मत्तः, पृथिव्यां बलिनो नृपान्।
पप्रच्छ नारदस्तस्मै कथयामास यादवान्॥ ६॥
म्लेच्छकोटिसहस्राणां सहस्त्रैर्बहुभिर्वृतः।
गजाश्वरथपत्त्योघैश्चकार परमोद्यमम्॥ ७॥

---

'क्वचित् पलायनं करोती'त्युक्तस्य पलायनस्य प्रस्तावाय कालयवनोत्पत्त्यादि-प्रकारमाख्यायिकया वर्णयति—'गार्ग्यं 'मित्यादिना **'मथुराञ्च पुरीं यया'** वित्यन्तेन। गार्ग्यञ्च श्यालः।

अनपत्यत्वात् षण्ढ इत्युपहसन्नुक्तवान्॥ १-२॥

स च गार्ग्यो महादेवमाराधयन्नश्चूर्णं व्रतरूपेणाभक्षयत्॥ ३॥

तदेवं लब्धवरमागतं ज्ञात्वा अनात्मजोऽपुत्रो यवनेशः स्वभार्यायां पुत्रोत्पादनया प्रार्थयिष्यन् सम्पूजयामास। अलिसन्निभः भृङ्गवत् कृष्णवर्णः॥ ४॥

वज्राग्रवत् कठिनोरसम्॥ ५-७॥

प्रययौ चाव्यवच्छिनं छिन्नयानो दिने दिने।
यादवान् प्रति सामर्षो मैत्रेय! मथुरापुरीम्॥ ८॥
कृष्णोऽपि चिन्तयामास क्षयितं यादवं बलम्।
यवनेन रणे गम्यं मागधस्य भविष्यति॥ ९॥
मागधस्य बलं क्षीणं स कालयवनो बली।
हन्ता तदिदमायातं यदूनां व्यसनं द्विधा॥ १०॥
तस्माद् दुर्ग करिष्यामि यदूनामतदुर्जयम्।
स्त्रियोऽपि यत्र युध्येयुः किं पुनर्वृष्णिपुङ्गवाः॥ ११॥
मयि मत्ते प्रमत्ते वा सुप्ते प्रवसिते तथा।
यादवाभिभवं दुष्टा मा कुर्वन् परयोधकाः• ॥ १२॥
इति सञ्चिन्त्य गोविन्दो योजनानि महोदधिम्।
ययचे द्वादश पुरीं द्वारकां तत्र निर्ममे॥ १३॥
महोद्यानां महावप्रां तडागशतशोभिताम्।
प्रकारगृहसम्बाधमिन्द्रस्येवामरावतीम्॥ १४॥

---

छिन्नयान इति अन्तरान्तरा श्रान्तं गजश्वादि वाहनं त्यक्त्वा वाहनोन्तरेण पूर्वमेव तत्र तत्र स्थापितेनाव्यवच्छिन्नं यथा भवत्येवं त्वरया मथुरां प्रययावित्यर्थः॥८॥

'**कृष्णोऽपी**' एकतः कालयवने अन्यतश्च मागधे प्राप्नुवति श्रीकृष्णश्चिन्तयामास, कथं यवनेन रणे युद्धे क्षयितं क्षीणप्रायं यादवं बलं मागधस्य गम्यं जय्यम्॥९॥

तेन च क्षयितं स कालयवनो बली हन्ता हनिष्यति, तदेवं द्विधा उभयतो यदूनां व्यसनं प्राप्तम्॥१०॥

तस्माद् दुर्गं करिष्यामिति॥११॥

किञ्च '**मयीति**'—मत्ते मद्यादिना प्रमत्ते अनवहिते प्रवसिते अन्यत्र गते॥१२॥

• यदूनां यदुवंशीयानां दुर्ग शत्रुभिरनायासेन गन्तुमशक्यं वासस्थानम्। करिष्यामि अहमिति शेषः। युध्येयुरिति परस्मैपदप्रयोग आर्षः।

द्वादक्षयोजनानि भूमिं समुद्रं याचित वान्।।१३।

मथुरावासिनो लोकांस्तत्रानीय जनार्दनः।

आसन्ने कालयवने मथुराञ्च स्वयं ययौ• ॥ १५॥

बहिररावसिते सैन्ये मथुराया निरायुधः।

निर्जगाम स गोविन्दो ददृशे यवनेश्वरम्॥ १६॥

स ज्ञात्वा वासुदेवं तं बाहुप्रहरणो नृपः।

अनुयातो महायोगि-चेतोभिः प्राप्यते न यः॥ १७॥

तेनानुयातः कृष्णोऽपि प्रविवेश महागुहाम्।

यत्र शेते महावीर्यो मुचुकुन्दो नरेश्वरः॥ १८॥

सोऽपि प्रविश्य यवनो दृष्ट्वा शय्यागतं नृपम्।

पादेन ताडयामास मत्वा कृष्णं सुदुर्मतिः॥ १९॥

दृष्टमात्रस्तु मैत्रेय! भस्मीभूतश्च तत्क्षणात्॥ २०॥

स हि देवासुरे युद्धे गतो जित्वा महासु

निद्रार्त्तः सुमहाकालं निद्रा वव्रे वरं सु ॥

प्रोक्तश्च दैवैः संसुप्तं यस्त्वामुत्थापयिष्य

देहजेनाग्निना सद्यः स तु भस्मीभविष्यति॥ २[illegible]॥

---

• कालयवने आसन्ने समीपवर्त्तिनि सति मथुराक्रमणाय सन्नह्य मथुरासमीपमागते सतीत्यर्थः। ययौ तत्प्रतिरोधार्थमिति शेषः।

महान् वप्रो यस्याः प्रकाराधारभूता कृत्रिमोच्छ्रिता भूमिर्वप्रसंज्ञा। प्राकारगृहसम्बाधां दुर्गौगृहैश्च सङ्कीर्णाम्॥ १४.१५॥

आवासिते पुरमवरुध्य निवेशिते॥ १६॥

स यवनस्तं वासुदेवं नारदोक्तैर्लक्षणैर्ज्ञात्वा अनुयातः अन्वधावत्। कथम्भूतं महायोगिनाञ्चेतोभिरपि यो न प्राप्यते तम्॥ १७-१९॥

'तत्क्रोधजेने' ति तत्क्रोधोद्दीपितेन स्वदेहजेनेत्यर्थः॥ २०॥

तस्य भस्मीभावे कारणमितिहासेनाह—'स ही' ति द्वाभ्याम्॥ २१॥

• सुमहान्, अतिसुदीर्घः कालः तम् व्याप्य, कालाध्वनोरत्यन्तसंयोग इति द्वितीया, वव्रे ययाचे, अत्र वृधातोः प्रार्थनार्थत्वात् दुहाद्यन्तर्गतत्वेन द्विकर्मकत्वम्।

एवं दग्ध्वा स तं पापं दृष्ट्वा च मधुसूदनम्।
कस्त्वमित्याह सोऽप्याह जातोऽहं शशिनः कुले।•
वसुदेवस्य तनयो यदेवंशसमुद्भवः॥ २३॥

मुचुकुन्दोऽपि तत्रासौ वृद्धगार्ग्यवयोऽस्मरत्।
संस्मृत्य प्रणिपत्यैनं सर्वभूतेश्वरं हरिम्॥ २४॥
प्राह ज्ञातौ भवान् विष्णोरंशस्त्वं परमेश्वरः।
पुरा गार्ग्येण कथितमष्टाविंशतिमे युगे।
द्वापरान्ते हरेर्जन्म यदोर्वंशे भविष्यति• ॥ २५॥
स त्वं प्राप्तो न सन्देहो मर्त्त्यानामुपकारकृत्।
तथापि सुमहत् तेजो नालं सोढुमहं तव॥ २६॥
तथाहि सजलाम्भोद-नादधीरतरं तव।
वाक्यं नमति चेवोर्वी यस्य पादप्रपीडिता॥ २७॥
देवासुरे महायुद्धे दैत्यसैन्ये महाभटाः।
न शेकुर्मम तत्तेजस्त्वतेजो न सहाम्यहम्॥ २८॥
संसारपतितस्यैको जन्तोस्त्वं शरणं परम्।
स प्रसीद प्रपन्नार्त्तिहर्त्ता हर ममाशुभम्• ॥ २९॥
त्वं पयोनिधयः शैलाः सरितस्त्वं वनानि च।
मेदिनी गगनं वायुरापोऽग्निस्त्वं तथा मनः॥ ३०॥

---

• देहजेन स्वशरीसमुद्भूतेन।

हरेर्जन्म भविष्यतीति मे गर्गेण कथितम्॥ २५॥

• अष्टविंशतितम् अष्टाविंशे इति रा वक्तव्ये अष्टाविंशतिमे इत्यार्षम्।

गर्गेण कथितो हरिस्त्वमेवेत्यत्र लिङ्गान्याह—'तथाही' ति सार्द्धद्वाभ्याम्॥ २७-२८॥

त्वं हि प्रपन्नार्त्तिहर्त्ता अतो ममाशुभं हर॥ २९-३०॥

• संसारपतितस्य संसाररूपे गर्त्ते निपतितस्य। संसारं स्वादृष्टोपनिबद्धशरीरपरिग्रह पतितस्य प्राप्तस्य, शरणं गतिः। परितत्र गत्यर्थः।

बुद्धिरव्याकृतं प्राणाः प्राणेशस्त्वं तथा पुमान्।
पुंसः परतरं यच्च व्याप्यजन्माविकारि यत्•॥ ३१॥
शब्दादिहीनमजरममेयं क्षयवर्जितम्।
अवृद्धिनाशं तद्ब्रह्म त्वमाद्यन्तविवर्जितम्॥ ३२॥
त्वत्तोऽमराः सपितरो यक्ष-गन्धर्व-किन्नराः।
सिद्धाश्चाप्सरसस्त्वत्तो मनुष्याः पशवः खगाः॥ ३३॥
सरीसृपा मृगाः सर्वे त्वत्तः सर्वे महीरुहाः।
यच्च भूतं भविष्यञ्च किञ्चिदत्र चराचरम्॥ ३४॥
अमूर्त्तं मूर्त्तमथवा स्थूलं सूक्ष्मतरं स्थितम्।
तत्सर्वं त्वं जगत्कर्त्ता नास्ति किञ्चित् त्वया विना॥ ३५॥
मया संसारचक्रेऽस्मिन् भ्रमता भगवन् सदा।
तापत्रयाभिभूतेन न प्राप्ता निर्वृतिः क्वचित्॥ ३६॥
दुःखान्येव सुखानीति मृगतृष्णा जलाशया।
तथा नाथ! गृहतानि तानि तापाय चाभवन्॥ ३७॥
राष्ट्रमुर्वी बलं कोशो मित्रपक्षस्तथात्मजाः।
भार्या भृत्यजना ये च शब्धाद्या विषयाः प्रभो॥ ३८॥
सुखबुद्ध्या मया सर्वं गृहीतमिदमव्यय।
परिणामे तदेवेश तापात्मकमभून्मम॥ ३९॥
देवलोकमिमं प्राप्तो नाथ! देवगणेऽप्ययम्।
मत्तः साहायकामोऽभूच्छाश्वती कुत्र निर्वृतिः॥ ४०॥
त्वामनाराध्य जगतां सर्वेषां प्रभवास्पदम्।
शाश्वती प्राप्यते केन परमेश्वर! निर्वृतिः॥ ४१॥

---

व्यापि सर्वकार्यानुगतम् अजन्म अविकारि जन्मादिविकारशून्यम्॥ ३१॥

आद्यन्तविवर्जितं देशतोऽप्यपरिच्छिन्नम्।।३२।।

• बुद्धिः महत्तत्तम्, अव्याकृतं विकृतिभिन्नं मूलप्रकृतिभूतम् '**मूलप्रकृतिरविकृति**'रिति सांख्योक्तेः। अजन्मविकारवदिति जन्म शरीरसम्बन्धः विकारः परिणामः तौ विद्यते यस्य तत् जन्मविकारवत् तथाभूतं न भवतीत्यजन्मविकारवत्।

त्वन्मायामूढमनसो जन्म-मृत्यु-जरादिकान्।
अवाप्य तापान् प्रेतराजाननं नराः॥४२॥
ततो निजक्रियासूतिनरकेष्वतिदारुणम्।
प्राप्नुवन्ति नरा दुःखमस्वरूपविदस्तव॥४३॥
अहमत्यन्तविषयी मोहितस्तव मायया।
ममत्वगर्वगत्तन्तिर्भ्रमामि परमेश्वर॥४४॥
सोऽहं त्वां शरणमपारमीशमीड्यं
सम्प्राप्तः परमपदं यतो न किञ्चित्।
संसारश्रमपरितापतप्तचेता
निर्वाणे परिणतधाम्नि साभिलाषः॥४५॥

इति श्रीविष्णुपुराणे पञ्चमांशे त्रयोविंशः अध्यायः॥

---

यथा जलाशया मृगतृष्णा मूढैर्गृह्यते तथा दुःखान्येव सुखबुद्धया गृहीतानि॥३७-४२॥

ततो नरकेषु निजक्रियासूति स्वकर्मजं दुःखं प्राप्नुवन्ति तव स्वरूपजानन्तः॥४३॥

ममत्वञ्च तन्निमित्तो गर्वश्च स एव गर्त्तस्तन्मध्ये भ्रमामि॥४४॥

परमपदरूपत्वं यतस्त्वत्तो न किञ्चिद् व्यतिरिक्तमानि तं त्वां परिणयधाम्नि परिपक्वयोगिनामाश्रये निर्वाणे॥४५॥

**इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे त्रयोविंशोऽध्यायः॥**

# चतुर्विंशोऽध्यायः

## (तपसे मुचुकुन्दस्य प्रस्थानम्, बलरामस्य व्रजयात्रा च।)

पराशर उवाच

इत्थं स्तुतस्तदा तेन मुचुकुन्देन धीमता।
प्राहेशः सर्वभूतानामनादिर्भगवान् हरिः॥ १॥

श्रीभगवानुवाच

यथाभिवाञ्छितान् दिव्यान् गच्छ लोकान् नरेश्वर।
अव्याहतपरैश्वर्यो मत्प्रसादोपवृंहितः॥ २॥
भुक्त्वा भोगान् महादिव्यान् भविष्यसि महाकुले।
जातिस्मरो मत्प्रसादात् ततो मोक्षमवाप्स्यसि॥ ३॥

पराशर उवाच

इत्युक्तः प्रणिपत्येशं जगतामच्युतं नृपः।
गुहामुखाद् विनिष्क्रान्तो ददृशे सोऽल्पकान् नरान्॥ ४॥
ततः कलियुगं ज्ञात्वा प्राप्तं तप्तु नृपस्तपः।
नरनारायणस्थानं प्रययौ गन्धमादनम्॥ ५॥
कृष्णोऽपि घातयित्वारिमुपायेन हि तद्बलम्।
जग्राह मथुरामेत्य हस्त्यश्वस्यन्दनाज्ज्वलम्॥ ६॥
आनीय चोग्रसेनाय द्वारवत्यां न्यवेदयत्।
पराभिभवनिःशङ्कं बभूव च यदो कुलम् • ॥७॥

---

कृतानां काम्यानां कर्मणां फलमादौ भुङक्ष्व, जन्मान्तरे तु मोक्षं दास्यामीत्याह —'**यथाभिवाञ्छिता**' निति द्वाभ्याम्॥ २-३॥

मम सद् शुद्ध्यभावाभगवतैवमुक्तामिति मत्वासौ तपस्तप्तुं ययावित्याह—'**इत्युक्त**' इति द्वाभ्याम्॥ ४-५॥

उपायेन मुचुकुन्ददृशा॥ ६-७॥

बलदेवोऽपि मैत्रेय! प्रशान्ताखिलविग्रहः
ज्ञातिसन्दर्शनोत्कण्ठः प्रययौ नन्दगोकुलम्॥ ८॥
ततो गोपीश्च गोपांश्च यथापूर्वममित्रजित्।
तथैवाभ्यवदत् प्रेम्णा बहुमानपुरःसरम्॥ ९॥
कैश्चापि सम्परिष्वक्तः कांश्चिद् स परिषस्वजे।
हास्यञ्चक्रे समं कैश्चिद् गोपैर्गोपीजनैस्तथा॥ १०॥
प्रियाण्यनेकान्यवदन् गोपास्तत्र हलायुधम्।
गोप्यश्च प्रेमकुपिताः प्रोचुः सेर्ष्यमथापराः॥ ११॥
गोप्यः पप्रच्छुरपरा नागरीजनवल्लभः।
कच्चिदास्ते सुखं कृष्णश्चलत्प्रेमलवात्मकः॥ १२॥
अस्मच्चेष्टामुपहसन् कच्चिन्न पुरयोषिताम्।
सौभाग्यमानमधिकं करोति क्षणसौहृदः॥ १३॥
कच्चित् स्मरितं नः कृष्णो गीतानुगमनं कलम्।
अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति॥ १४॥

---

• द्वारवत्यां द्वारकायां न्यवेदयत् ददौ। न्यवेदयत् सर्वं वृत्तम् उग्रसेनं विज्ञापितवानिति वा। पराभिभवात्शत्रुकृताभिभवात् अपरकृतपराभवाद् वा निःशङ्कं निर्भयम्।

कृष्ण एकाक्येव गिरिगुहां गत्वा यवनं घातयित्वा द्वारकामागतः। तथा रामोऽप्येकाकी गोवर्धनं गत्वा कालिन्द्याकर्षणादिकं कृत्वा गत इति वक्ष्यन्नाह—**'बलदेवोऽपी'** त्यादिना यावदुत्तराध्यायसमाप्ति। ज्ञातीनां दर्शने सोत्कण्ठः औत्सुक्यवान्॥ ८-९॥

जयेष्ठैः सम्परिष्वक्तः, कनिष्ठान परिषस्वजे, समैर्हास्यं चक्रे॥ १०॥

हलायुधं प्रति काश्चिद् गोप्यः कृष्णवल्लभाः, प्रेमकुपिताः प्रोचुः, ता एवापराः सेर्ष्यं प्रोचुः॥ ११॥

तत्र कृष्णवल्लभानां प्रश्नमाह—**'गोप्य'** इत्यादि सप्तभिः। चलत्प्रेम आत्मा स्वभावो यस्य सः॥ १२॥

तदेवाहुः—**'अस्मदि'** ति। अस्माकं ग्राम्याणां चेष्टामुपहसन् सौभाग्यमानं सौभाग्यगर्वमधिकं कश्चिन्न करोति प्रायशः करोतीति सेर्ष्यः प्रश्नः॥ १३॥

विदग्धम्मन्या ऊचुः **'कच्चिदि'** ति। गीतेनानुगमनमनुवृत्तिं स्वगीतानुगुणमस्मद्गानं कलं मधुरं कच्चित् न वेत्यर्थः प्रणयकोपादाहुः । अप्यसौ मातरमिति॥ १४॥

अथवा किं तदालापैरपरा क्रियतां कथा।
तस्यास्माभिर्विना तेन विनास्माकं भविष्यति॥ १५॥
पिता माता तथा भ्राता भर्त्ता बन्धुजनश्च किम्।
न त्यक्तस्तत्कृतेऽस्माभिरकृतज्ञध्वजो हि सः॥ १६॥
तथापि क्वचिदालापमिहागमनसंश्रयम्।
करोति कृष्णो वक्तव्यं भवताकृष्ण नानृतम्॥ १७॥
दामोदरोऽसौ दुर्द्दर्शः प्रतिभाति नः॥ १८॥

पराशर उवाच

आमन्त्रितं स कृष्णेति पुनर्दामोदरेति च।
जहसुः सुस्वरं गोप्यो हरिणा हृतचेतसः॥ १९॥
सन्देशः साममधुरैः प्रेमवर्भैरगर्विचतैः।
रामेणाश्वसिता गोप्यः कृष्णस्यातिमनोहरैः॥ २०॥
गोपैश्च पूर्वचद् रामः परिहासमनोरमाः।
कथाश्चकार रेमे च सह तैर्व्रजभूमिषु॥ २१॥

इति श्रीविष्णुपुराणे पञ्चमांशे चतुर्विंशः अध्यायः॥

---

निर्वेदादूचुः 'अथवे' ति. यथास्माभिर्विना तस्य स्थितिस्तथास्माकमपि तेन विनादुःस्वेनापि तावत् स्थितिर्भविष्यत्येवेत्यर्थ१॥ १५॥

शोकतप्ता ऊचुः—'तथापी'। अकृष्णेतिच्छेदः धवलेत्यर्थः। अथवा कृष्णावेशाद्रामस्य कृष्णेति सम्बुद्धिः॥ १७॥

नैराश्यात् परस्परमूचुः'दामोदर' इति असाविति रामं लक्ष्यीकृत्य कृष्णाविष्टाचित्ततया दामोदर गोविन्द इति च तमेवाभिदधत्योऽस्मासु विगतप्रीतित्वात् दुर्दशः प्रतिभातीति राममेवालक्ष्योचुः। पूर्वाक्ताभिंप्रायेण वा॥ १८॥

पुनश्च कृष्णवार्त्ताः प्रष्टुं हे कृष्ण! हे दामोदरति च स राम एवाभिमन्त्रितस्ताभिः यतो हरिणा हृतचेतसः ततः सहसा स्वीयं कृष्णनाम्ना रामसम्बोधनलक्षणं मोहं ज्ञात्वा सुम्बरमुज्चैर्जहसुः॥ २०॥

साम्ना प्रियोक्त्या मधुरैः कृष्णस्य सन्देशैराश्वासिताः॥ २१॥

## पञ्चविंशोऽध्याय:

### (बलभद्रस्य व्रजविहार: यमुनाकर्षणञ्च)

पराशर उवाच

वने विचरतस्तस्य सह गोपैर्महात्मन:.
मानुषच्छद्मरूपस्य शेषस्य धरणीभृत:॥ १॥
निष्पादितोरुकार्यस्य कार्येणोर्वीविचारिण:।
उपभोगार्थमत्यर्थं वरुण: प्राह वारुणीम्॥ २॥
अभीष्टा सर्वदा यस्य मदिरे त्वं! महौजस:।
अनन्तस्योपभोगाय तस्य गच्छ मुदे शुभे॥ ३॥
इत्युक्ता वारुणी तेन सन्निधानमथाकरोत्।
वृन्दावनवनोत्पन्न-कदम्बतरुकोटरे॥ ४॥
वितरन् बलदेवोऽपि मदिरागन्धमुत्तमम्।
आघ्राय मदिरातर्षमवापाथ पुरातनम्॥ ५॥
तत: कदम्बात् सहसा मद्यधारां स लाङ्गली।
पतन्तीं वीक्ष्यं मैत्रेय! प्रययौ परमां मदुम्॥ ६॥
पपौ च गोपगोपीभि: समवेतो मुदान्वित:।
प्रगीयमानो ललितं गीतवाद्यविशारदै:॥ ७॥
समन्तोत्पन्नधर्माम्भ: कणिकामौक्तिकोज्ज्वल:।
आगच्छ यमुने! स्नातुमिच्छामीत्त्याह विह्वल:॥ ८॥
तस्य वाचं नदी सा च मत्तोक्तामवमत्य वै।
नाजगाम तत: क्रुद्धो हलं जग्राह लाङ्गली॥ ९॥

---

मदिरायास्तर्षं पानेच्छाम्॥ ५-७॥

अत्यन्तं धर्माम्भ: कणिका एव मौक्तानि तैरुज्ज्वल:। स्नातुमिच्छामि इत्युवाचेति शेष:॥ ८-९॥

सा कृष्टा तेन सहसा मार्गं सन्त्यज्य निम्नगा।
यत्रास्ते बलभद्रोऽसौ प्लावयामास तद्वनम्॥ ११॥
शरीरिणी तथोत्पत्य त्रासविह्वललोचना।
प्रसीदेत्यब्रवीद रामं मुञ्च मां मुषलायुध॥ १२॥
सोऽब्रवीदवजानासि मम शौर्यबले यदि।
सोऽहं त्वां हलपातेन विनेष्यामि सहस्रधा॥ १३॥

पराशर उवाच

इत्युक्तयातिसन्त्रासात् तया नद्या प्रसादित:।
भूभागे प्लाविते तस्मिन् मुमोच यमुनां बल:॥ १४॥
तत: स्नातस्य वै कान्तिराजगाम महात्मन:।
अवतंसोत्पलं चारु गृहीत्वैकञ्च कुण्डलम्॥ १५॥
वरुणप्रहितां चास्मै मालासम्लानपङ्कजाम्।
समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत्॥ १६॥
कृतावंस: स तदा चारुकुण्डलभूषित:।
नीलाम्बरधर: स्रग्वी शुशुभे कान्तिसंयुत:॥ १७॥
इत्थं विभूषितो रेमे तत्र रामस्तथा व्रजे।
मासद्वयेन यातश्च पुन: स द्वारकां पुरीम्॥ १८॥

---

कोपात्तदपराधस्मरणाथाङ नायासि नायासीति वीप्सा। यदि शक्तोऽसि तर्हि स्वेच्छया गम्यताम्॥ १०-१२॥

शौर्यबले शौर्यञ्च बलञ्चावजानासि॥ १३-१४॥

मुषलम् आयुधं यस्य तत्सम्बोधनं मुसलायुधेति। अनेन हलेन यथा मामाकृष्टवानसि, अत: परं मुषलेन स्वायुधेनापि मा मां जहीति यमुनाया: प्रार्थना व्यज्यते।

कान्ति: लक्ष्मी: अवतंसोत्पलम् एकस्य कर्णस्याभरणार्थमुत्पलमन्यस्य चैकं कुण्डलं गृहीत्वा, तथा हरिवंशे लक्ष्मीवाक्यम्, **''जातरूपमयञ्चैकं कुण्डलं रत्नभूषणम्। आदिपद्यञ्च पद्मादिदिव्यं श्रवणभूषणम् देवेभां प्रतिगृहणीष्व पौराणी भूषणक्रियामिति**॥ १५-१८॥

रेवतीं नाम तनयां रैवतस्य महीपतेः।

उपयेमे बलस्तस्यां जज्ञाते• निशठोल्मुकौ॥१९॥

इति श्रीविष्णुपुराणे पञ्चमांशे पञ्चविंशः अध्यायः॥

---

• तस्या रेवत्याम्। निशठोल्मुकौ तदाख्यौ पुत्रौ जज्ञाते समुत्पन्नौ।

अथ श्रीकृष्णस्य विवाहान् पुत्रांश्च वक्ष्यन्तादौ तावत् ज्येष्ठस्य श्रीरामस्य पूर्वोक्तं विवाहदिकमनुस्मारयति रेवतीमिति॥१९॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे पञ्चविंशोऽध्यायः॥

# षड्विंशोऽध्यायः

## (रुक्मिणीहरणम्)

पराशर उवाच

भीष्मकः कुण्डिने राजा विदर्भविषयेऽभवत्• ।
रुक्मी तस्याभवत् पुत्रो रुक्मिणी च वराङ्गना॥ १॥
रुक्मिणीं चक्रमे कृष्णः सा च तं चारुहासिनी।
न ददौ याचते चैनां रुक्मी द्वेषेण चक्रिणे॥ २॥
ददौ च शिशुपालाय जरासन्धप्रदेशितः।
भीष्मको रुक्मिणा सार्द्धं रुक्मिणीमुरुविक्रमः॥ ३॥
विवाहार्थं ततः सर्वे जरासन्धमुखा नृपाः।
भीष्मकस्य पुरं जग्मुः शिशुपालप्रियैषिणः॥ ४॥
कृष्णोऽपि बलभद्राद्यैर्यादवैर्बहुभिर्वृतः।
प्रययौ कुण्डिनन्न द्रष्टुं विवाहञ्चैव भूभृतः॥ ५॥
श्वोभाविनि विवाहे तु तां कन्यां हृतवान् हरिः।
विपक्षभारमासज्य रामाद्येष्वथ बन्धुषु॥ ६॥
ततश्च पौण्ड्रकः श्रीमान् दन्तवक्रो विदूरथः।
शिशुपाल-जरासन्ध-शाल्वाद्याश्च महीभूतः॥ ७॥
कुपितास्ते हरिं हन्तुं चक्रुरुद्योगमुत्तमम्।
निर्ज्जिताश्च समागम्य रामाद्यैर्यदुपुङ्गवैः॥ ८॥
कुण्डिनं न प्रवेक्ष्यामि अहत्वा युधि केशवम्।
कृत्वा प्रतिज्ञां रुक्मी च हन्तुं कृष्णमभिद्रुतः॥ ९॥

---

• विदभविषये विदर्भाख्यजनपदे कुण्डिने तदाख्ये नगरे, भीष्मकः तदाख्यः राजा अभवत्। रुक्मिणीं कन्यां, ददौ चेति वाचा दत्तवानित्यर्थः॥ १-५॥

पुराद् बहिरम्बिकापूजार्थं विनिर्गतां हृतवान् हरिः। विपक्षभारं विपक्षैः सह कार्य युद्धादिसंरम्भं रामादिष्वासज्य आरोप्य॥ ६-८॥

कुण्डिनं न प्रवेक्ष्यामीति प्रतिज्ञां कृत्वा रुक्मी अन्वधावत्॥ ९॥

हत्वां बलं सनागाश्व-पत्ति-स्यन्दनसङ्कुलम्।
निर्जितः पातितश्चोर्व्यां लीलयैव स चक्रिणा • ॥१०॥
हन्तुं कृतमतिः कृष्णो रुक्मिणं युद्धदुर्मदम्।
प्रणम्य याचितो ब्रह्मन् रुक्मिण्या भगवान् हरि॥११॥
एक एव मम भ्राता न हन्तव्यस्त्वयाधुना।
कोपं नियम्य देवेश! भ्रातृभिक्षा प्रदीयताम्॥१२॥
इत्युक्तेन परित्यक्तः कृष्णेनाक्लिष्टकर्मणा।
रुक्मी भोजकटं नाम पुरं कृत्वावसत् तदा॥१३॥
निर्जित्य रुक्मिणं सम्यगुपयेमे स रुक्मिणीम्।
राक्षसेन विवाहेन सम्प्राप्तां मधुसूदनः॥१४॥
तस्यां जज्ञेऽथ प्रद्युम्नो मदनांशः स वीर्य्यवान्।
जहार शम्बरो यं वै यो जघान च शम्बरम्॥१५॥

इति श्रीविष्णुपुराणे पञ्चमांशे षड्विंशः अध्यायः॥

---

• नागाः हस्तिनः अश्वः पत्तयः पदातयः स्यन्दनानि रथाः तैः सह वर्त्तमानाः विविधाः योद्धारः तैः सङ्कुलं परिव्याप्तं बलं रुक्मिणः सहायभूतं सैन्यं हत्वा, उर्व्यां भूमौ लीलया अनायासेनैव पातितः।

पातित एव केवलं, न तु हतः रुक्मिणीभ्रातृत्वात्॥१०-१३॥

राक्षसेन 'राक्षसो युद्धहरणा' दिति स्मृतिप्रसिद्धेन॥१४॥

मदनांशः कामस्यांशभूतः। अत एव पूर्ववैरमनुस्मरन् शम्ब रोऽयं जहार, यश्च तं हतवान्॥१५॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमांशे षड्विंशोऽध्यायः॥

## सप्तविंशोऽध्यायः

### (प्रद्युम्नहरणं शम्बरवधश्च)

शम्बरेण हतो वीरः प्रद्युम्नः स कथं मुने।
शम्बरश्च महावीर्य्यः प्रद्युम्नेन कथं हतः॥१॥

पराशर उवाच

षष्ठेऽह्नि जातमात्रन्तु प्रद्युम्नं सूतिकागृहात्।
ममैष हन्तेति मुने!हतवान् कालशम्बरः॥२॥
हत्वा चिक्षेप चैवैनं ग्राहोग्रे लवणार्णवे।
कल्लोलजनितावर्त्ते सुघोरे मकरालये॥३॥
पतितं तत्र चैवैको मत्स्यो जग्राह बालकम्।
न ममार च तस्यापि जठरेऽनलदीपितः॥४॥
मत्स्यबन्धैश्च मत्स्योऽसौ मत्स्यैरन्यैः सह द्विज।
घातितोऽसुरवर्य्याय शम्बराय निवेदितः॥५॥
तस्य मायावती नाम पत्नी सर्वगृहेश्वरो।
कारयामास सूदानामाधिपत्यमनिन्दिता॥६॥
दारिते मत्स्यजठरे सा ददर्शातिशोभनम्।
कुमारं मन्मथतरोर्दग्धस्य प्रथमाङ्कुरम्॥७॥

---

कालशम्बरः मृत्युतुल्यः शम्बरः॥२॥

ग्राहैरुग्रे भयङ्करे॥३॥

न ममार भगवद्वीर्य्यजत्वात् कामांशत्वाच्च। न हि कामो जलादिभिः संह्रियते॥४॥

मत्स्यबन्धैर्मत्स्यघातिभिः॥५॥

'तस्य मायावती नाम पत्नी'ति, मायारूपेण तस्य पत्नीत्येवं मोहोत्पादनात् तत्पत्नीति व्यवहारः। यद्वा नाम पत्नी पत्नीनाममात्रेणेत्युच्यते, वस्तुतस्त्वनिन्दिता पतिव्रता कामस्य भार्य्यत्यर्थः। एतच्चाग्रे स्फुटीभविष्यति॥६॥

दग्धस्य रुद्रकोपाग्निनेति॥७॥

कोऽयं कथमयं मत्स्यजठरं समुपागतः।

इत्येव कौतुकाविष्टां तां तन्वीं प्राह नारदः • ॥८॥

अयं समस्तजगतः सूतिसंहारकारिणा।

शम्बरेण हृतः कृष्ण-तनयं सूतिकागृहात्॥९॥

क्षिप्तः समुद्रे मत्स्येन निगीर्णस्ते वशं गतः।

नररत्नमिदं सुभ्रू विस्रब्धा परिपालय • ॥१०॥

पराशर उवाच

नारदेनैवमुक्ता सा पालयामास तं शिशुम्।

बाल्यादेवातिरागेण रूपातिशयमोहिता॥११॥

स यदा यौवनाभोग-भूषितोऽभून्महामते।

साभिलाषा तदा सापि बभूव गजगामिनी॥१२॥

मायावती ददौ तस्मै मायाः सर्वा महामुने।

प्रद्युम्नायातिरागान्धा तन्न्यस्तहृदयेक्षणा॥१३॥

प्रसज्जन्तीन्तु तामाह स कार्ष्णिः कमलेक्षणाम्।

मातृभावमपाहाय किमेवं वर्त्तसेऽन्यथा• ॥१४॥

सा चास्मै कथयामास न पुत्रस्त्वं ममेति वै।

तनयं त्वामयं विष्णोर्हृतवान् कालशम्बरः॥१५॥

---

• कौतुकाविष्टां कौतूहलवतीं तां मायावतीम्, नारद इति दैवकृत्यपरतया तत्र तदा समुपनत इति शेषः।

• निगीर्णः कवलीकृतः गलादधोनीत इत्यर्थः। ते तव वशं गतः अधीनो जातः असौ बाल इति शेषः। क्षिप्तेत्यादेः नररत्नविशेषणत्वे तु क्षिप्तेत्यादौ सर्वत्र क्लीवलिङ्गं योज्यम्। नररत्नमिति नरेषु सुतरामुत्तमं वस्तु 'जातौ जातौ यदुत्कृष्टं तद् रत्नमिति कथ्यते' इति शास्त्रात्।

विस्रब्धा प्रत्ययुक्ता सती परिपालयेत्यनेन त्वद्भर्त्ता कामोऽयमिति सूचितम्॥१०-११॥

यौवनाभोगेन तारुणयविस्तारेण भूषिते यदाभूत्॥१२-१३॥

• कृष्णस्य अपत्यं कार्ष्णिः, अपत्यार्थे कृष्णशब्दात्ष्णिप्रत्येन कार्ष्णिरिति सिद्धम्। अन्यथा भार्याधात्वेन भोगयस्त्रीजनोचितकामभावेनेत्यर्थः, किं कथं बर्त्तसे।

क्षिप्तः समुद्रे मत्तस्यस्य सम्प्राप्तो जठरान्मया।
सा तु रोदिति ते माता कान्ताद्याप्यतिवत्सला॥ १६॥

पराशर उवाच

इत्युक्तः शम्बरं युद्धे प्रद्युम्नः स समाह्वयत्।
क्रोधाकुलीकृतमना युयुधे च महाबलः • ॥ १७॥
हत्वा सैन्यमशेषन्तु तस्य दैत्यस्य माधविः।
सप्त माया व्यतिक्रम्य मायां प्रयुयुजेऽष्टमीम् • ॥ १८॥
तया जघान तं दैत्यं मायया कालशम्बरम्।
उत्पत्य च तया सार्द्धमाजगाम पितुर्गृहम्॥ १९॥
अन्तःपुरे निपतितं मायावत्या समन्वितम्।
तं दृष्ट्वा कृष्णसङ्कल्पा वभूवुः कृष्णयोषितः॥ २०॥
रुक्मिणी चावदत् प्रेम्णा साश्रुदृष्टिरनिन्दिता।
धन्यायाः खल्वयं पुत्रो वर्त्तते नवयौवने॥ २१॥
अस्मिन् वयसि पुत्रो मे प्रद्युम्नो यदि जीवति।
सभाग्या जननी वत्स! त्वया कापि विभूषिता॥ २२॥
अथारा यादृशः स्नेहो मम यादृग् वपुस्तव।
हरेरपत्यं सुव्यक्तं भवान् वत्स! भविष्यति॥ २३॥

पराशर उवाच

एतस्मिन्नन्तरे प्राप्तः सह कृष्णेन नारदः।
अन्तःपुरचरीं देवीं रुक्मिणीं प्राह हर्षयन्॥ २४॥
एष ते तनयः सुभ्रु! हत्वा शम्बरमागतः।
हतो येनाभवद् बालो भवत्याः सूतिकागृहात्॥ २५॥

---

• समाह्वयत् सुतरा स्पर्द्धया आमन्त्रयामास। स्पर्द्धायामाङ्पूर्वस्य ह्वयतेः 'स्पर्द्धायामाङ' इत्यात्मनेपदे प्राप्ते परस्मै पदप्रयोग आर्षः।

• माधवस्य कृष्णस्य अपत्यं माधविः, माधवशब्दापत्यार्थे ष्णिः।

प्रसज्जन्ती कामतः सज्जमानाम् आपाहाय हित्वा॥ १४-१९॥

इयं मायावती भार्या तनयस्यास्य ते सती।
शम्बरस्य न भार्येयं श्रूयतामत्र कारणम्॥ २६॥
मन्मथे तु गते नाशं तदुद्भवपरायणा।
शम्बरं मोहयामास मायारूपेण रूपिणी॥ २७॥
व्यवायाद्यु पभोगेषुरूपं मायामयं शुभम्।
दर्शयामास दैत्यस्य तस्येयं मदिरेक्षणा • ॥ २८॥
कामोऽवतीर्णः पुत्रस्ते तस्येयं दयिता रतिः।
विशङ्का नात्र कर्त्तव्या स्नुषेयं तव शोभना• ॥ २९॥
ततो हर्षसमाविष्टा रुक्मिणी केशवस्तथा।
नगरी च समस्ता सा साधु साध्वित्यभाषत॥ ३०॥
चिरं नष्टेन पुत्रेणं संयुक्ता प्रेक्ष्य रुक्मिणीम्।
अवाप विस्मयं सर्वो द्वारवत्यां जनस्तदा॥ ३१॥

इति श्रीविष्णुपुराणे पञ्चमांशे सप्तविंशः अध्यायः।

---

अतिसादृश्यात् कृष्णोऽयमिति सङ्कल्पो मनोवृत्तिर्यासां ताः॥ २०-२७॥

• व्यवायः रतिक्रियारूपो ग्राम्यधर्मः स आदिर्येषां तथभूतेषु उपभोगेषु अस्या इति शेषः, 'व्यवायो ग्राम्यधर्मश्च रतं निधुवनञ्च सः' इति कोषात्।

मदिरेक्षणा मदिरेव मादकमीक्षणं यस्याः सा॥ २८-२९॥

• इयं मायावती तस्य तव पुत्ररूपेणावतीर्णस्य कामस्य दयिता प्रिया रतिः। अत्र अस्यां विशङ्का परपुरुषभोगादिशंका न कर्त्त्व्या। स्नुषा पुत्रवधूः।

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे सप्तविंशोऽध्यायः॥

# अष्टाविंशोऽध्यायः

## (रुक्मिवधः)

पराशर उवाच

चारुदेष्णं सुदेष्णञ्च चारुदेवञ्च वीर्य्यवान्।
सुषेण चारुगुप्तञ्च भद्रचारुं तथापरम् • ॥१॥
चारुविदं सुचारुञ्च चारुञ्च बलिनां वरम्।
रुक्मिण्यजनयत् पुत्रान् कन्यां चारुमतीं तथा॥ २॥
अन्याश्च भार्याः कृष्णस्य बभूवुः सप्त शोभनाः।
कालिन्दी मित्रविन्दा च सत्या नाग्नजिती तथा॥ ३॥
देवी जाम्बवती चापि रोहिणी कामरूपिणी।
मद्रराजसुता चान्या सुशीला शीलमण्डना॥ ४॥
सात्रजिती सत्यभामा लक्ष्मणा चारुहासिनी।
षोडशासन् सहस्राणि स्त्रीणामन्यानि चक्रिणः॥ ५॥
प्रद्युम्नोऽपि महावीर्य्यो रुक्मिणस्तनयां शुभाम्।
स्वयंवरस्थां जग्राह सा च तं तनयं हरेः॥ ६॥
यस्यामस्याभवत् पुत्रो महाबलपराक्रमः।
अनिरुद्धो रणे क्रुद्धो वीर्य्योदधिररिन्दमः॥ ७॥
तस्यापि रुक्मिणः पौत्रीं वरयामास केशवः।
दौहित्राय ददौ रुक्मीं तां स्पर्द्धन्नपि शौरिणा॥ ८॥

---

• वीर्य्यवानिति द्वितीयान्तस्थाने प्रथमान्तप्रोयग आर्षः।

वीर्य्यवानिति वीर्य्यवन्तमित्यर्थः. प्रद्यम्नस्तु प्रागेवोक्तः॥ २-३॥

जाम्बवत्येव रोहिणीसंज्ञा। अतो न संख्याधिक्यम् अत एव तस्या ऋक्षजातित्वात् कामरूपिणीति विशेषणम्। केचित्तु रोहिणी नाम पट्टमहिषीतुल्या अन्यैवेति प्राहुः। तथा चोपरिष्टात्तयोः सन्तानभेदोक्तिरुपपत्स्यते॥ ४॥

हरेस्तनयञ्चकमे इति शेषः। शौरिणा स्पर्द्धमानोऽपि रुकमी ददौ॥ ८॥

तस्या विवाहे रामाद्या यादवा हरिणा सह।
रुक्मिणो नगरं जग्मुर्नाम्ना भोजकटं द्विज॥ ९॥
विवाहे तत्र निर्वृत्ते प्राद्यूम्नेः सुमहात्मनः।
कलिङ्गराजप्रमुखा रुक्मिणं वाक्यमब्रुवन् • ॥ १०॥
अनक्षत्रो हली द्यूते तथास्य व्यसनं महत्।
न जयामो बलं कस्मादं द्यूतेनैनं महाद्युते • ॥ ११॥

पराशर उवाच

तथेति तानाह नृपान् रुक्मी बलसमन्वितः।
सभायां सह रामेण चक्रे द्यूतञ्च वै तदा॥ १२॥
सहस्रमेकं निष्काणां रुक्मिणां विजातो बलः।
द्वितीयेऽपि पणे चान्यत् सहस्र रुक्मिणा जितम्॥ १३॥
ततो दश सहस्राणि निष्काणां पणमाददे।
बलभद्रोऽजयत्तानि रुक्मी द्यूतविदां वरः॥ १४॥
ततो जहास स्वनवत् कलिङ्गाघिपतिर्द्विजः।
दन्तान् विदर्शयन् मूढो रुक्मी चाह मदोद्धतः • ॥ १५॥

---

• निर्वृत्ते निष्पन्ने सति, प्रद्युम्नस्य अपत्यं प्राद्युम्निः अनिरुद्धः तस्य अपत्यार्थेष्णिः।

• न अक्षज्ञः अनक्षज्ञः, नैपुण्येनाक्षपतने अनभिज्ञःस हली बलरामः, एनं द्यूले वृथाव्यसनशालिनं बलं वलरामम्।

स्पर्द्धाफलं वक्तुमाह—'तस्या विवाहे' इत्यादिना यावत्समाप्ति॥ ९-११॥

तथाप्यस्य द्यूते महद्व्यसनमस्ति॥ १२-१३॥

बलभद्रो निष्काणां सुवर्णचतुष्टयानां दश सहस्राणि पणमाददे। तानि च रुक्मी अजयत्॥ १४॥

स्वनवत् सशब्दं यथा भवत्येवं जहास॥ १५॥

• दन्तातिं दर्शयन्निति पाठे दन्तानीत्यत्र क्लीवलिङ्गप्रयोग आर्षः।

अविज्ञोऽयं मया द्यूते बलदेवः पराजितः।

मुधैवाक्षावलेपान्धो यः स्वं मेनेऽक्षकोविदम्॥ १६॥

दृष्ट्वा कलिङ्गराजं तं प्रकाशदशनाननम्।

रुक्मिणश्चापि दुर्वाक्यं कोपं चक्रे हलायुधः॥ १७॥

ततः कोपपरीतात्मा निष्ककोटिं हलायुधः।

ग्लहं जग्राह रुक्मी च तदर्थेऽक्षानपातयत्॥ १८॥

अजयद् बलदेवस्तं प्राहोच्चैस्तं जितं मया।

मर्येति रुक्मी प्राहोच्चैरलीकोक्तेरलं बल॥ १९॥

त्वयोक्तोऽयं ग्लहः सत्यं न ममैषोऽनुमोदितः।

एवं त्वया चेद् विजितं मया न विजितं कथम्॥ २०॥

अथान्तरिक्षे वागुच्चैः प्राह गम्भीरनादिनी।

बलदेवस्य तद्कोप वर्द्धयन्ती महात्मनः॥ २१॥

जितं बलेन धर्म्मेण रुक्मिणी भाषितं मृषा।

अनुक्त्वापि वचः किञ्चित् कृतं भवति कर्मणा॥ २२॥

ततो बलः समुत्थाय कोप संरक्तलोचनः।

जघानाष्टापदेनैव रुक्मिणं सुमहाबलः● ॥ २३॥

---

द्यूते अविज्ञो ज्ञानशून्यः मुधा वृथैव अक्षाबलेपान्धः अक्षज्ञानगर्वमूढः स्वम् आत्मानम्॥

प्रकाशदशनाननं विवृतदन्तमाननं यस्य तम् दुष्टानि वाक्यानि यस्य तम्।।१७।.

ग्लहं पणम्॥ १८॥

तं ग्लहं तं रुक्मिणमुच्चैः सामर्षम् अलीकोक्तैः मिथ्याभाषणैः॥ १९॥

मया जिमित्यत्र रुक्मिणेत्यर्थः, हेतुमाह— **'त्वयोक्तोऽमिति'**॥ २०॥

यदुक्तं रुक्मिणा मयैषोऽनुमोदित इति तत्राह अशरीरवाक्॥ २१॥

अनुक्तवापीति अनुमोदकवचनमनुक्तवापि कर्मणैत्वाक्षपातनादिरूपेणानुमोदनं कृतं भवति। अन्यथा अनुमोदनोत्तराकालीनस्याक्षपातनादेः कर्मणोऽसम्भवात्॥ २२॥

कलिङ्गराजञ्चादय विस्फुरन्तं बलाद् बलः।
वभञ्ज दन्तान् कुपितो यैः प्रकाशं जहास सः • ॥२४॥
आकृष्य च महास्तम्भं जातरूपमयं बलः।
जघान येऽन्ये तत्पक्षा भूभृतः कुपितो बलात् • ॥२५॥
ततो हाहाकृतं सर्वं पलायनपरं द्विज।
तद्राजमण्डलं भीतं बभूव कुपिते बले॥२६॥
बलेन निहतं श्रुत्वा रुक्मिणं मधूसूदनः।
नोवाच किञ्चिन्मैत्रैय! रुक्मिणी-बलयोर्भयात्॥२७॥
ततोऽनिरुद्धमादाय कृतोद्वाहं द्विजोत्तम।
द्वारकामाजगामाथ यदुचक्रं सकेशवम्॥२८॥

इति श्रीविष्णुपुराणे पञ्चमांशे अष्टाविंशः अध्यायः॥

---

• कोपेन वृद्धि गतेन क्रोधेन संरक्ते अतिमात्रलोहिते लोचने यस्य तथा भूतः।

• बलात् बलजनिताहङ्कारात् विस्फुरन्तं बहुधा सञ्चलत्कलेवरम्। बलस्य तथा दर्पसहमानमिति भावः।

अष्टापदेन अक्षद्यूतफलकेन ॥२३-२४॥

• तस्य कलिङ्गराजस्य पक्षाः पक्षाश्रिताः भूभृतः राजानः।

जातरूपमयं स्वर्णमयं महान्तं स्तमभं सभामण्डलपस्थमाकृष्य तेनैव जघान॥२८॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे अष्टाविंशोऽध्यायः॥

# एकोनत्रिंशोऽध्यायः

## (नरकासुरवधः)

पराशर उवाच

द्वारवत्यां ततः शौरिंशक्रस्त्रिभुवनेश्वरः।
आजगामाथ मैत्रेय! मत्तैरावतपृष्ठगः• ॥१॥
प्रविश्य द्वारकां सोऽथ समेत्य हरिणा ततः।
कथयामास दैत्यस्य नरकस्य विचेष्टितम्॥२॥
त्वया नाथेन देवानां मनुष्यत्वेऽपि तिष्ठता।
प्रशमं सर्वदुःखानां नीतानि मधुसूदन॥३॥
तपस्वि-जननाशाय सोऽरिष्टो धेनुकस्तथा।
चाणूरो मुष्टिकः केशी ते सर्वे निहतास्त्वया॥४॥
कंसः कुवलयापीड पूतना बालघातिनी।
नाशं नीतास्त्वया सर्वे येऽन्ये जगदुपद्रवाः॥५॥
युष्मद्दोर्दण्ड-सद्बुद्धि परित्राते जगत्त्रये।
यज्वियज्ञासंसम्प्राप्त्या तृप्तिं यान्ति दिवौकसः॥६॥
सोऽहं साम्प्रतमायातो यन्निमित्तं जनार्द्दन।
तच्छ्रुत्वा तत्प्रतीकारप्रयत्नं कर्त्तुमर्हसि ॥७॥
भौमोऽयं नरको नाम्ना प्राग्ज्योतिषपुरेश्वरः।
करोति सर्वभूतानामुपधातमरिन्दम॥८॥
देवसिद्धासुरादीनां नृपाणाञ्च जनार्द्दन।
हत्वा हि सोऽसुरः कन्या रुरोध निजमन्दिरे॥९॥

---

• मत्तस्य मदोन्मत्तस्य ऐरावतस्य स्ववाहनभूतस्य कुञ्जरस्य पृष्ठं गच्छतीति तथाभूतः। ऐरावतस्य मत्तेति विशेषणं शीघ्रगतिलोभाय।

इदानी भौमवधप्रसङ्गेन हरेः सहस्रशो भार्यालाभं वक्तुं तावदिन्द्रागमनादिमाह—'**द्वारवत्यामि**'त्यादिना '**प्रविमृष्यता**' मित्यन्तेन॥१-५॥

छत्रं यत् सलिलस्त्रावि तज्जहार प्रचेतसः।
मन्दरस्य तथा श‍ृङ्गं हृतवान् मणिपर्वतम्॥ १०॥
अमृतस्त्राविणी दिव्य मन्मातुःकृष्ण!कुण्डले।
जहार सोऽसुरोऽदित्या वाञ्छत्यैरावतं जगम्॥ ११॥
दुर्णीतमेतद् गोविन्द! मया तस्य तवोदितम्।
यदत्र प्रतिपत्तव्यं तत् स्वयं प्रविमृष्यताम्॥ १२॥

पराशर उवाच

इति श्रुत्वा स्मितं कृत्वा भगवान् देवकीसुतः।
गृहीत्वा वासवं हस्ते समुत्तस्थौ वरासनात्॥ १३॥
चिन्तयामास च विभुर्मनसा पन्नगाशनम्।
सञ्चिन्तितमुपारुह्य गरुडं गगनेचरम्।
सत्यभामां समारोप्य यौ प्राग्ज्योतिषं पुरम्॥ १४॥
आरुह्यैरावतं नागं शक्रोऽपि त्रिदिवालयम्।
ततो जगाम् मैत्रेय! पश्यतां द्वारकौकसाम्॥ १५॥
प्राग्ज्योतिषपुरस्यासीत् समन्ताच्छतयोजनम्।
आचिता मौरवेः पाशैः क्षुरान्तैर्भूर्द्विजोत्तम॥ १६॥
तांश्चिच्छेद हरिः पाशान् क्षिप्त्वा चक्रं सुदर्शनम्।
ततो मुरुः समुत्तस्थौ तं जघान च केशवः● ॥ १७॥

---

यज्विनां यज्ञांशाः यज्ञभागास्तेषां सम्प्राप्त्या॥ ६-१०॥

कुण्डले जहार॥ ११॥

दुर्णीतमन्यायः॥ १२॥

सम्प्रमति कार्यार्थं मामुपर्सपति, कृतकार्यस्तु पारिजातार्थ मया विरोत्स्यत इति स्मितं कृत्वा॥ १३॥

सञ्चिन्तितं स्मृतिमात्रेणोपगतम्। सत्यभामां समारोप्येत्यत्र हरिवंशोक्तं कारणं द्रष्टव्यम्। तद्यथा नारदानीते परिजातकुसुमे रुक्मिण्यै दत्ते तदीर्ष्याप्रकुपितां सत्यभामां सान्त्वयता भगवतोक्तं तुभ्यं परिजाततरुमेवाहरिष्यामीति, तदर्थं तां निन्य इति॥ १४-१५॥

क्षुरान्तैः क्षुरधारावत्तीक्ष्णैः मौरवैः मुरुसंज्ञेन राक्षसेन निर्मितैराचिता व्याप्ता भूरासीत्॥

मुरोश्च तनयान् सप्त सहस्रांस्तांस्ततो हरिः।
चक्रधारग्निनिर्दग्धांश्चकार शलभानिव● ॥१८॥
हत्वा मुरुं हयग्रीवं तथा पञ्चजनं द्विज।
प्राग्ज्योतिषपुरं धीमास्त्वरावान् समुपागतः॥१९॥
नरकेणास्य तत्राभून्महासैन्येन संयुगः।
कृष्णस्य यत्र गोविन्दो जघ्ने दैत्यान् सहस्रशः॥२०॥
शस्त्रास्त्रवर्ष मुञ्चन्तं भौमं तं नरकं बली।
क्षिप्त्वा चक्रं द्विधां चक्रे चक्री दैतेयचक्रहा॥२१॥
हते तु नरके भूमिर्गृहीत्वा दितिकण्डले।
उपतस्थे जगन्नाथं वाक्यं चेदमथाब्रवीत्॥२२॥

पृथिव्युवाच

यदाहमुद्धता नाथ! त्वया शूकरमूर्त्तिना।
त्वत्स्पर्शसम्भवः पुत्रस्तदायं मय्यजायत॥२३॥
सोऽयं त्वयैव दत्तो मे त्वयैव विनिपातितः।
गृहाण कुण्डले चेमे पालयास्य च सन्ततिम्॥२४॥
भारावघ्राणार्थय ममैव भगवानिमम्।
अंशेन लोकमायातः प्रसादसुमुखः प्रभो॥२५॥
त्वं कर्ता त्वं विकर्त्ता च संहर्त्ता प्रभवोऽप्ययः।
जगतां त्वं जगद्रूपः स्तूयतेच्युत! किं तव॥२६॥

---

• मुरुः तन्नामा तत्पाशनिर्माता राक्षसः। तं मुरुनामानं राक्षसम्।

• चक्रस्य सुदर्शनस्य धारा एव अग्निः तेन निर्दग्धान् निःशेषं दग्धान् शलभान् पतङ्गविशेषानिव।

सप्त सहस्राणि परिमाणं येषां तान्॥१८-१९॥

महत् सैन्यं यस्य तेन॥२०॥

जगतां त्वं कर्त्ता उत्पादकः। विकर्त्ता विशेषेण वृष्ट्यादिना कर्त्ता पोषकः। प्रभवन्त्यस्मादिति प्रभव उपादानकारणम् अपियन्त्यस्मिन्नित्यप्ययो लयस्थानम्। अत एव जगद्रूपश्चत्वम् अतस्तव प्रभावादिकं किं मया स्तूयते कथं स्तोतु शक्यते॥२६॥

परमात्मा च भूतात्मा महात्मा चाव्ययो भवान्।
यदा तदा स्तुतिर्नाथ! किमर्थं ते प्रवर्त्तते॥ २८॥
प्रसीद् सर्वभूतात्मन्! नरकेण हि यत् कृतम्।
तत् क्षम्यतामदोषाय त्वत्सुतः त्वन्निपातितः॥ २९॥

पराशर उवाच

तथेति चोक्त्वा धरणीं भगवान् भूतभावनः।
रत्नानि नरकावासञ्जग्राह मुनिसत्तम॥ ३०॥
कन्यापुरे स कन्यानां षोडशातुलविक्रमः।
शताधिकानि ददृशे सहस्राणि महामते॥ ३१॥
चतुर्दन्तान् गजाञ्चोग्रयान् षट्सहस्रान् स दृष्टवान्।
काम्बोजानां तथाश्वानां नियुतान्ये विंशतिम्॥ ३२॥
कन्यास्ताश्च तथानागंस्तानश्वान् द्वारकां पुरीम्।
प्रेषयामास गोविन्दः सद्यो नरककिङ्करैः॥ ३३॥
ददृशे वारुणं छत्रं तथैव मणिपर्वतम्।
आरोपयामास हरिर्गरुड़े पन्नगाशने॥ ३४॥
आरुह्य त स्वयं कृष्णः सत्यभामा-सहायवान्।
आदित्याः कुण्डले दातुं जगाम त्रिदिवालयम्॥ ३५॥

इति श्रीविष्णुपुराणे पञ्चमांशे एकोनत्रिंशः अध्यायः॥

---

इतश्च स्तोतुं न शक्यमित्याह—'व्यापी'ति द्वाभ्याम्॥ १७-२८॥

इति श्रीविष्णुपुराणे पञ्चमांशे एकोनत्रिंशः अध्यायः॥

किञ्च अदोषाय दोषनिवृत्त्यथडं त्वत्तपुत्रोऽपि त्वयैव निपातितः वधदण्डेन निष्पापः कृतः, किमत्र मया प्रार्थ्यमिति भावः॥ २९-३१॥

षट्सहस्रान् षट् सहस्राणि संख्या येषां तान्। नियुतानि दश लक्षाणि॥ ३२-३५॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमांशे एकोनत्रिंशोऽध्यायः।

# त्रिंशोऽध्यायः

## (पारिजातहरणम्)

पराशर उवाच

गरुडो वारुणं छत्रं तथैव मणिपर्वतम्।
सभार्य्यञ्च हृषीकेश लीलयैव वहन् ययौ॥ १॥
ततः शङ्खमुपाध्मासीत् स्वर्गद्वारगतो हरिः।
उपतस्थुस्तथा देवाः सार्घ्यहस्ता जनार्द्दनम्॥ २॥
स देवैरर्च्चितः कृष्णो देवमातुर्निवेशनम्।
सिताभ्रशिखराकारं प्रविश्य ददृशेऽदितिम् • ॥ ३॥
स तां प्रणम्य शक्रेण सह ते कुण्डलोत्तमे।
ददौ नरकनाशञ्च शशंसास्यै जनार्द्दनः• ॥ ४॥
ततः प्रीता जगन्माता धातारं जगतां हरिम्।
तुष्टावादितिरव्यग्र कृत्वा त्वत्प्रवणं मनः॥ ५॥

अदितिरुवाच

नमस्ते पुण्डरीकाक्ष! भक्तानामभयङ्कर।
सनातनात्मन् सर्वात्मन! भूतात्मन्! भूतभावन॥ ६॥
प्रणेता मनसो बुद्धेरिन्द्रियाणां गुणात्मक।
त्रिगुणातीत! निर्द्वन्द्व! शुद्धसत्त्व! हृदि स्थित॥ ७॥

---

• देवमातुः अदितेः निवेशनं मन्दिरम्, अत्रापि ददृशे इत्यार्षम्।

• जगन्माता जगतां मातृस्वरूपा देवमातृत्वादिति भावः।

उपाध्मासीत् वादितवान्॥ २-४॥
तत्प्रवणं तदेकाग्रम्॥५॥

सनातनात्मन् नित्यमूर्त्ते, सर्वात्मन् सर्वान्तर्यामिन्, भूतात्मन्, भूतरूप, भूतभावन् भूतोत्पादक॥६॥

प्रेरणा कर्त्ता, गुणात्मकेत्यनेन तमसा भूतभावनत्वं, सत्त्वेन मनसः प्रणेतृत्वं रजसा च बुद्धेरिन्द्रियाणाञ्च प्रणेतृत्वं समर्थ्यते वस्तुतस्तु त्रिगुणातीत अतो निर्द्वन्द्व! एवं भूततया शुद्धसत्त्वानां ज्ञानिनां हृदि स्थित।।७।।

सितदीर्घादिनि:शेष-कल्पनापरिवर्ज्जित।
जन्मादिभिरसंस्पृष्ट! स्वप्नादिपरिवर्ज्जित॥ ८॥
सन्ध्या रात्रिरहोभूमिर्गमनं वायुरम्बु च।
हुताशनी मनो बुद्धिर्भूतादिस्त्वं तथाच्युत॥ ९॥
सृष्टि-स्थिति-विनाशानां कर्त्ता कर्त्तृ पतिर्भवान्!
ब्रह्म-विष्णु-शिवाख्याभिरात्ममूर्तिभिरीश्वर॥ १०॥
देवा यक्षास्तथा दैत्या राक्षसा: सिद्धपन्नगा:।
कुष्माण्डाश्च पिशाचाश्च गन्धर्वा मनुजास्तथा॥ ११॥
पशवो मृगमातङ्गास्तथैव च सरीसृपा:।
वृक्ष-गुल्म-लता बह्वय: समस्तास्तृणजातय:॥ १२॥
स्थूला मध्यास्तथा सूक्ष्मा: स्थूल-सूक्ष्मतणश्च ये।
देहभेदा भवान् सर्वे ये केचित् पुद्‌गलाश्रया:• ॥ १३॥
माया तवेयमज्ञातपरमार्थातिमोहिनी।
अनात्मन्यात्मविज्ञानं यया मूढ़ो निरुध्यते• ॥ १४॥
अस्वे ममेति भावोऽत्र, यत् पुंसामुपजायते।
अहं ममेति भावोऽत्र यत् प्रायेणाभिजायते।
संसारमातुर्मायायास्तवैतन्नाथ! चेष्टितम्॥ १५॥

---

सितदीर्घाद्याभिर्वर्णपरिमाणद्याभिर्निशेषाभि: कल्पनाभि: परिवर्जित, जन्मादिभिर्विकारैरसंस्पृष्ट, स्वप्नद्यवस्थाभि: परिवर्जित॥ ८-९॥

ब्रह्मादिसंज्ञाभि: स्वमूर्त्तिभि: स्वयमेव सृष्टयादीनां कर्त्ता। कर्त्तपृति: अवान्तरसृष्टयादिकर्तृणां दक्षादीनां पति:॥ १०-११॥

पूर्यन्ते गलन्ति चेति, पुद्‌गला: वृद्धयपक्षयभाजो येऽवयवास्तदाश्रया: देहभेदा:। यथाहु:—**'पूरणाद् गलनाद्देहे पुद्गला: परमाणव'** इति॥ १३॥

• स्थूलसूक्ष्मतराश्च स्थूलतरा: सूक्ष्मतराश्चेत्यर्थ:, द्वन्द्वात् परं श्रूयमाणस्य प्रत्येकमभिसम्बन्धात्।

अथ मायास्वरूपानुवादपूर्वकं तन्निवृतिं प्रार्थयते॥ **'मया'** तवे'त्यादिना**'नाशं नये'**त्यन्तेन। अज्ञातपरमार्थानां जीवानामति मोहिनी। मोहनमेवाह—**'अनात्मनी'**ति॥ १४॥

• अनात्मनि आत्मभिन्ने देहादौ आत्मविज्ञानम् तदात्म्यन्बन्धेन आत्मप्रकारकं ज्ञानम्।

य: स्वधर्म्मपरैर्नाथ! नरैराराधितो भवान्।
ते तरन्त्यखिललामेतां मायामात्मविमुक्तये॥ १६॥
ब्रह्माद्या: सकला देवा मनुष्या: पशस्तथा।
विष्णुमायासहावर्त्तमोहान्धतमसावृता:॥ १७॥
आराध्य त्वामभीप्सन्ते कामानात्ममवक्षयम्।
यदेये पुरुषा माया सैवेयं भगवंस्तव॥ १८॥
मया त्वं पुत्रकामिन्या वैरिपक्षक्षयाय च।
आराधितो न मोक्षाय मायाविलसितं हि तत्॥ १९॥
कौपीनाच्छादनप्राया वाच्छा कल्पद्रुमादपि।
जायते यदपुण्याना सोऽपराध: स्वदोषज:॥ २०॥
तत् प्रसीदखिलजगन्मायामोहकराव्यय।
अज्ञानं ज्ञानसद्भावभूतं भूतेश! नाशय॥ २१॥
नमस्ते चक्रहस्ताय शार्ङ्गहस्ताय ते नम:।
गदाहस्ताय ते विष्णो! शङ्खहस्ताय ते नम:॥ २२॥
एतत् पश्यामि ते रूपं स्थूलचिह्नोपलक्षितम्।
न जानामि परं यत्त प्रसीद परमेश्वर॥ २३॥

पराशर उवाच

अदित्यैवं स्तुतो विष्णु: प्रहस्याह सुरारणिम्।
माता देवि! त्वमस्माकं प्रसीद वरदा भव॥ २४॥
एवमस्तु यथेच्छा ते त्वमशेषै: सुरासुरै:।
अजेय: पुरुषव्याघ्र:! मर्त्त्यलोके भविष्यसि॥ २५॥

---

विष्णुमाया ये महान्त आवर्त्ता: स्वदेहेऽहं ममाभिमाना: तेषु मोहान्धतमसं कर्तृत्वभोक्तुत्वाभिनिवेशरूपं तेनावृता:॥ १७-१९॥

स्वदोषज: स्वकर्मज:॥ २०॥

ज्ञानसद्भावभूतं विद्वानहमित्यभिमानात्मकम्॥ २१॥

प्रहस्य हासेन मोहयित्वा सुरारणिं सुराणां जन्मभूमिं मातरम्॥ २४॥

पराशर उवाच

ततोऽनन्तरमेवास्य शक्राणीसहितादितिम्।
सत्यभामा प्रणम्याह प्रसीदेति पुनः पुनः॥ २६॥

अदितिरुवाच

मत्प्रसादान्न ते सुभ्रु! जरा वैरूप्यमेव च।
भविष्यत्यनवद्याङ्गि! सुस्थिरं नवयौवनम्॥ २७॥

पराशर उवाच

अदित्या तु कृतानुज्ञो देवराजो जनार्दनम्।
यथावत् पूजयामास बहुमानपुरःसरम्॥ २८॥
शची त सत्यभामायै पारिजातस्य पुष्पकम्।
न ददौ मानुषीं मत्वा स्वयं पुष्पैरलङ्कृता॥ २९॥
ततो ददर्श कृष्णोऽपि सत्यभामासहायवान्।
देवोद्यानानि हृद्यानि नन्दनादीनि सत्तम॥ ३०॥
ददर्श च सुगन्धाढ्यं मञ्जरीपुञ्जधारिणम्।
नित्याहुलादकरं ताम्रबालप्ल्वशोभितम्॥ ३१॥
मथ्यमानेऽमृते जातं जातरूपोपमत्वचम्।
पारिजातं जगन्नाथं केशवः केशिसूदनः॥ ३२॥
तं दृष्ट्वा प्राह गोविन्दं सत्यभामा द्विजोत्तम।
कस्मानं द्वारकामेष नीयते देवपादपः॥ ३३॥
यदि ते तद्वचः सत्यं सत्यात्यर्थं प्रियेति मे।
मद्गेहनिष्कुचार्थाय तदयं नीयतां तरुः• ॥ ३४॥
न मे जाम्बवती तादृगभीष्टा न च रुक्मिणी।
सत्ये यथा त्वमित्युक्तं त्वया कृष्णासकृत् प्रियम्॥ ३५॥

---

मोहिता सत्युवाच—'एवमस्त्वि' त्यादि॥ २५-२६॥

• सत्या सत्यभामा मे मम श्रीकृष्णस्य अत्यर्थ प्रिया इति ते तद्वचः पूर्वोक्तं वचः यदि सत्यम्। मम गेहस्य यः निष्कुटः आरामः उपवनमित्यर्थः तदर्थाय, **'गृहारामास्तु निष्कुटा '** इति कोषात्।

सत्यं तद् यद गोविन्द! नोपचारकृतं तव।
तदस्तु पारिजातस्य मम गेहविभूषणम्॥ ३६॥
बिभ्रती पारिजातस्य केशपक्षेण मञ्जरीम्।
सपत्नीनामहं मध्ये शोभेयमिति कामये॥ ३७॥

पराशर उवाच

इत्युक्तः सम्प्रहस्यैनं पारिजातं गरुत्मति।
आरोपयामास हरिस्तमूचुर्वनरक्षिणः॥ ३८॥
भो शची देवराजस्य महिषी तत् परिग्रहम्।
पारिजातं न गोविन्द! हर्तु मर्हसि पादपम्॥ ३९॥
शचीविभूषणार्थय देवैरमृतमन्थने।
उत्पादितोऽयं न क्षेमी गृहीत्वेनं गमिष्यसि• ॥ ४०॥
देवराजो मुखप्रेक्षी यस्यास्तस्याः परिग्रहम्।
मौढ्यात् प्रार्थयसे क्षेमी गृहीत्वैनं हि को व्रजेत्॥ ४१॥
अवश्यमस्य देवेन्द्रो निष्कृतिं कृष्ण! यास्यति।
वज्रोद्यतकरं शक्रमनुयास्यन्ति चामराः॥ ४२॥
तदलं सकलैर्देवैर्विग्रहेण तवाच्युत।
विपाककटु यत् कर्म्म तन्न शंसन्ति पण्डिताः॥ ४३॥
इत्युक्ते तैरुवाचैतान् सत्यभामातिकोपिनी।
का शची पारिजातस्य को वा शक्रः सुराधिपः॥ ४४॥

---

निष्कुटार्थाय गृहोद्यानार्थम्।।३३-३५।।

केशपक्षेण बहुकेशभरेण।।३६।।

औत्सुक्यात् स्त्रियऽनर्थं न जानन्तीति प्रहस्य॥ ३६-४०॥

• शच्याः इन्द्रमहिष्याः पुलोमजायाः विभूषणं विशेषण अलङ्करणम् तदर्थाय तद्रूपप्रयोजनाय। क्षेमी कुशली न गमिष्यासि, तथाहि यदि आत्मनः क्षेममभीष्टं तदा एनं पारिजातं परिहायैव गच्छेति भावः।

निष्कृतिं यास्यति प्रतीकारं करिष्यति॥ ४१॥

सामान्यः सर्व्वलोकानां यद्येषोऽमृतमन्थने।
समुत्पन्नः सुराः कस्मादेको गृहणाति वासवः॥ ४५॥
यथा सुरा यथैवेन्दुर्यथा श्रीर्वनरक्षिणः।
सामान्याः सर्वलोकस्य पारिजातस्तथा द्रुमः॥ ४६॥
भर्तृबाहुमहागर्वाद् रुणद्ध्येनं यथा शची।
तत् कथ्यतामलं क्षान्त्या सत्या हारयति द्रुमम्॥ ४७॥
कथ्यताञ्च द्रुतं गत्वा पौलोम्या वचनं मम।
सत्यभामा वदत्येतदतिगर्वोद्धताक्षरम्॥ ४८॥
यदि त्वं दयिता भर्त्तुर्यदि वश्यः पतिस्तव।
मद्भर्त्तुर्हरतो वृक्षंतत् कारय निवारणम् • ॥४९॥
जानामि ते पतिं शक्रं जानामि त्रिदिवेश्वरम्।
पारिजातं तथाप्येन मानुषी हारयामि ते॥ ५०॥
इत्युक्ता रक्षिणो गत्वा शच्या ऊचुर्यथोदितम्।
शची चोत्साहयामास त्रिदशाधिपतिं पतिम्॥ ५१॥
ततः समस्तदेवानां सैन्यैः परिवृतो हरिम्।
प्रययौ पारिजातार्थमिन्द्रो योधयितुं द्विज॥ ५२॥
ततः परिध-निस्त्रिंश-गदा-शूल-वरायुधाः।
बभूवुस्त्रिदशाः सन्नाः शक्रे वज्रकरे स्थिते॥ ५३॥
ततो निरीक्ष्य गोविन्दो नागराजोपरि स्थितम्।
शक्रं देवपरीवारं युद्धाय समुपस्थितम्॥ ५४॥
चकार शङ्खनिर्घोषं दिशः शब्देन पूरयन्।
मुमोच शरसङ्घातान् सहस्रायुतशः शितान्॥ ५५॥

---

विपाककटु परिणामेऽनर्थकम्।।४४-४७।।

• वृक्षं पारिजाततरुं हरतः बलात्कारेण गृहणतः मम सत्यभामायाः। भर्त्तुः श्रीकृष्णस्य निवारणं तेन स्वभर्त्रा प्रतिषेधनं कारय, तत्र बाधामुत्पादयेत्यर्थः।

स्वभर्त्रा निवारणं कारय।।४८-५१।।

सन्नाः सन्नद्धाः॥५२-५३॥

ततो दिशो नभश्चैव दृष्टा शरशतैश्चितम्।
मुमुचुस्त्रिदशाः सर्वे अस्त्रशस्त्राण्यनेकशः॥५६॥
एकैकमस्त्रं शस्त्रञ्च देवैर्मुक्तं सहस्रधा।
चिच्छेद लीलयैवेशो जगतां मधुसूदनः॥५७॥
पाशं सलिलराजस्य समाकृष्योरगाशनः।
चकारं खण्डशश्चञ्च्वा बालपन्नगदेहवत्॥५८॥
यमेन प्रहतं दण्डं गदाविक्षेपखण्डितम्।
पृथिव्याः पातयामास भगवान् देवकीसुतः॥५९॥
शिविकाञ्च धनेशस्य चक्रेण तिलशो विभुः।
चकार शौरिरर्कञ्च दृष्टिदृष्टहतौजसम्॥६०॥
नीतोऽग्निः शतशां बाणैर्द्राविता वसवो दिशः।
चक्रविच्छिन्नशूलाग्रा रुद्रा भुवि निपातिताः॥६१॥
साध्या विश्वेऽथ मरुतो गन्धर्वाश्चैव सायकैः।
शार्ङ्गिणा प्रेरितैरस्ता व्योम्नि शाल्मलितूलवत्॥६२॥
गरुत्मानपि वक्त्रेण पक्षाभ्यां नखराङ्कुरैः।
भक्षयंस्ताडयन् देवान् दारयंश्च चचार वै॥६३॥
ततः शरसहस्रेण देवेन्द्र-मधुसूदनौ।
परस्परं ववर्षाति धाराभिरिव तोयदौ॥६४॥
ऐरावतेन गरुडो युयुधे तत्र संयुगे।
देवैः समस्तैर्युयुधे शक्रेण च जनार्द्दनः॥६५॥
छिन्नेष्वशेषबाणेषु शस्त्रेष्वस्त्रेषु च त्वरन्।
जग्राह वासवो वज्रं कृष्णाश्चक्रं सुदर्शनम् • ॥६६॥

---

अस्त्रं मन्त्राभिमन्त्रितं, शस्त्रं तदितरत्॥५५-५६॥

चञ्च्वा तुण्डेन॥५८-६०॥

अस्ताः निरस्ताः॥६१॥

वक्त्रेन भक्षयन्। पक्षाभ्यां ताडयन् नखरांकुरैर्दारयन्॥६२॥

ततो हाहाकृतं सर्वं त्रैलोक्यं द्विजसत्तम।
वज्र-चक्रधरौ दृष्ट्वा देवराज-जनार्द्दनौ॥६७॥
क्षिप्तं वज्रमथेन्द्रेण जग्राह भगवान् हरिः।
न मुमोच तदा चक्रं तिष्ठ तिष्ठेति चाब्रवीत्॥६८॥
प्रनष्टवज्रं देवेन्द्र गरुडक्षतवाहनम्।
सत्यभामाब्रवीद् वीरं पलायनपरायणम्॥६९॥
त्रैलोक्येश? न ते युक्तं शचीभर्त्तु पलायनम्।
पारिजातास्रगाभोगा त्वामुपस्थास्यते शची॥७०॥
कीदृशं देवराज्यन्ते पारिजातस्रगुज्ज्वलाम्।
अपश्यतो यथापूर्वं प्रणयादागतां शचीम्॥७१॥
अलं शक्र! प्रयातेन न ब्रीडां गन्तुमर्हसि।
नीयतां पारिजातोऽयं देवाः सन्तु गतव्यथाः॥७२॥
पतिगर्वावलेपेन बहुमानपुरःसरम्।
न ददर्श गृहे यातामुपचारेण मां शची॥७३॥
स्त्रीत्वादगुरुचित्ताहं खभर्त्तृश्लाघनापरा।
ततः कृतवती शक्र भवता सह विग्रहम्॥७४॥
तदलं पारिजातेन परस्वेन हृतेन नः।
रूपेण गर्विता सा तु भर्त्रा स्त्री का न गर्विता॥७५॥
इत्युक्तो विनिवृत्तोऽसौ देवराजस्तथा द्विज।
प्राह चैनामलं चण्डि! सख्युः खेदातिविस्तरैः॥७६॥

---

• त्वरन्नियत्रात्मनेपदिनस्तरेः शतृप्रयोग आर्षः।

सोल्लुण्ठमाह—'त्रैलोक्येश्वेरे' ति त्रिभिः। पारिजातस्रगाभोगा तन्मालाभिव्याप्ता सती॥७०॥

किमर्थं तर्हि विग्रहः कृतः? तत्राह— 'पती'ति त्रिभिः पत्या यो गर्वस्तन्निमित्तेनावलेपेन मदेन॥७३॥

पतिगर्वावलेपं शच्या दोषमुद्भाव्य स्वभर्त्तृश्लाघनपराहमिति वदन्त्यास्तस्या अपि तया साम्यमापन्नं परिहरति—'रूपेण गर्विते' ति॥७४॥

न चापि सर्ग-संहार-स्थितिकर्त्ताखिलस्य यः।
जितस्य तेन मे व्रीडा जायते विश्वरूपिणा॥७७॥

यस्मिन् जगत् सकलमेददनादिमध्ये
　यस्माद् यतश्च न भविष्यति सर्वभूतात्।
तेनोद्भव-प्रलय-पालनकारणेन
　व्रीडा कथं भवति देवि! निराकृतस्य॥७८॥

सकलभुवनसूतेर्मुर्त्तिरस्यानुसूक्ष्मां
　विदितसकलवेदैर्ज्ञायते यस्य नान्यैः।
तमजमकृतमीशं शाश्वतं स्वेच्छयैनं
　जगदुपकृतिमर्त्त्यं को विजेतु समर्थः॥७९॥

इति श्रीविष्णुपुराणे पञ्चमांशे त्रिंशः अध्यायः॥

---

चण्डि! धृष्टे? सख्युर्मित्रभूतस्य मम खेदहेतुभिरुक्तिविस्तरैरलम्॥७६॥

न व्रीडां गन्तुमर्हसीति यदुक्तं तत्राहं—'न चापी'ति त्रिभः॥७७॥

यस्मादुपादानकारणभूतात् यतश्च निमित्तकारणभूतात् जगदभूद् भविष्यति चेत्यर्थः॥७८॥

अकृतमीशं स्वतः सिद्धमीश्वरं, न तु कर्मनिमित्तमैश्वर्य्य तस्येत्यर्थः। जगदुपकृतये स्वच्छया गृहीतमर्त्त्यावतारम्॥७९॥

**इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा**
**श्रीविष्णुपुराणटीकायां पञ्चमांशे त्रिंशोऽध्यायः।**

# एकत्रिंशोऽध्यायः

## (श्रीभगवतो द्वारकापुरीप्रत्यावर्त्तनम्। शताधिकषोडशसहस्त्ररमणीभिः सह विवाहश्च।)

पराशर उवाच

संस्तुतो भगवानित्थं देवराजेन केशवः।
प्रहस्य भावगम्भीरमुवाचेदं द्विजोत्तम॥ १॥

श्रीकृष्ण उवाच

देवराजो भवानिन्द्रो वयं मर्त्त्या जगत्पते।
क्षन्तव्यं भवता चेदमपराधकृतं मम॥ २॥
पारिजाततरुश्चायं नीयतामुचितास्पदम्।
गृहीतोऽयं मया शक्र! सत्यावचनकारणात् • ॥ ३॥
वज्रञ्चेदं गृहाणं त्वं यत्त्वया प्रहितं मयि।
तवैवैतत् प्रहरणं शक्र! वैरिविदारणम् • ॥ ४॥

शक्र उवाच

विमोहयसि मामीश! मर्त्त्योऽहमिति किं वदन्।
जानीमस्त्वां भगवती न तु सूक्ष्मविदो वयम्॥ ५॥
योऽसि सोऽसि जगत्त्राण! प्रवृतौ नाथ! संस्थितः।
जगतः शल्यनिष्कर्ष करोष्यसुरसूदन॥ ६॥

---

• सत्यायाः सत्यभामायाः वचनमेव कारणं तस्मात्।

• मयि प्रहितं प्रेरितं निक्षिप्तमिति यावत्, मम हननार्थमिति शेषः। वैरिणां शत्रुणां विदारणं विदारणसाधनम्।

उचितास्पदं यथोचितं स्थानम्॥ ३-४॥

तत् तव यथादृष्टमात्रं रूपं जानीमः, न तु तव सूक्ष्मरूपविदः॥ ५॥

शल्यनिष्कर्षं कण्टकोद्धारम्॥ ६॥

नीयतां परिजातोऽयं कृष्ण! द्वारवतीं पुरीम्।
मर्त्यलोके त्वया त्यक्त नायं संस्थास्यते भुवि॥७॥

पराशर उवाच

तथेत्युक्त्वा त देवेन्द्रमाजगाम भुवं हरिः।
प्रसक्तैः सिद्ध-गन्धर्वैः स्तूयमानस्तथर्षिभिः॥८॥
ततः शङ्खमुपाध्माय द्वारकोपरि संस्थितः।
हर्षमुत्पादयामास द्वारकावासिनां द्विज:॥९॥
अवतीर्य्याथ गरुडात् सत्यभामासहायवान्।
निष्कुटे स्थापयामास पारिजातं महातरुम्॥१०॥
यमभ्येत्य जनः सर्वो जातिं स्मरति पौर्विकीम्।
वास्यते यस्य पुष्पोत्थगन्धेनोर्वी त्रियोजनम्॥११॥
ततस्ते सादराः सर्वे देहबन्धानमानुषान्।
ददृशुः पादपे तस्मिन् कुर्वन्तो मुखदर्शनम्॥१२॥
किङ्करैः समुपानीतं हस्त्यश्वादि ततो धनम्।
स्त्रियश्च कृष्णो जग्राह नरकस्य परिग्रहान्॥१३॥
ततः काले शुभे प्रासे उपयेमे जनार्द्दनः।
ताः कन्या नरकेणासन् सर्वतो याः समाहताः॥१४॥
एकस्मिन्नेव गोविन्दः काले तासां महामते।
जग्राह विधिवत् पाणीन् पृथग्गेहेषु धर्म्मतः॥१५॥
षोडशस्त्रीसहस्त्राणि शतमेकं तथाधिकम्।
तावन्ति चक्रे रूपाणि भगवान् मधुसूदन॥१६॥

---

न च ममाप्यात्यन्तिकः परिजातवियोग इत्याह '**मर्त्त लोक**' इति॥७॥

प्रसक्तैरनुषक्तैरनुगच्छद्भिः स्तूयमानः॥८-१०॥

पौर्विकीं पूर्वजन्मसम्बन्धिनीम्॥११॥

असानुषान् देहबन्धान् स्वदेहान् देवाकारान् ददृशुः तस्य जातिस्मारकत्वात्॥१२॥

एकैकश्येन ताः कन्या मेनिरे मधुसूदन्।
ममैव पाणिग्रहणं भगवान् कृतवानिति॥ १७॥
निशासु च जगत्स्रष्टा तासां गुहेषु केशवः।
उवास विप्र! सर्वासां विश्वरूपधरो हरिः॥ १८॥

इति श्रीविष्णुपुराणे पञ्चमांशे एकत्रिंशः अध्यायः॥ ३१॥

परिग्रहान् विवाहार्थमवरुद्धाः कन्याः॥ १३-१८॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे एकत्रिंशोऽध्यायः।

# द्वात्रिंशोऽध्यायः

## (ऊषाचरितम्)

पराशर उवाच

प्रद्युम्नाद्या हरेः पुत्रा रुक्मिण्याः कथितास्तव।
भानुं भैमरिकञ्चैव सत्यभामा व्यजायत॥ १॥
दीप्तिमान् ताम्रपक्षाद्या रोहिण्यां तनया हरेः।
बभूवूर्जाम्बवत्याञ्च शाम्बाद्या बलशालिनः॥ २॥
तनया भद्रविन्दाद्या नाग्नजित्यां महाबलाः।
सङ्ग्रामजित्प्रधानास्तु शैव्यायान्त्वभवन् सुताः॥ ३॥
वृकाद्याश्च सुता माद्रयां गात्रवत्प्रमुखान् सुतान्।
अवाप लक्ष्मणा पुत्राः कालिन्द्याञ्च श्रुतादयः॥ ४॥
अन्यासाञ्चैव भार्य्याणां समुत्पन्नानि चक्रिणः।
अष्टायुतानि पुत्राणां सहस्राणां शतं तथा॥ ५॥
प्रद्युम्नः प्रथमस्तेषां सर्वेषा रुक्मिणीसुतः।
प्रद्युम्नादनिरुद्धोऽभूद् वज्रस्तस्मादजायत॥ ६॥
अनिरुद्धो रणे रुद्धो बलेः पौत्रीं महाबलः।
वाणस्य तनयामूषामुपयेमे द्विजोत्तम॥ ७॥
यत्र युद्धमभूद् घोरं हरि-शङ्करयोमडहत्।
छिन्नं सहस्रं बाहूना यत्र वाणस्य चक्रिणा॥ ८॥

मैत्रेय उवाच

कथं युद्धमभूद् ब्रह्मन्नूषार्थे हर-कृष्णयोः।
कथं क्षयञ्च वाणस्य. बाहूनां कृतवान् हरिः॥ ९॥

---

पूर्वोक्तपुत्रानुवादपूर्वक हरेः सर्वान् पुत्रानाह—'**प्रद्युम्नाद्या**' इत्यादिपञ्चभिः॥ १-२॥

शैव्यायां मित्रविन्दायाम्॥ ३-५॥

अनिरुद्धस्य विवाहान्तरं वक्तुं प्रद्युम्नाद्धनुवादः—'**प्रद्युम्न** इति॥ ६-७॥

एतत् सर्वं महाभाग! समाख्यातुं त्वमर्हसि।
महत् कौतूहलं जातं कथां श्रोतुमिमां हरेः॥ १०॥

पराशर उवाच

ऊषा वाणसुता विप्र! पार्वती सह शम्भुना।
क्रीडन्तीमुपलक्ष्योच्चैः स्पृहाञ्चक्रे तदाश्रयाम्॥ ११॥
ततः सकलचित्तज्ञा गौरी तामाह भामिनीम्।
अलमत्यर्थतापेन भर्त्रा त्वमपि रंस्यसे।१२॥
इत्युक्ते सा तदा चक्रे कदेति मतिमात्मनः।
को वा भर्त्ता ममेत्येतां पुनरप्याह पार्व्वती॥ १३॥

पार्वत्युवाच

वैशाखशुक्लद्वादश्यां स्वपने योऽभिभवं तव।
करिष्यति स ते भर्त्ता राजपुत्रि! भविष्यति • ॥ १४॥

पराशर उवाच

तस्यां तिथौ पुमान् स्वपने यथा देव्या उदीरितम्।
तथैवाभिभवं चक्रे रागञ्चक्रे तथैव सा॥ १५॥
ततः प्रबुद्धा पुरुषमपश्यन्ती तमुत्सुका।
क्व गतोऽसीति निर्लज्ञा मैत्रेयोक्तवती सखीम्॥ १६॥
वाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा तु तत्सुता।
तस्याः सख्यभवद् सा च प्राह कोऽयं त्वयोच्यते॥ १७॥

---

यत्र यस्मिन् विवाहे युद्धमभूत्। यत्र युद्धे वाणस्य बाहूनां सहस्रं चक्रिणा छिन्नम्॥८-१०॥

तदाश्रयां स्वभर्त्रा सहं क्रीडाविषया स्पृहां चक्रे॥ ११॥

इत्युक्ते तया गौर्य्या सा ऊषा भर्त्रा रतिरात्मनः कदा स्यादिति मतिं चक्रे॥ १२॥

• उच्चैः अत्यर्थम् ; तदाश्रयां स्पृहां कामनां चक्रे, तथैव ब्रीडा कामयाञ्चक्रे इत्यर्थः।

अभिभवम् आक्रम्य सम्भोगम्॥ १४-१५॥

औत्सुक्यात् कान्तभ्रान्त्या क्व गतोऽसीति सखीमेवोक्तवती॥ १६-१७॥

यदा लज्जाकुला नास्यै कथयामास सा सती।
तदा विश्वासमानीय सर्वमेवाभ्यवादयत्॥ १८॥
विदितार्थान्तु तामाह पुनरूषा यथोदितम्।
देव्या तथैव तत्प्राप्तौ योऽभ्युपायः कुरुष्व तम्॥ १९॥

पराशर उवाच

ततः पटे सुरान् दैत्यान् गन्धर्व्वांश्च प्रधानतः।
मनुष्यांश्चाभिलिख्यास्यै चित्रलेखा व्यदर्शयत् • ॥ २०॥
अपास्य सा तु गन्धर्वस्तथोरगसुरासुरान्।
मनुष्येषु ददौ दृष्टिं तेष्वप्यन्धकवृष्णिषु॥ २१॥
कृष्ण-रामौ विलोक्यासो सुभ्रूर्लज्जाजडेव सा।
प्रद्युम्नदर्शने-व्रीडा-दृष्टिं निन्येऽन्यतो द्विज॥ २२॥
दृष्टमात्रे ततः कान्ते प्रद्युम्नतनये द्विज।
दृष्ट्यात्यर्थविकाशिन्या लज्जा क्वापि निराकृता॥ २३॥
सोऽयं सोऽयमितीत्युक्ते तया सा योगगामिनी।
ययौ द्वारवतीमूषां समाश्वास्य ततः सखीम्॥ २४॥

इति श्रीविष्णुपुराणे पञ्चमांशे द्वात्रिंशः अध्यायः।

---

अभ्यवादयत् आभिमुख्येन यथावृत्तमृषामवादयत् कथनमकारयत्॥ १८॥
देव्या यथोदितं स ते भर्त्ता भविष्यति तथैव तस्य भर्तुः प्राप्तावुपायश्च यथोदितः॥ १९-२०॥
• अभिलिख्य वर्णकयोजनेन चित्रगतान् कृत्वा व्यदर्शयत् विशेषेण दर्शयामास, ऊषामिति शेषः।

मनुष्येषु कान्तसाजात्यात् दृष्टिं ददौ, तत्राप्यन्धकवृष्णिषु कान्तसमानवेशत्वात्॥ २१॥

कृष्णरामौ तु श्वशुरो प्रद्युम्नसदृशौ विलोक्य लज्जया जडेवासीत्। प्रद्युम्नदर्शने तस्य कान्तसादृश्येन श्वशुरत्वनिश्चयाद् ब्रीडायुक्ता दृष्टिमन्यतो निन्ये॥ २२-२३॥

योगगामिनी योगबलादाकाशगामिनी॥ २४॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमांशे द्वात्रिंशोऽध्यायः।

## त्रयस्त्रिंशोऽध्यायः

## (कृष्ण-वाणासुरयोः सङ्ग्रामः)

पराशर उवाच

बाणोऽपि पणिपत्याग्रे मैत्रेयाह त्रिलोचनम्।
देव! बाहुसहस्रेण निर्विण्णोऽहं विनाहवम्॥ १॥
क्वचिन्ममैषां बाहूनां साफल्यजनको रणः।
भविष्यति विना युद्धं भारायं मम किं भुजैः॥ २॥

श्रीशङ्कर उवाच

मयूरध्वजभङ्गस्ते यदा बाण! भविष्यति।
पिशितशिजनानान्दं प्राप्स्यसे त्वं तदा रणम्॥ ३॥

पराशर उवाच

ततः प्रणम्य मुदितः शम्भुमभ्यागतो गृहम्।
भग्नञ्च ध्वजमालोक्य हृष्टो हर्षान्तरं ययौ॥ ४॥
एतस्मिन्नेव काले तु योगविद्याबलेन तम्।
अनिरुद्धमथानिन्ये चित्रलेखा वराप्सराः॥ ५॥
कन्यान्तःपुरमध्ये तं रममाणं सहोषया।
विज्ञाय रक्षिणो गत्वा शशंसुर्दैत्यभूपतेः॥ ६॥
आदिष्टं किङ्कराणान्तु सैन्यं तेन दुरात्मना।
जघान परिघं लोहमादाय परवीरहा॥ ७॥
हतेषु तेषु वाणोऽपि रथस्थस्तद्वधोद्यतः।
युध्यमानो यथाशक्ति यदा वीर्य्येण निर्ज्जितः॥ ८॥

---

अथ युद्धे बाणाबाहुच्छेदं वक्ष्यन् शम्भोरपि तत्सम्मतमिति दर्शयन्नाह **'बाणोऽपीति'** चतुर्भिः अग्रे अनिरुद्धागमनात् प्राक्॥ १-२॥

पिशिताशिनो मांसभुजो जनान् पिशाचादीन् आनन्दयतीति शम्भोर्वाक्यं श्रुत्वा बाणो गृहमागत्य तं मयुरचिह्नध्वजं भग्नलोक्य पुनर्हर्षान्तरं ययाविति द्वयोरन्वयः॥ ४-५॥

तेन बाणेन व्यादिष्टं सैन्यं परवीरहा अनिरुद्धो जघान॥ ७-८॥

मायया युयुधे तेन स तदा मन्त्रिचोदितः।
ततस्तं पन्नगास्त्रेण बबन्ध यदुनन्दनम्॥ ९॥
द्वारवत्यां क्व यातोऽसावनिरुद्धेति जल्पताम्।
यदूनामाचचक्षे तं बद्धं बाणेन नारदः॥ १०॥
तं शोणितपुरे श्रुत्वा नीतं विद्याविदग्धया।
योषिता हत्ययं जग्मुर्यादवा नामरैरिति॥ ११॥
ततो गरुडमारुह्य स्मृतमात्रागतं हरिः।
बल-प्रद्युम्न सहितो बाणस्य प्रययौ पुरम्॥ १२॥
पुरीप्रवेशे प्रमथैर्युद्धमासीन्महात्मनः।
ययौ बाणपुराभ्यासं नीत्वा तान् संक्षयं हरिः॥ १३॥
ततस्त्रिपादस्त्रिशिरा ज्वरो माहेश्वरो महान्।
बाणरक्षार्थमत्यर्थं युयुधे शार्ङ्गधन्वना • ॥ १४॥
तद्भस्मस्पर्शसम्भूततापः कृष्णाङ्गसङ्गमात्।
अवाप बलदेवोऽपि श्रममामीलितेक्षणः॥ १५॥
ततः स युध्यमानस्तु सह देवेन शार्ङ्गिणा।
वैष्णवेन ज्वरेणाशु कृष्णदेहान्निराकृतः॥ १६॥

---

अनिरुद्धेत्यत्रार्षः सन्धिः। अनिरुद्धः क्व यात इति जल्पतामित्यर्थः॥ १०॥

नारदवाक्यादेव योगविद्यानिपुणया चित्रलेखा नीतं शोणितपुरे वर्त्तमान तं श्रुत्वा अमरैर्न नीत इति प्रत्ययं निश्चयं जग्मुः। पारिजाताहरणे पराभूतैरमरैः प्रणीत : स्यादिति शङ्कां जहुरित्यर्थः॥ ११॥

प्रमथैः रुद्रपार्षदैः॥ १३-१४॥

• शार्ङ्गं धनुर्यस्य तेन, बहुव्रीहौ धनुःशब्दस्य धन्वन आदेशः।

'त्रिपाद्भस्मप्रहरणस्त्रिशिरा रक्तलोचन' इति मन्त्रलिङ्गात्तस्य ज्वरस्य प्रहरणभूतं यद्भस्म तस्य स्पर्शात् सम्भूतस्तापो यस्य बलदेवस्य स तथा ततोऽपि तेन तापेन चामीलिताक्षोऽपि कृष्णाङ्गसमात्तदालिङ्गनात् शमं स्वास्थ्यमवाप। पाठान्तरे तद्भस्मस्पर्शात् सम्भूततापं यत् कृष्णस्याङ्ग तस्य सङ्गमात् स्पर्शाद् बलदेवोऽपि श्रमं तापमवापेत्यर्थः॥ १५॥

नारायणभुजाघातपरिपीड़नविह्वलम्।
तं वीक्ष्य क्षम्यतामस्येत्याह देवः पितामहः॥१७॥
ततश्च क्षान्तमेवेति प्रोक्त्य तं वैष्णवं ज्वरम्।
आत्मन्येव लयं निन्ये भगवान् मधुसूदनः॥१८॥
मम त्वया समं युद्धे ये स्मरिष्यन्ति मानवाः।
विज्वरास्ते भविष्यन्तीत्युक्त्वा चैनं ययौ ज्वरः •॥१९॥
ततोऽग्नीन् भगवान् पञ्च जित्वा-नित्वा तथा क्षयम्।
दानवानां बलं विष्णुश्चूर्णयामास लीलया॥२०॥
ततः समस्तसैन्येन दैतेयानां बलेः सुतः।
युयुधे शङ्करश्चैव कार्त्तिकेयश्च शौरिणा॥२१॥
हरि-शङ्करयोर्युद्धमतीवासीत् सुदारुणम्।
चुक्षुभुः सकलाः लोकाः शस्त्रास्त्रांशुप्रतापिताः॥२२॥
प्रलयोऽयम शेषस्य जगतो नूनमागतः।
मेनिरे त्रिदशा यत्र वर्त्तमाने महाहवे॥२३॥
जृम्भणास्त्रेण गोविन्दो जृम्भयामास शङ्करम्।
ततः प्रणेशुर्दैतेयाः प्रमथाश्च समन्ततः॥२४॥

---

ततः स माहेश्वरो ज्वरो विष्णोर्देहं प्रविश्य तेन सह युध्यमानस्तदानीमेव सृष्टेन वैष्णवेन ज्वरेण तद्देहाद्बहिर्निःसारितः॥१६-१७॥

लयं सौक्ष्मयं निन्ये, न तु नाशं, भागवतैव ज्वरद्वयकार्यव्यावस्थापनात्। तदुक्तं 'हरिवंशे', ''युवां ज्वरौ ज्वरवतः पीडाया मरणे प्रभू। पीडने तु भवानस्तु मरणे मामको ज्वरः।'' इति॥१८-१९॥

• ये मानवाः ज्वरवन्त इति शेषः। विगतः ज्वर येषां ते तथाभूताः ज्वरशून्याः भविष्यन्ति।

अग्नीन् पञ्च आहवनीयदक्षिणाग्नि-सखावसथ्यान्॥२०-२१॥

अस्त्राणामंशुभिः प्रकर्षेण तापितः सन्तः॥२२॥

प्रलयो नूनमागत इति मेनिरे॥२३॥

प्रणेशुः पलायिताः॥२४॥

**जृम्भाभिभूतश्च हरो रथोपस्थ उपाविशत्।**
**न शशाक तथा योद्धुं कृष्णेनाक्लिष्टकर्म्मणा॥ २५॥**
**गरुडक्षतवाहश्च प्रद्युम्नास्त्रप्रपीडितः।**
**कृष्णहुङ्कारनिर्द्धूतशक्तिश्चाति ययौ गुहः • ॥ २६॥**
**जृम्भिते शङ्करे नष्टे दैत्यसैन्ये गुहे जिते।**
**नीते प्रमथसैन्ये च संक्षयं शार्ङ्गधन्वना॥ २७॥**
**नन्दीश सङ्गृहीताश्वमधिरुढ़ो महारथम्।**
**बाणस्तत्रराययौ योद्धुं कृष्ण-कार्ष्णिबलैः सह॥ २८॥**
**बलभद्रो महावीर्यो बाणसैन्यमनेकधा।**
**विव्याध बाणै प्रभ्रश्य धर्मतस्तत् पलायत॥ २९॥**
**आकृष्य लाङ्गलाग्रेण मुषलेनावपोथितम्।**
**बलं बलेन ददृशे बाणो वाणैश्च चक्रिणा॥ ३०॥**
**ततः कृष्णस्य बाणेन युद्धमासीत् समस्यतोः।**
**परस्परमिषून दीप्तान् कायत्राणविभेदकान्॥ ३१॥**
**कृष्णश्चिच्छेद बाणैस्तान् बाणेन प्रहिताञ्छरान्।**
**बिभेद केशवं बाणो बाणं विव्याध चक्रभृत्॥ ३२॥**
**मुमुचाते तथास्त्राणि बाण-कृष्णौ जिगीषया।**
**परस्परं क्षतिपरौ परमामर्षणो द्विज ॥ ३३॥**

---

जृम्भाभिभूतः आलस्यव्याप्तः रथोपस्थे रथपृष्ठे॥ २५॥

• गरुडेन श्रीकृष्णस्य वाहनभूतेन क्षतः चञ्चुरखरादिना क्षतविक्षाताङ्गकृतः वाहः मयूररूपवाहनं यस्य सः. गुह कार्त्तिकेयः । ययौ पलायितः।

कृष्णस्य हुङ्कारेण निर्धूता निरस्ता शक्तिरायुधं यस्य स गुहश्चापक्रान्तः॥ २६-२८॥

धर्मतः युद्धधर्मात् प्रभ्रस्य बाणसैन्यं पलायत पलायनमकरोत्॥ २९॥

अवपोथितं प्रताडितं चक्रिणा च बाणैस्ताडितं स्वबलं बाणो ददर्श॥ ३०॥

समस्यतोरित्यादि वाक्यान्तरम्। कायत्राणं कवचं तद्भेदकानिषून् परस्परं सम्यगस्यतोः क्षिपतोः कृष्ण-बाणयोर्मध्ये कृष्णस्य बाणेन प्रयुक्तान्. शरांश्चिच्छेद॥ ३२-३३॥

छिद्यमानेष्वशेषेषु शरेष्वस्त्रे त सीदति।
प्रचुर्येण हरिर्बाणं हन्तुञ्चक्रे ततो मनः॥ ३४॥
ततोऽर्कशतसङ्घाततेजसा सदृशद्युति।
जग्राह दैत्यचक्रारिर्हरिश्चक्रं सुदर्शनम्॥ ३५॥
मुञ्चतो बाणनाशाय तत्र चक्रं मधुद्विषः।
नग्ना दैतेयाविद्याभूत् कोटरी पुरतो हरेः॥ ३६॥
तामग्रतो हरिर्दृष्टवा मीलिताक्षः सुदर्शनम्।
मुमोच बाणमुदिश्य च्छेत्तुं बाहुवनं रिपोः॥ ३७॥
क्रमेण तत्तु बाहूनां बाणस्याच्युतनोदितम्।
छेदञ्चक्रेऽमुरापास्तशस्त्रौघक्षरणादृतम्॥ ३८॥
छिन्ने बाहुनां तत्तु करस्थं मधुसूदनः।
मुमुक्षुर्बाणनाशाय विज्ञातस्त्रिपुरद्विषा॥ ३९॥
स उपेत्याह गोविन्दं सामपूर्वमुमापतिः।
विलोक्य बाणं दोर्दण्डच्छेदासृकस्त्रावववर्षिणम्॥ ४०॥

रुद्र उवाच

कृष्ण! कृष्ण! जगन्नाथ जाने! त्वां पुरुषोत्तमम्।
परेशं परमानन्दमनादि-निधनं परम्॥ ४१॥
देव-तिर्यङ्-मनुष्येषु शरीरग्रहणात्मिका।
लीलेयं सर्वभूतस्य तव चेष्टापलक्षणा॥ ४२॥
तत् प्रसीदाभयं दत्तं बाणस्यास्य मया प्रभो।
तत्त्वया नानृतं कार्यं यन्मया व्याहृतं वचः॥ ४३॥

---

अस्त्रे च प्राचुर्य्येण सीदति सति॥ ३४॥

अर्कशतसंघातस्य यत्तेजस्तत्सदृशी द्युतिर्यस्य तद्दैत्यचक्रघातकं सुदर्शनं चक्रं जग्राह॥ ३५॥

कोटरी नाम दैतेयानां विद्या मन्त्रमयी कुलदेवता रुद्राण्या अष्टमोंऽशः॥ ३६-३७॥

अस्मत्संश्रयवृद्धोऽयं नापराध्यस्तवाव्यय।
मया दत्तवरो दैत्यस्ततस्त्वां क्षामयाम्यहम्॥४४॥

पराशर उवाच

इत्युक्तः प्राह गोविन्दः शूलपाणिमुमापतिम्।
प्रसन्नवदनो भूत्वा गतामर्षोऽसुरं प्रति• ॥४६॥

श्रीभगवानुवाच

युष्मद्दत्तवरो बाणो जीवतामेष शङ्कर।
त्वद्वाक्यगौरवादेतन्मया चक्रं निवर्त्तितम् ॥४६॥
त्वया यदभयं दत्तं तद्दत्तमखिलं मया।
मत्तोऽविभिन्नमात्मानं द्रष्टुमर्हसि शङ्कर॥४७॥
योऽहं त्वं जगच्चेदं सदेवासुरमानुषम्।
अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः • ॥४८॥
इत्युक्ता प्रययौ कृष्णः प्राद्युम्निर्यत्र तिष्ठित।
तद्बन्धफणिनो नेशुर्गरुडानिलभीषिताः॥४९॥
ततोऽनिरुद्धमारोप्य सपत्नीकं गरुत्मति।
आजग्मुर्द्वारकां रामकार्ष्णिदामोदराः पुरीम्॥५०॥

इति श्रीविष्णुपुराणे पञ्चामांशे त्रयस्त्रिंशः अध्यायः॥

---

• असुरं बाणसुरं प्रति गतामर्षः विगतकोषः सन्।

• जीवतेः परस्मैपदिन जीवतामित्यात्मनेपदप्रयोग आर्षः। निवर्त्तितं प्रतिसंहृतम्। असुरैपास्तस्य शस्त्रौधस्य क्षपणे आदृतं सादरम्॥४६॥

मत्तोऽविभिन्नमितिच्छेदः॥४७-५०॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमांशे त्रयस्त्रिंशोऽध्यायः।

# चतुस्त्रिंशोऽध्यायः

## (पौण्ड्रकवधः, काशीदहनञ्च)

मैत्रेय उवाच

चक्रे कर्म्म महच्छौरिर्बिभ्राणो मानुषीं तनुम्।
जिगाय शक्रं सर्वञ्च सर्वदेवांश्च लीलया॥ १॥
यच्चान्यदकरोत् कर्म्म दिव्यचेष्टाविघातकृत्।
तत् कथ्यतां महाभाग! परं कौतूहलं हि मे॥ २॥

पराशर उवाच

गदतो मम विप्रर्षे! श्रूयतामिदमादरात्।
नरावतारे कृष्णेन दग्धा वाराणसी यथा॥ ३॥
पौण्ड्रको वासुदेवस्तु वासुदेवोऽभवद् भुवि।
अवतीर्णस्त्वमित्युक्तो जनैरज्ञानमोहितैः॥ ४॥
स मेने वासुदेवऽहमवतीर्णो महीतले।
नष्टस्मृतिस्ततः सर्वं विष्णुचिह्नमचीकरत् • ॥ ५॥
दूतञ्च प्रेरयामास कृष्णाय सुमहात्मने।
त्यक्तवाचक्रादिकं चिह्नं दमीयं नाम चात्मनः॥ ६॥
वासुदेवात्मकं मूढ़! मुक्त्वा सर्वं विशेषतः।
आत्मनो जीविताार्थाय ततो मे प्रणतिं व्रज॥ ७॥

---

दिव्यानां दिवि भवानां चेष्टा पराक्रमस्तद्विघातकृत् तिरस्कर्त्ता॥ २-३॥

पौण्ड्रकः पौण्ड्रदेशजः प्राकृतैर्जनैः सस्तुवद् भिर्वासुदेवोऽवतीर्णस्त्वमित्युक्तः सन्॥ ४॥

सत्यमेवाहं वासुदेवोऽवतीर्ण इति स मेने॥ ५-७॥

• नष्टस्मृतिः विलुप्तत्मस्वरूपविज्ञान इत्यर्थः, स्मृतिरत्र विस्मृतस्वीययथार्थरूप इत्यर्थः। विष्णुचिह्नं विष्णोर्यद् यत् लक्षणं ततसर्वमित्यर्थ, अचीकरत् प्राकाशयत्।

इत्युक्तं सम्प्रहस्यैनं दूतं प्राह जनार्दनः।
निजचिह्नमहं चक्रं समुत्स्रक्ष्ये त्वयीति वै॥ ८॥
वाच्यः स पौण्ड्रको गत्वा त्वया दूत! वचो मम।
ज्ञातस्त्वद्वाक्यसद्भावो यत् कार्यं तद्विधीयताम्॥ ९॥
गृहीतचिह्न एवाहमागमिष्यामि ते पुरम्।
समुत्स्रक्ष्यामि ते चक्रं निजचिह्नमसंशयम्॥ १०॥
आज्ञापूर्वञ्च यदिदमागच्छेति त्वयोदितम्।
सम्पादयिष्ये श्वस्तुभ्यं तदप्येषोऽविलम्बितम्॥ ११॥
शरणं ते समभ्येत्य कर्त्तास्मि नृपते! तदा।
यथा त्वत्त्वो भयं भूयो न मे किञ्चिद्भविष्यति॥ १२॥
इत्युक्तेऽपगते दूते संस्मृत्याभ्यागतं हरिः.
गरुत्मन्तमथारुह्य त्वरितं तत्पुरं ययौ• ॥ १३॥
स चापि केशवोद्योगं श्रुत्वा काशिपतिस्तदा।
सर्वसैन्यपरीवारः पार्ष्णिग्राह उपाययौ॥ १४॥
ततो बलेन महता काशिराजबलेन च।
पौण्ड्रको वासुदेवोऽसौ केशवाभिमुखं ययौ॥ १५॥
तं ददर्श हरिर्दूरादुदारस्यन्दने स्थितम्।
चक्रहस्तं गदाखड्गबाहुं पाणिगताम्बुजम्॥ १६॥

---

समुतस्रक्ष्ये त्वयीति बुद्धिसन्निहितं पौण्ड्रकमभिसन्धायोक्तम्। चिह्नं चक्रं क्षिप्ता तं हनिष्यामीति भावः॥८॥

एतत् स्पष्टयन्नाह—'वाच्यश्चे'ति चतुर्भिः। तद्वाक्यस्य सद्भावः याथार्थ्यम्॥ ९॥

निजचिह्नं मच्चिह्नं चक्रं त्वयि प्रयोक्ष्ये॥ १०-११॥

शरणं त्वदीयं पुरं समभ्येत्य त्वत्तो यथा मे भयं भूयो य भविष्यति, तथा कर्त्तास्मि करिष्यामि त्वां हनिष्यामीत्यर्थः॥ १२॥

• संस्मृत्या कृष्णकर्त्तृकस्मरणमात्रेण अभ्यागत कृष्णसमीपे समुपस्थितम्। अथवा संस्मृत्य गरुडस्य ागमनमभिसन्धाय स्मृत्वा अत्र आरुह्योत्यनेनैकर्त्तृकत्वं बोध्यम। तत्पुरं तस्य पौण्ड्रकस्य राज्ञः पुरम्।

स्रग्धरं धृताशार्ङ्गञ्च सुपर्णरचितध्वजम्।
वक्षःस्थले कृतञ्चास्य श्रीवत्सं ददृशे हरिः॥ १७॥
किरीटकुण्डलधरं पीतवासःसमन्वितम्।
दृष्ट्वा तं भावगम्भीरं जहास गरूडध्वजः• ॥ १८॥
युयुधे च बलेनास्य हस्त्यश्वबलिना द्विज।
निस्त्रिंशर्ष्टिगदाशूलशक्तिकार्म्मुकशालिना॥ १९॥
क्षणेन शार्ङ्गनिर्म्मुक्तैः शरैरिषुविदारणैः।
गदाचक्रनिपातैश्च सूदयामास तद्बलम् • ॥ २०॥
काशिराजबलञ्चैव क्षयं नीत्वा जनार्द्दनः.
उवाच पौण्ड्रकं मूढमात्मचिह्नोपलक्षणम्॥ २१॥

श्रीभगवानुवाच

पौण्ड्रकोक्तं त्वया यत्तु दूतवक्त्रेण मां प्रति।
समुत्सृजेति चिह्नानि तत्ते सम्पादयाम्यहम्॥ २२॥
चक्रमेतत् समुत्सृष्टं गदेयं ते विसर्जिता।
गरुत्मानेष निर्द्दिष्टः समारोहतु ते ध्वजम्॥ २३॥

पराशर उवाच

इत्युच्चार्य्य विमुक्तेन चक्रेणासौ विदारितः।
पोथितो गदया भग्नो गरुत्मांश्च गरुत्मता • ॥ २४॥
ततो हाहाकृते लोके काशिपुर्य्यधिपो बली।
युयुधे वासुदेवेन मित्रस्यापचितौ स्थितः॥ २५॥

---

• भावेन मनसि कल्पितेन स्वीयरासुदेवभावेन गम्भीरम् तं पौण्ड्रकं दृष्टवेत्यन्वयः। अथवा भावगम्भीरं यथा स्यात् तथा जहासेति क्रियाविशेषणमिदम्।

हस्तिभिः अश्वैश्च बलिना निस्त्रिंशायुधैः शालिना श्लाध्येन॥ १९॥

• तद्बलं तस्य पौण्ड्रकस्य सैन्यम्, सूदयामास नाशयामास।

• असौ पौण्ड्रकः। गरुत्मता यथार्थेन श्रीकृष्णवाहनभतेन गरुडेन गरुत्मान् पौण्ड्रकस्य रथोपरि क्रियया निर्वर्त्तिता गरुडमूर्तिरित्यर्थः।

ततः शार्ङ्गधनुर्मुक्तैश्छित्त्वा तस्य शरैः शिरः।
काशिपुर्य्याञ्च चिक्षेप कुर्वन् लोकस्य विस्मयम्॥२६॥
हत्वा च पौण्ड्रकं शौरिः काशिराजञ्च सानुगम्।
पुनर्द्वारवतीं प्राप्तो रेमे स्वर्गगतो यथा॥२७॥
तच्छिरः पतितं दृष्ट्वा तत्र काशिपतेः पुरे।
जनः किमेतदित्याह केनेत्यत्यन्तविस्मितः• ॥२८॥
ज्ञात्वा तं वासुदेवेन हतं तस्य सुतस्ततः।
पुरोहितेन सहितस्तोषयामास शङ्करम् • ॥२९॥
अविमुक्ते महाक्षेत्रे तोषितस्तेन शङ्करः।
वरं वृणीष्वेति तदा तं प्रोवाच नृपात्मजम्॥३०॥
स वव्रे भगवान् कृत्या पितृहन्तुर्वधाय मे।
समुत्तिष्ठतु कृष्णस्य त्वत्प्रसादान्महेश्वर॥३१॥

पराशर उवाच

एवं भविष्यतीत्युक्तै दक्षिणाग्नेरनन्तरम्।
महाकृत्या समुत्तस्थौ तस्यैवाग्नेर्विनाशिनी॥३२॥
ततो ज्वालाकरालास्या ज्वलत्केशकलापिका।
कृष्ण कृष्णेति कुपिता कृत्या द्वारवतीं ययौ• ॥३३॥

---

अपि च तावानृण्ये स्थितः सन् युयुधे॥२५-२७॥

• पुरोहितेन सहित इत्यनेन तत्र शंकरतोषणे पुरोहितस्य साचिव्य प्रतीयते।

• अविमुक्ते महक्षेत्रे वाराणस्याम्। तेन पौण्ड्रकसुतेन। पितृहन्तुः कृष्णस्य वधाय वधमुद्दिश्य, कृत्या आभिचारिकदेवताविशेषः, 'कृत्या क्रियादेवतयो' रिति कोषात्। समुत्तिष्ठतु उद्भवतु इति वा।

प्रथमं किमेतत् ततश्च ज्ञात्वैतत् केन वा च्छिन्नमित्याह॥२८-३०॥

पितृहन्तर्वधाय प्रार्थनीया कृत्या समुत्तिष्ठत्विति वव्रे न तु तं हन्त्विति॥३१॥

शङ्करेणाप्येवं भविष्यतीति तस्याः समुत्थानमात्रमेवानुमतमिति न विरोधः। तस्यैवाभिचत्तरिव नत्वभिचर्यमाणस्य॥३२॥

ज्वलन् केशकलापो यस्याः सा॥३३॥

• ज्वालाभिः करालं भीमम् आस्यं वदनं यस्याः सा।

तामवेक्ष्य जनस्त्रासविचल्लोचनो मुने।
ययौ शरण्यं जगतां शरणं मधुसूदनम्॥ ३४॥
काशिराचसुतेनेयमाराध्य वृषभध्वजम्।
उत्पादिता महाकृत्येत्यवगम्याथ चक्रिणा ॥३५॥
जहि कृत्यामिमामुग्रां वह्निज्वालाजटालकाम्।
चक्रमुत्सुष्टक्षेपु क्रीडासक्तेन लीलया॥ ३६॥
तदग्निमालाजटिलज्वालोद्गारातिभीषणाम्।
कृत्यामनुजगामाशु विष्णुचक्रं सुदर्शनम् • ॥३७॥
चक्रप्रतापविध्वस्ता कृत्या माहेश्वरी तदा।
ननाश वेगिनी वेगात् तदप्यनुजगाम ताम्॥ ३८॥
कृत्या वाराणसीमेव प्रवेविश त्वरान्विता।
विष्णुचक्रप्रतिहतप्रभावा मुनिसत्तम • ॥३९॥
ततः काशिबलं भूरि प्रमथानां तथा बलम्।
समस्तशस्त्रास्त्रयुतं चक्रस्याभिमुखं ययौ • ॥४०॥
शस्त्रास्त्रमोक्षचतुरं दग्ध्वा तद्बलमोजसा।
कृत्यागर्भामशेषां तां दग्ध्वा वाराणसीं पुरीम्॥ ४१॥

---

त्रासेन विचलन्ति लोचनानि यस्य सः॥३४॥

वह्निज्वाला एव जटारूपाः संश्लिष्टा अलका यस्यास्तां जहीति चक्रमुत्सृष्टम्॥३६॥

अग्निमालाभिर्जटिला चासौ ज्वालानामुद्गारैश्चातिभीषणा च ताम्। पाठान्तरे चक्रविशेषणम्॥३७॥

• तत् विष्णुचक्रं सुदर्शनम् अग्निमालेत्यादिविशेषविशेषितां कृत्यामनुजगामेत्यन्वतः।

• विष्णुचक्रेण प्रतिहतः प्रभावः यस्याः सा।

• काशिबलं काशिराजसैन्यम्, तथा प्रमथानां शंकरानुचराणां बलं सैन्यम्, समस्तशस्यास्त्रयुतं निखिलविधिप्रकारयुधसमन्वितम् चक्रस्य अभिमुखं सम्मुखं तत् परिभवसम्पादनार्थमिति शेषः।

ननाश अपलायत॥३८-४१॥

सभृद्भृत्यपौरान्तु साश्वमातङ्गमानवाम्।
अशेषकौषकोष्ठां ता दुर्निरीक्ष्या सुरैरपि॥४२॥
ज्वालापरिप्लुतासेष-गृह-प्राकारचत्वराम्।
ददाह तद्धरेश्चक्रं सकलामेव तां पुरीम्॥४३॥
अक्षीणामर्षमत्युग्रसाध्यसाधनसस्पृहम्।
तच्चक्रं प्रस्फुरद्दीप्ति विष्णोरभ्याययौ करम्॥४४॥

इति श्रीविष्णुपुराणे पञ्चमांशे चतुस्त्रिंश: अध्याय:॥

---

भूभृतां राज्ञां भृत्ये: पौरैश्च सहिताम्॥४२-४३॥

अक्षीणामर्षम् अगतक्रोधम् अत एवाल्पस्य कृत्यावाराणसीदाहादे: साध्यस्य साधनेन सस्पृहं पुन: कार्यान्तरसाधनाय साकांक्षमित्यर्थ:॥४४॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमांशे चतुस्त्रिंशोऽध्याय:।

## पञ्चत्रिंशोऽध्यायः

### (कृष्णपुत्र-शाम्बस्य विवाहः।)

मैत्रेय उवाच

भूय एवाहमिच्छामि बलभद्रस्य धीमतः।
श्रोतुं पराक्रमं ब्रह्मन्! तन्ममाख्यातुमर्हसि॥ १॥
यमुनाकर्षणादीनि श्रुतानि भगवन्मया।
तत् कथ्यतां महाभात! यदन्यत् कृतवान् बलः॥ २॥

पराशर उवाच

मैत्रेय! श्रूयतां कर्म्म यद् रामेणाभवत् कृतम्।
अनन्तेनाप्रमेयेण शेषेण धरणीभृता॥ ३॥
दुर्य्योधनस्य तनयां• स्वयंवरकृतक्षणाम्।
बलादादत्तवान् वीरः शाम्बो जाम्बवतीसुतः॥ ४॥
ततः क्रुद्धा महावीर्याः कर्णः दुर्योधनादयः।
भीष्म-द्रोणादयश्चैव बबन्धुर्युधि निर्ज्जितम्॥ ५॥
तच्छुत्वा यादवाः सर्वे क्रोधं दुर्योधनादिषु।
मैत्रेय! चक्रुश्च ततो निहन्तुं ते महोद्यमम् • ॥ ६॥
तान् निवार्य्य बलः प्राह मदलोलाकुलाक्षरम्।
मोक्ष्यन्ति ते मद्वचनाद् यास्याम्येको हि कौरवान्॥ ७॥

---

यथा सकलबलजनकोषादिसहितां वाराणसीं विष्णुचक्रं ददाह, तथैव सर्वसहितां हस्तिनापुरं बलभद्रो गङ्गायां प्रक्षेप्तुमुद्यत इति वक्तुं तत् प्रस्तावमाह— इति **'दुर्योधनस्ये'** त्यादिना **'विविशुर्गजह्वाय'** मित्यन्तेन। स्वयंवरे कृतक्षणां लब्धावसराम्॥ ४॥

• ते दुर्योधननादयः कौरवाः, मोक्ष्यन्ति विगतबन्धं करिष्यन्ति शाम्बं बद्धमिति शेषः। अहं कौरवान् दुर्योधनादीन् यास्यामि प्राप्स्यामि।

• नागसाह्वयं हस्तिनापुरम्। बाह्यस्य नगरबहिर्वर्त्तिनः उपबनस्य मध्ये अभूत् स्थितः।

मदेन लोलं चपलम् आकुलाक्षरञ्च यथा भवत्येवं प्राह॥ ७॥

पराशर उवाच

बलदेवस्ततो गत्वा नगरं नागसाह्वयम्।
बाह्येपवनमध्येऽभूद् न विवेश च तत्पुरम्॥८॥
बलमागतमाज्ञाय भूपा दुर्योधनादयः।
गामर्घ्यमुदकञ्चैव रामाय प्रत्यवेदयन्॥९॥
गृहीत्वा विधिवत् सर्वं ततस्तानाह कौरवान्।
आज्ञापयत्युग्रसेनः शाम्बमाशु विमुञ्चत॥१०॥
ततस्ते तद्वचः श्रुत्वा भीष्मद्रोणादयो द्विज।
कर्णदुर्य्योधनाद्याश्च चुक्रुधर्द्विजसत्तम॥११॥
ऊचुश्च कुपिताः सर्वे बाहूलीकाद्याश्च कौरवाः।
अराज्यार्हं यदोर्वंशमवेक्ष्य मुसलायुधम्॥१२॥
भो भो! किमेतद्भवता बलभद्रेरितं वचः।
आज्ञां कुरुकुलोत्थानां यादवः कः प्रदास्यति • ॥१३॥
उग्रसेनोऽपि यद्याज्ञां कौरवाणां प्रदास्यति।
तदलं पाण्डुरच्छत्रैर्नृपयोग्यैर्विडम्बितैः॥१४॥
तद्गच्छ बल! पापाढयं शाम्बमन्यायचेष्टितम्।
विमोक्ष्यामो न भवतो नोग्रसेनस्य शासनात्॥१५॥
प्रणतिर्या कृतास्माकमार्याणां कुकुरान्धकैः।
नमाम सा कृता केयमाज्ञा स्वामिनि भृत्यतः॥१६॥

---

तत् पुरं न 'विवेशे' ति स्वोक्ताकरणे योद्धुं तत् पुरञ्च गङ्गायां प्रक्षेप्तुमिच्छन्। उद्कञ्चाप्यर्ध्य रामाय दत्तवन्तः॥९॥

• हे बलभद्र! भवता एतत् किं कीदृशम् अयोग्यं वचः **'आज्ञापयत्युग्रसेन'** इत्यादिरूपं वाक्यम् ईरितं कथितम्। कुरुकुलोत्थानां कुरुवंशप्रभवाणाम् आज्ञां आदेशम्।

विडम्बितैरस्मदनुकरणेन धृतैर्यदूनां नृपार्हैर्लाञ्छनैरलम्। तान्यपहरिष्याम इति भावः॥१४-१५॥

गर्वमारोपिता यूयं समानासनभोजनैः।
को दोषो भवतां नीतिर्यत् प्रीत्या नावलोकिता॥ १७॥
अस्माभिरर्घो भवतो योऽयं बल! निवेदितः।
प्रेम्णैतन्नैतदस्माकं कुल्यं युष्मत्कुलोचितम्॥ १८॥

पराशर उवाच

इत्युक्त्वा कुरवः सर्वे न मुञ्चामो हरेः सुतम्।
कृतैकनिश्चयास्तूर्णं विविशुर्गजसाह्वयम्॥ १९॥
मत्तः कोपेन चाघूर्णंस्तदधिक्षेपजन्मना।•
उत्थाय पाष्णर्या वसुधां जघान स हलायुधः• ॥२०॥
ततो विदारिता पृथ्वी पार्ष्णिघातान्महात्मनः।
आस्फोटयामास तथा दिशः शब्देन पूरयन् • ॥२१॥
स उवाचातिताम्राक्षो भ्रुकुटीकुटिलाननः।
अहो मदापलेऽयमसाराणां दुरात्मनाम्॥ २२॥
कौरवाणां महापत्वमस्माकं किल कालजम्।
उग्रसेनस्य ये नाज्ञां मन्यन्तेऽद्यापि लङ्घनम्॥ २३॥

---

नीतिर्यत् प्रीत्या नावलोकितेति हीनानामतिसम्मानो न कार्य इत्येवम्भूता राजनीतिर्युष्मासु प्रीत्यास्माभिर्न विचारिति, अतोऽस्माकमेवायं दोष इति भावः॥ १७-१८॥

न मुञ्चाम इति कृतैकनिश्चयाः कृतैकमत्याः॥ १९॥

• आधूर्णन्नित्यत्र शतृप्रत्यय आर्षः।

• पार्ष्णिनेति वक्तव्ये पाष्णयेति प्रयोग आर्षः।

• शब्देन वीरोचितगर्जनेन, आस्फोटयामास बाह्वास्फोटं चकार बलभद्र इति शेषः।

अधिक्षेपजन्मना तिरस्कारकृतेन॥ २०-२१॥

असाराणां बलहीनानाम्॥ २२॥

कौरवाणां महीपतित्वं स्वतः अस्माकन्तु कालजम् आगन्तुकमेतत् प्रसादजमित्यर्थः। अद्यापि इन्द्रादीनप्याज्ञापयते यस्तस्य ये कुरवं आज्ञां न मन्यन्ते नाद्रियन्ते किन्तु तल्लंघनमेव मन्यन्ते॥ २३॥

आज्ञां प्रतीच्छेद्धर्म्मेण सह देवैः शचीपतेः।
सदाध्यास्ते सुधर्म्मां तामुग्रसेनः शचीतपेः॥ २४॥
धिङ्मनुष्यशतोच्छिष्टे तुष्टिरेषां नृपासने।
पारिजाततरोः पुष्पमञ्जरीर्वनिताजनः॥ २५॥
विभर्ति यस्य भृत्यानां सोऽयेषां न महीपतिः।
समस्तभूभृतां नाथ उग्रसेनः स तिष्ठतु॥ २६॥
अद्य निष्कौरवामुर्वीं कृत्वा यास्यामि तत्पुरीम्।
कर्णं दुर्योधनं द्रोणमद्य भीष्मं सवाह्लिकम् • ॥२७॥
दुष्टान् दुःशासनादींश्च भूरिश्रवसमेव च।
सोमदत्तं शलं भीममर्ज्जुनं सयुधिष्ठिरम्॥ २८॥
यमजौ कौरवांश्चान्यान् हत्वा साश्वरथद्विपान्।
वीरमादाय शाम्बञ्च सपत्नीकं ततः पुरीम्॥
द्वारकामुग्रसेनादीन् गत्वा द्रक्ष्यामि बान्धवान् • ॥२९॥
अथवा कौरवाधीनं समस्तैः कुरुभिः सह।
भारावतरणे शीघ्रं देवराजेन चोदितः॥
भागीरथ्यां क्षिपाम्याशु नगरं नागसाह्वयम् • ॥३०॥

पराशर उवाच

इत्युक्त्वा मदलक्ताक्षः कर्षणाधोमुखं हलम्।
प्राकारवप्रे विन्यस्य चकर्ष मुषलायुधः • ॥३१॥

---

उद्बाहधनेन परिबर्हेण भार्यया च समन्वितम्॥३८॥

• निष्कौरवाम् कौरवशून्याम् उर्वी, पृथिवीम्, तत्पुरीं तस्य उग्रसेनस्य राज्ञः पूरीं द्वारकां नगरीम्। यमजौ नकुल-सहदेवौ॥ २८॥

• साश्वरथद्विपान् अश्वरथजसहितान्, सपत्नीकं पत्नीसहितं, पुरीं द्वारकाम्।

• चोदितः प्रेरितः, नागसाह, वयम् हस्तिनापुरं कौरवाधिष्टानभूतमिति भावः।

कर्षणार्थमधोमुखं प्राकारवप्रे दुर्गस्य मूलदेशे॥ ३१॥

• मदेन वारुणीपानजनितमत्ततया रक्ते लोहितवर्णे अक्षिणी नेत्रे यस्य सः।

आघूर्णित तत् सहसा ततो वै हस्तिनापुरम्।
दृष्ट्वा संक्षुब्धहृदयाश्चुक्रशुः सर्वकौरवाः॥ ३२॥
राम! राम महावाहो! क्षम्यतां क्षम्यातं त्वया।
उपसंह्रियतां कोपः प्रसीद मुषलायुध॥ ३३॥
एष शाम्बः सपत्नीकस्तव निर्यातितो बल।
अविज्ञातप्रभावाणां क्षम्यतामपराधिनाम्॥ ३४॥

पराशर उवाच

ततो निर्यातयामासुः शाम्बं पत्नीसमन्वितम्।
निष्क्रम्य नागरात्तूर्णं कौरवा मुनिपुङ्गव॥ ३५॥
भीष्म-द्रोण-कृपादीनां प्रणम्य वदतां प्रियम्।
क्षान्तमेतन्मयेत्याह बलो बलवतां वरः॥ ३६॥
अद्याप्याघूर्णिताकारं लक्ष्यते तत् पुरं द्विज।
एष प्रवादो रामस्य बलशौर्योपलक्षणः॥ ३७॥
ततस्तु कौरवाः शाम्बं सम्पूज्य हलिना सह।
प्रेषयामासुरुद्धाहधनभार्यासमन्वितम्॥ ३८॥

इति श्रीविष्णुपुराणे पञ्चमांशे पञ्चत्रिंशः अध्यायः॥

---

आघूर्णितं विचलितम्॥ ३२॥

निर्यातितः समर्पितः॥ ३४-३६॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे चतुस्त्रिंशोऽध्यायः।

# षट्त्रिंशोऽध्याय:

## (द्विविदवध:)

पराशर उवाच

मेत्रैय! श्रूयतां तस्य बलस्य बलशालिनः।
कृतं यदन्यत्तेनाभूत्तदपि श्रूयतां द्विज॥ १॥
नरकस्यासुरेन्द्रस्य देवपक्षविरोधिनः।
सखाभवन्महावीर्यो द्विविदो नाम वानरः॥ २॥
वैरानुबन्धं बलवान् स चकार सुरान् प्रति।
नरकं हतवान् कृष्णो बलदर्पसमन्वितम्॥ ३॥
करिष्ये सर्वदेवानां तस्मादेतत्प्रतिक्रियाम्।
यज्ञविध्वंसनं कुर्वन् मर्त्तलोकक्षयं तथा॥ ४॥
ततो विध्वंसयामास यज्ञानज्ञानमोहितः।
बिभेद साधुमर्यादां क्षयं चक्रे च देहिनाम्॥ ५॥
ददाह च वनोद्देशान् पुरग्रामान्तरणि च।
क्वचिच्च पर्वताक्षेपैग्रामिदीन् समचूर्णयत्॥ ६॥
शैलानुत्पाटय् तोयेषु मुमीचाम्बुनिधौ तथा।
पुनश्चार्णवमध्यस्थः क्षोभयामास सागरम्॥ ७॥
तेन विक्षोभितश्चब्धिरुद्वेलोऽजायत द्विज।
प्लावयंस्तीरजान् ग्रामान् पुरादीनतिवेगवान् • ॥ ८॥
कामरूपी महारूपं कृत्वा संस्थानशेषतः।
लुण्ठन् भ्रमणसंमर्दैः सञ्चूर्णयति वानरः॥ ९॥

---

'मैत्रेय श्रूयतामिति यदुक्तं तदेव विवृणोति'—'कृतं यदन्य' दिति॥ १–७॥

• उद्वेलः अतिक्रान्तवेलाभूमिः अजायत, तेन लोकानां सागरजलप्लुतानां महान् क्षयो निग्रहश्च समजनिषातामिति भावः।

तेन विप्रकृतं सर्वं जगदेतद्दुरात्मना।
निःस्वाध्यायवषट्कारं मैत्रेयासीत् सुदुःखितम् • ॥१०॥
एकदा रैवतोद्याने पपौ पानं हलायुधः।
रेवती च महाभागा तथैवान्या वरस्त्रियः॥११॥
उपगीयमानो विलसल्ललनामौलिमध्यगः।
रेमे यदुवरश्रेष्ठः कुबेर इव मन्दरे॥१२॥
ततः स वानरोऽभ्येत्य गृहीत्वा सीरिणो हलम्।
मुषलञ्च चकारस्य सम्मुखञ्च बिडम्बनम्॥१३॥
तथैव योषितां तासां जहासाभिमुखं कपिः।
पानपूर्णांश्च करकांश्चिक्षेपाहत्य वै तदा॥१४॥
ततः कोपपरीतात्मा भर्त्सयामास तं बलः।
तथापि तमवज्ञाय चक्रे किलकिलाध्वनिम्॥१५॥
ततः समुत्थाय बलो जग्राह मुषलं रुषा।
सोऽपि शैलशिलां भीमां जग्राह प्लवगोत्तमः॥१६॥
चिक्षेप च तां क्षिप्तां मुषलेन सहस्रधा।
बिभेद यादवश्रेष्ठः सा पपात महीतले॥१७॥
आपतन्मुषलञ्चासौ समुल्लङ्घ्य प्लवङ्गमः।
वेगेनागम्य रोषेण तलेनोरस्यताडयत्॥१८॥
ततो बलेन कोपेन मुष्टिना मूर्ध्नि ताडितः।
पपात रुधिरोद्गारी द्विविदः क्षीणजीवितः॥१९॥

---

• निः न विद्यते स्वाध्यायः वेदपाठः वषट्कारः हविर्दानाय वषट्पदाद्युच्चारणं च यत्र तथाभूतम्। तथाहि तदा जगति वेदादिपाठः यज्ञादिक्रिया च निःशेषं लोपमापतुरिति भावः.

रैवतो द्वारकायाः पूर्वतो गिरिस्तत्सम्बन्धिन्युद्याने॥११॥

विलसल्ललना विलासिन्यः तासां मौलयः मूर्धन्यां:, तासां मध्यगः॥१२॥

विडम्बनां भ्रूक्षेपदन्तदर्शनादिविक्रियाम्॥१३॥

पीयते इति पानं मदिरा ततपूर्णान् कलकान्॥१४-१८॥

पतता तच्छरीरेण गिरेः शृङ्गमदीर्य्यत।
मैत्रेय! शतधा वज्रिवज्रेणेव हि ताडितम्॥२०॥
पुष्पवृष्टिं ततो देवा रामस्योपरि चिक्षिपुः।
प्रशशंसुस्तथाभ्येत्य साध्वेतत्ते महत् कृतम्॥२१॥
अनेन दुष्टकपिना दैत्यपक्षोपकारिणा।
जगन्निराकृतं वीर! दिष्ट्यासौ क्षयमागतः॥२२॥
इत्युक्त्वा दिवमाजग्मुर्देवा हृष्टाः सगुह्यकाः॥२३॥

पराशर उवाच

एवंविधान्यनेकानि बलदेवस्य धीमतः।
कर्माण्यपरिमेयाणि शेषस्य धरणीभृतः॥२४॥

इति श्रीविष्णुपुराणे पञ्चमांशे षट्त्रिंशः अध्यायः॥

---

अदीर्यत विदीर्णभूत॥१९-२०॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे षट्त्रिंशोऽध्यायः।

## सप्तत्रिंशोऽध्यायः

### (ऋषीणां शापः, यदुवंशविनाशः, भगवतः स्वधामप्रत्यावर्त्तनञ्च)

पराशर उवाच

एवं दैत्यवधं कृष्णो बलदेवसहायवान्।
चक्रे दुष्टक्षितीशानां तथैव जगतः कृते॥ १॥
क्षितेश्च भारं भगवान् फाल्गुनेन समं विभुः।
अवतारयामास हरिः समस्ताक्षौहिणीवधात्॥ २॥
कृत्वा भारावतरणं भुवो हत्वाखिलान् नृपान्।
शापव्याजेन विप्राणामुपसंहृतवान् कुलम्॥ ३॥
उत्सृज्य द्वारकां कृष्णस्त्यक्त्वा मानुष्यमात्मभूः।
सांशो विष्णुमयं स्थानं प्रविवेशपुनर्निजम्॥ ४॥

मैत्रेय उवाच।

स विप्रशापव्याजेन सञ्जह्ने स्वकुलं कथम्।
कथञ्च मानुषं देहमुत्ससर्ज्ज जनार्द्दनः॥ ५॥

पराशर उवाच

विश्वामित्रस्तथा कण्वो नारदश्च महामुनिः।
पिण्डारके महीतीर्थे दृष्टा यदुकुमारकैः॥ ६॥
ततस्ते यौवनोन्मत्ता भाविकार्य्यप्रचोदिताः।
शाम्बं जाम्बवतीपुत्रं भूषयित्वा स्त्रियं यथा॥ ७॥
प्रसृतांस्तान्मुनीनूचुः प्रणिपातपुरःसरम्।
इयं स्त्री पुत्रकामस्य बभ्रोः किं जनयिष्यति॥ ८॥

---

दुष्टक्षितीशानाञ्च वधं चक्रे॥ १॥

फाल्गुनेन समं तत्सारथ्येन त क्षितेर्भारमवतारयामास॥ २-३॥

मानुष्यं मनुष्यनाट्यं सांशः बलप्रद्युम्नादि सहितः॥ ५-६॥

भविकार्यः यादवसंहारस्तेन प्रयुक्ताः॥ ७-८॥

पराशर उवाच

दिव्याज्ञानोपपन्नास्ते विप्रलब्धाः कुमारकैः।
मुनयः कुपिताः प्रोचुर्मुषलं जनयिष्यति।
येनाखिलकुलोत्सादो यादवानां भविष्यति॥ ९॥
इत्युक्तास्तैः कुमारास्ते आचचक्षुर्यथाकृतम्।
उग्रसेनाय मुसलं जज्ञे शाम्बस्य चोदरात्॥ १०॥
तदुग्रसेनो मुसलमयश्चूर्णमकारयत् ।
जज्ञे स चैरकाश्चूर्णः प्रक्षिप्तस्तैर्महोदधौ• ॥ ११॥
मुसलस्याय लोहस्त चूर्णितस्यान्धकैर्द्विज।
खण्डं चूर्णयितुं शेकुनैकं ते तोमराकृति॥ १२॥
तदप्यम्बुनिधौ क्षिप्तं मत्स्यो जग्राह घातिभिः।
घातितस्योदरात् तस्य लुब्धो जग्राह तं जरा॥ १३॥
विज्ञातपरमार्थोऽपि भगवान् मधुसूदनः।
नैच्छत्तदन्यथाकर्त्तुं विधिना यत् समीहितम्॥ १४॥
देवैश्च प्रहितो दूतः प्रणिपत्याह केशवम्।
रहस्येवमहं दूतः प्रहितो भगवन् सुरैः • ॥ १५॥

---

दिव्यमलौकिकं भगवन्मतं तज्ज्ञानसम्पन्नाः विप्रलब्धाः प्रतारिताः।।९।।

उग्रसेनायाचचक्षुः न तु श्रीकृष्णाय।।१०।।

• अयसः लोहस्य चूर्णम् अकारयत्, अथवा चूर्ण चूर्णभूतम् अयः लोहम् अकारयत्।

उग्रसेनोऽपि श्रीकृष्णमविज्ञाप्यैव स्वयं तदायसं मुसलं चूर्णमकारयत्। अनेन च विनाशकाले तेषां कृष्णवैमुख्यं सूचितम्। स च चूर्णः। तच्चूर्ण महोदधौ प्रक्षिप्तं सत् तद्वेलायां लग्नम्। एरका धारात्रयोपेतास्तूणभेदा भूत्वा जज्ञे। एकेन मुसलेन बहूनां परस्परं प्रहरणासम्भवात् चूर्णद्वारा तदेव बहुधा परिणतमिति भावः। तोमराकृति तदग्रसदृशम्।।१२।।

• एकम् एकाकिनम् असन्निहितजनान्तरमित्यर्थः, जनान्तरेण वक्तव्यवस्तुनः विज्ञानस्य अनभिमतत्वादिति भावः।

विश्वाश्वि-मरुदादित्य-रुद्र-साध्यादिभिः सह।
विज्ञापयति यच्छक्रस्तदिदं श्रूयतां प्रभो॥ १६॥
भारावतारणार्थाय वर्षाणामधिकं शतम्।
भगवानवतीर्णोऽत्र त्रिदशैः सम्प्रसादितः॥ १७॥
दुर्वृत्ता निहता दैत्या भुवो भारोऽवतारितः।
त्वया सनाथास्त्रिदशा भवन्तु त्रिदिवे पुनः॥ १८॥
तदतीतं जगन्नाथ वर्षाणामधिकं शतम्।
इदानीं गम्यतां स्वर्गो भवता यदि रोचते॥ १९॥
देवैर्विज्ञाप्यते चेदमथात्रैव रतिस्तव।
तत् स्थीयतां यथाकालमाख्येयमनुजीविभिः॥ २०॥

श्रीभगवानुवाच

यत्त्वमात्थाखिलं• दूत वेदमयेतदहमप्युत।
प्रारब्ध एव हि मया यादवानामपि क्षयः॥ २१॥
भुवो नाद्यापि भारोऽयं यादवैरनिवर्हितैः।
अवतार्य्य करोम्येतत् सप्तरात्रेण सत्वरः॥ २२॥
यथा गृहीताम्भोधेर्दत्त्वाहं द्वारकाभुवम्।
यादवानुपसंहृत्य यास्यामि त्रिदिवालयम्॥ २३॥
मनुष्यदेहमुत्सृज्य सङ्कर्षणसहायवान्।
प्राप्त एवास्मि मन्तव्यो देवेन्द्रेण तथा सुरैः॥ २४॥

---

घातिभिर्मस्त्यघातिभिर्घातितस्य तस्योदरात् जरासंज्ञो लुब्धो व्याधो। जग्राह। स च जराधिष्टातृदेवतांशो यदुवंश एव व्याधत्वं प्राप्त इति हरिवंशे प्रसिद्धम्।।१३-१६।।

पञ्चविंशत्यधिकं शतं शरच्छतं व्यतीताय, पञ्चविंशाधिकमिति शुकोक्तः॥ १७-१९॥

यथाकालं स्वकार्यसिद्धौ सत्याम्॥ २०॥

ब्रह्मशापमिषेण मयैव प्रारब्धः॥ २१॥

• आत्थ कथितवान्, आत्थेति निपातनात् सिद्धम्।

तत् किमर्थं यादवक्षयः, प्रारब्धः, तत्राह भुव इति। अनिवर्हितैः असंहृतैः॥ २२-२३॥

प्राप्त एवास्मीति मन्तव्यः॥ २४॥

जरासन्धादयो येऽन्ये निहता भारहेतवः।
क्षितेस्तेभ्यः कुमारोऽपि यदूनां नापचीयते॥ २५॥
तदेनं सुमहाभारमवतार्य्य क्षितेरहम्।
यास्याम्यमरलोकस्य पालनाय ब्रवीहि तान् • ॥ २६॥

पराशर उवाच

इत्युक्तो वासुदेवेन देवदूतः प्रणम्य तम्।
मैत्रेय दिव्यया गत्या देवराजान्तिकं ययौ॥ २७॥
भगवानप्यथोत्पातान् दिव्यभौमान्तरीक्षगान्।
ददर्श द्वारकापुर्य्यां विनाशाय दिवानिशम्॥ २८॥
तान् दृष्ट्वा यादवानाह पश्यध्वमतिदारुणान्।
महोत्पातान् शमायैषां प्रभासं याम मा चिरम् • ॥ २९॥

पराशर उवाच

एवमुक्ते तु कृष्णेन यादवप्रवरस्ततः।
महाभागवतः प्राह प्रणिपत्योद्धवो हरिम्॥ ३०॥
भगवन् यन्मया कार्य्यं तदाज्ञापय साम्प्रतम्।
मन्ये कुलमिदं सर्वं भगवान् संहरिष्यति।
नाशायास्य निमित्तानि कुलस्याच्युत लक्षये॥ ३१॥

श्रीभगवानुवाच

गच्छं त्वं दिव्यया गत्या मत्प्रसादसमुत्थया।
वदरीमाश्रमं पुण्यं गन्धमादनपर्वते॥ ३२॥

---

यदूनां कुमारो बालोऽपि तेभ्यो नापचीयते न्यूनो न भवति॥ २५॥

• ब्रूहीति वक्तव्ये ब्रवीहीति प्रयोग आर्षः।

ताभ्यां नरनारायणाभ्यं पावितं स्वाधिष्ठानेन तपश्चरेणन च पवित्रतां नीतं महीतलं यत्र तथाभूते।

• पश्यध्वमित्यत्रात्पनेपदमार्षम्। एषां महोत्पातानां शमाय प्रभासं तदाख्यं तीर्थं याम वयमिति शेषः।

नर-नारायणस्थाने तत्पावितमहीतले।
मन्मना मत्प्रसादेन तत्र सिद्धिमवाप्स्यसि॥३३॥
अहं स्वर्गं गमिष्यामि उपसंहृत्य वै कुलम्।
द्वारकाञ्च मया त्यक्तां समुद्रः प्लावयिष्यति • ॥३४॥

पराशर उवाच

इत्युक्तः प्रणिपत्यैनं जगामाथ तदोद्धवः।
नर-नारायणस्थानं केशवेनानुमोदितः॥३५॥
ततस्ते यादवाः सर्वे रतानारुह्य शीघ्रगान्।
प्रभासं प्रययुः सार्द्धं कृष्ण-रामादिभिर्द्विज॥३६॥
प्राप्य प्रययुः प्रयताः स्नातास्ते कुकुरान्धकाः।
चक्रुस्तत्र सुरापानं वासुदेवानुमोदिताः ॥३७॥
पिबतां तत्र वै तेषां संघर्षेण परस्परम्।
अतिवादेन्धनो जज्ञे कलहाग्निः क्षयावहः॥३८॥
जघ्नुः परस्परं ते तु शस्त्रैर्दैवबलात् कृताः।
क्षीणशस्त्राश्च जगृहुः प्रत्यासन्नामथैरकाम्॥३९॥
एरका तु गृहीता तैर्वज्रभूतेव लक्ष्यते।
तया परस्परं जघ्नुः सम्प्रहारे सुदारुणे॥४०॥

---

द्वारकायां मरणे आधिकारिकादेवांशानां यादवानां मुक्तिः स्यात्। तन्माभूदिति स्वर्लोकावासिस्थानं प्रभासं गन्तुं प्ररोचयन्नाह, एषामुत्पातानामुपशमार्थं प्रभासं गच्छामेति॥२९-३४॥

• कस्मिंश्चद् ग्रन्थे संख्यारहितांशोऽधिको दृश्यते।

अनुमोदितः तत्त्वज्ञानोपदेशेनानुगृहीतः॥३५-३७॥

संघर्षेण स्पर्द्धयाऽतिवादोऽधिक्षेपः स एवेन्धनसमुद्दीपको यस्यासौ कलहरूपोऽग्निर्जज्ञे॥३८॥

दैवबलात् कृताः कृष्णविमोहिताः एरकां मुसलचूर्णजां श्रीकृष्णेन प्रागेव प्रभासप्रान्ते उत्पादितत्वात् प्रत्यासन्नाम॥३९॥

प्रद्युम्न-शाम्बप्रमुखाः कृतवर्माथ सात्यकिः।
अनिरुद्धादयश्चान्ये पृथुर्विपृथुरेव च॥४१॥
चारुवर्मा चारुकक्ष तथाक्रूरादयो द्विज।
एरकारूपिभिर्वज्रस्तै निजघ्नुः परस्परम्॥४२॥
निवारयामास हरिर्यादवांस्ते च केशवम्।
सहायं मेनिरे प्राप्तं ते निजघ्नुः परस्परम्॥४३॥
कृष्णोऽपि कुपितस्तेषामेरकामुष्टिमाददे।
वधाय सोऽपि मुसलं मुष्टिर्लोहोऽभवत्तदा॥४४॥
जघान तेन निःशेषान् यादवानाततायिनः।
जघ्नुश्च सहसाभ्येत्य तथान्ये च परस्परम्॥४५॥
ततश्चार्णवमध्येन जैत्रोऽसौ चक्रिणो रथः।
पश्यतो दारुकस्याशु हृतोऽश्वैर्द्विजसत्तम॥४६॥
चक्रं तथ गदा शार्ङ्गं तूणौ शङ्खोऽसिरेव च।
प्रदक्षिणं हरिं कृत्वा जग्मुरादित्यवर्त्मना॥४७॥
क्षणेन नाभवत् कश्चिद् यादवानामघातितः।
ऋते कृष्णं महाबाहुं दारुकञ्च महामुने॥४८॥
चङ्क्रम्यमाणौ तौ रामं वृक्षमूलकृतासनम्।
ददृशाते मुखाच्चास्य निष्क्रामन्तं महोरगम्॥४९॥
निष्क्रम्य स मुखात्तस्य महाभोगो भुजङ्गमः।
प्रययावर्णवं सिद्धैः स्तूयमानस्तथोरगैः॥५०॥

---

सम्प्रहारे युद्धे॥४१॥

निवार्यमाणास्ते यादवाः केशवं तेषां स्वस्वप्रतिपक्षाणां सहायं प्राप्तं मेनिरे। अतस्तद्वाक्यमनादृत्य परस्परं ते च जघ्नुः॥४२॥

सोऽप्येरकामुष्टिस्तदा पुनर्लोहमयं मुसलमेवासीत्॥४३॥

आततायिनः स्ववधे प्रवृत्तान्।

चक्रम्यमाणौ तत्र तत्र भ्रमन्तौ॥४९॥

ततोऽर्ध्यमादाय तदा जलधिः सम्मुखं ययौ।
प्रविवेश च तत्तोयं पूजितः पन्नगोत्तमैः॥ ५१॥
दृष्ट्वा बलस्य निर्याणं दारुकं प्राह केशवः।
इदं सर्वं त्वमाचक्ष्व वसुदेवोग्रसेनयोः॥ ५२॥
निर्याणं बलभद्रस्य यादवानां तथा क्षयम्।
योगे स्थित्वाहमप्येतं परित्यक्षे कलेवरम् * ॥ ५३॥
वाच्यश्च द्वारकावासिजनः सर्वस्तथाहुकः।
यथेमां नगरीं सर्वां समुद्रः प्लावयिष्यति॥ ५४॥
तस्माद्भवद्भिः सर्वैस्तु प्रतीक्ष्यो ह्यर्जुनागमः।
न स्थेयं द्वारकामध्ये निष्क्रान्ते तत्र पाण्डवे॥ ५५॥
तेनैव सह गन्तव्यं यत्र याति स कौरवः।
गत्वा च ब्रूहि कौन्तेयमर्जुनं वचनान्मम॥ ५६॥
पालनीयस्त्वया शक्त्या जनोऽयं मत्परिग्रहः।
इत्यर्जुनेन सहितो द्वारवत्या भवान् जनम्।
गृहीत्वा यातु वज्रश्च यदुराज्येऽभिषिच्यताम्॥ ५७॥

पराशर उवाच

इत्युक्तो दारुकः कृष्णं प्रणिपत्य पुनः पुनः।
प्रदक्षिणञ्च बहुशः कृत्वा प्रायाद् यथोदितम्॥ ५८॥
स गत्वा च तथा चक्रे द्वारकायां तथार्जुनम्।
आनिनाय महाबुद्धिर्वज्रं चक्रे तथा नृपम्॥ ५९॥
भगवानपि गोविन्दो वासुदेवात्मकं परम्।
ब्रह्मात्मनि समारोप्य सर्वभूतेष्वधारयत्॥ ६०॥

---

आत्मनि परं ब्रह्म समारोप्य ब्रह्मैवाहमिति ध्यात्वा तमात्मानं सर्वभूतेष्वधारयत्। सर्वभूतान्यप्यहमेवेति दध्यावित्यर्थः।

* परित्यक्ष्ये परित्यक्ष्यामि, आत्मनेपदमत्रार्षम्।

सम्मानयन् द्विजवचो दुर्वासा यदुवाच ह।
योगयुक्तोऽभवत् पादं कृत्वा जानुनि सत्तम:॥६१॥
आययौ च जरानाम स तदा तत्र लुब्धक:।
मुसलावशेषलोह-सायकन्यस्ततोमर:॥६२॥
स तं पादं मृगाकारमवेक्ष्यारादवस्थित:।
तले विव्याध तेनैव तोमरेण द्विजोत्तम॥६३॥
गतश्च ददृशे तत्र चतुर्बाहुधरं नरम्।
प्रणिपत्याह चैवैनं प्रसीदेति पुन: पुन:॥६४॥
अजानता कृतमिदं यदा हरिणशङ्कया।
क्षम्यतामात्मपापेन दग्धं मा दग्धुमर्हसि॥६५॥

पराशर उवाच

ततस्तं भगवानाह न तेऽस्ति भयमण्वपि।
गच्छ त्वं मत्प्रसादेन लुब्ध स्वर्गं सुरालयम्॥६६॥
विमानमागतं सद्यस्तद्वाक्यसमनन्तरम्।
आरुह्यं प्रययौ स्वर्गं लुब्धकस्तत्प्रसादत:॥६७॥
गते तस्मिन् स भगवान् संयोज्यात्मानमात्मनि।
ब्रह्मभूतेऽव्ययेऽचिन्त्ये वासुदेवमयेऽमले॥६८॥
अजन्मन्यजरेऽनाशिन्यप्रमेयेऽखिलात्मनि।
तत्याज मानुषं देहमतीत्य त्रिविधां गतिम्॥६९॥

---

दुर्वासा यदुवास तद् द्विजवच: सम्मानयन् जानुनि पादं कृत्वार्द्धासनेनोपविश्य योगयुक्तोऽभवत्। एवञ्च किल भारते कथा। कदाचिदुन्मत्तवेशं दुर्वाससमतिथिं भगवान् भोजयामास। तदा च साङ्गं तदुच्छिष्टेन लिम्पन् नालिम्पत्। तदा च कुपित: स प्राह तव पादतलं मरणस्थानं भविष्यतीति। तदेतद्वाक्यं सम्मानयितुं तथोपविष्ट इति॥६१॥

मुषलावशेष लोहमेव एकस्मिन्मुख्ये सायके न्यस्तं तोमराकारं शल्यं येन स:॥६२-६६॥

त्रिविधां गतिं त्रिगुणात्मिकाम्॥६९॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां पञ्चमांशे सप्तत्रिंशोऽध्याय:।

## अष्टत्रिंशोऽध्यायः

### (यादवानामन्त्येष्टिसंस्कारः, परीक्षितो राज्याभिषेकः, पाण्डवानां वनगमनञ्च)

पराशर उवाच

अर्ज्जुनोप तदान्विष्य कृष्णरामकलेवरे।
संस्कारं लम्भयामास तथान्येषामुक्रमात्॥ १॥
अष्टौ महिष्यः कथिता रुक्मिणीप्रमुखास्तु यः।
उपगुह्य हरेर्देहं विविशुस्ता हुताशनम् • ॥२॥
रेवती चैव रामस्य देहमाश्लिश्य सत्तम।
विवेश ज्वलितं वह्निं तत्सङ्गह्लादशीतलम्॥ ३॥
उग्रसेनस्तु तच्छ्रुत्वा तथैवानकदुन्दुभिः।
देवकी रोहिणी चैव विविशुजर्तिवेदसम् • ॥४॥
ततोऽर्ज्जुनः प्रेतकार्यं कृत्वा तेषां यथाविधि।
निश्चक्राम जनं सर्वं गृहीत्वा वज्रमेव च॥ ५॥
द्वारवत्या विनिष्क्रान्ताः कृष्णपत्न्यः सहस्रशः।
वज्रं जनञ्च कौन्तेयः पालयञ्छनकैर्ययौ॥ ६॥
सभा सुधर्म्मा कृष्णेन मर्त्यलोके समुज्झिते।
स्वर्ग जगाम मैत्रेय पारिजातश्च पादपः॥ ७॥
यस्मिन् दिने हरिर्यातो दिवं सन्त्यज्य मेदिनीम्।
तस्मिन्नेवावतीर्णोऽयं कालकायो बली कलिः॥ ८॥

---

• उपगुह्य आलिङ्गय।

• जातवेदसम् अग्निं विविशुः प्राणात्ययायेति शेषः अग्निप्रेवशेन प्राणांस्तत्यजुरिति भावः।

तत्सङ्गेन यः आह लादस्तेन शीतलप्रायम्॥ १-७॥

अवतीर्ण आविर्भूतः कालकाय मलिनाङ्ग॥ ८-९॥

प्लावयामास तां शून्यां द्वारकाञ्च महोदधिः।
यदुदेवगृहं त्वेकं नाप्लावयत सागरः॥ ९॥
नातिक्रान्तुमलं ब्रह्मंस्तदद्यापि महोदधिः।
नित्यं सन्निहितस्तत्र भगवान् केशवो यतः॥ १०॥
तदतीव महत् पुण्य सर्वपातकनाशनम्।
विष्णुक्रीडान्विस्थानं दृष्ट्वा पापात् प्रमुच्यते॥ ११॥
पार्थः पञ्चनदे देशे धनधान्यसमन्विते।
चकार वासं सर्वस्य जनस्य मुनिसत्तम॥ १२॥
ततो लोभः समभवद्दस्यूना निहतेश्वराः।
दृष्ट्वा स्त्रियो नीयमानाः पार्थेनैकेन धन्विना॥ १३॥
ततस्ते पापकर्माणो लोभोपहतचेतसः।
आभीरा मन्त्रयामासुः समेत्यात्यन्तदुर्म्मदाः॥ १४॥
अयमेकोऽर्ज्जुनो धन्वी स्त्रीजनं निहतेश्वरम्।
नयत्यस्मानतिक्रम्य धिगेतद्भवतां बलम्॥ १५॥
हत्वा गर्वसमारूढ़ो भीष्म-द्रोण-जयाद्रथान्।
कर्णादींश्च न जानानि बलं ग्रामनिवासिनाम्॥ १६॥
हे हे यष्टीर्महायामा गृह्णीतायं सुदुर्म्मतिः।
सर्वानिवावजानानि किं वो बाहुभिरुन्नतैः॥ १७॥
ततो यष्टिप्रहरणा दस्यवो लोष्टहारिणः।
सहस्रशोऽभ्यधावन्त तं जनं निहतेश्वरम्॥ १८॥
ततो निवृत्य कौन्तेयः प्राहाभीरान् हसन्निव।
निवर्त्तध्वमधर्म्मज्ञा यदि न स्थ मुमूर्षवः॥ १९॥
अवज्ञाय वचस्तस्य जगृहुस्ते तदा धनम्।
स्त्रीजनञ्चैव मैत्रेय विष्वक्सेनपरिग्रहम्॥ २०॥

---

पञ्चनदाख्येदेशे।।१२-१७।।

यष्टिप्रहरणाः दण्डायुधाः लोष्टहारिणः सरस्वग्राहिणः।।१८।।

ततोऽर्ज्जुनो धनुर्द्दिव्यं गाण्डीवमजरं युधि।
आरोपितुं समारेभे न शशाक स वीर्यवान् • ॥२१॥
चकार सज्यं कृच्छ्राच्च तच्चाभूच्छिथिलं पुनः•।
न सस्मार तथास्त्राणि चिन्तयन्नपि पाण्डवः॥२२॥
शरान्मुमोच वै तेषु पार्थो वैरिष्वमर्षितः।
त्वग्भेद ते परं चक्रुरस्ता गाण्डीवधन्वना॥२३॥
वह्निना येऽक्षया दत्ताः शरास्तेऽपि क्षयं ययुः।
युध्यतः• सह गोपालैरर्ज्जुनस्य भवक्षये॥२४॥
अचिन्तयच्च कौन्तेयः कृष्णस्यैव हि तद्बलम्।
यन्मया शरसङ्घातैः सकला भूभुजो जिताः॥२५॥
मिषतः पाण्डुपुत्रस्य ततस्ता प्रमदोत्तमाः।
आभीरैरपकृष्यन्त्यः कामाच्चान्या प्रवव्रजुः॥२६॥
ततः शरेषु क्षीणेषु धनुष्कोट्या धनञ्जयः।
जघान दस्यूंस्ते चास्य प्रहारान् जहसुर्मुने॥२७॥
प्रेक्षतश्चैव पार्थस्य वृष्णयन्धकवरस्त्रियः • ।
जग्मुरादाय ते म्लेच्छाः सम्मता मुनिसत्तम॥२८॥
ततः सुदुःखितो जिष्णु कष्टं कष्टमिति ब्रुवन्।
अहो भगवता तेन मुषितोऽस्मि रुरोद ह॥२९॥

---

यदि सुमुर्षव न स्थ न भवथ।।।१९-२१।।

• आरोपयितुमिति वक्तव्ये आरोपुतिमिति प्रयोग आर्षः। समारेभे यत्रं चकार।

• सज्यं ज्यायुक्तं समारोपितगुणमिति यावत्।

अस्त्राणि तत्तन्मन्त्रान्।।२२-२३।।

• युध्यत इत्यत्र शतृंप्रयोग आर्षः।

खाण्डवदाहे अग्निना दत्ताः भवक्षये उद्भवनाशे॥२४-२६॥

धनुष्कोट्या चापाग्रेण दण्डेनैव जघान। जहसुर्दण्डप्रहारेऽर्ज्जुनादपि तेषामेव वैदग्ध्यात्॥२७॥

• प्रेक्षय इत्यत्र शतृप्रयोग आर्षः।

तद्धनुस्तानि चास्त्राणि स रथस्ते च वाजिनः।
सर्वमेकपदे नष्टं दानमश्रोत्रिये यथा॥ ३०॥•
अहोऽतिबलवद्दैवं विना तेन महात्मना।
यदसामर्थ्ययुक्तेऽपि नीचवर्गे जयप्रदम् ॥ ३१॥
तौ बाहू स मे मुष्टिः स्थानं तत् सोऽस्मि चार्ज्जुनः।
पुण्यनैव विना तेन गतं सर्वमसारताम्॥ ३२॥
ममार्ज्जुनत्वं भीमस्य भीमत्व तत्कृतं ध्रुवम्।
विना तेन यदाभीरैर्जितोऽहं कथमन्यथा॥ ३३॥
इत्यं वदन् ययौ जिष्णुर्मथुराख्यं पुरोत्तमम्।
चकार तत्र राजानं वज्रं यादवनन्दनम्॥ ३४॥
त ददर्श ततौ व्यासं फाल्गुन काननाश्रयम्।
तमुपेत्य महाभागं विनयेनाभ्यवादयत्॥ ३५॥
तं वन्दमानं चरणाववलोक्य मुनिश्चिरम्।
उवाच पार्थ विच्छायः कथमत्यन्तमीदृशः॥ ३६॥
अवीरजोऽनुगमनं ब्रह्महत्याथवा कृता।
दृढ़ाशाभङ्गदुःखी वा भ्रष्टच्छायोऽसि साम्प्रतम् • ॥३७॥

---

• अहोऽतिबलवदित्यत्र सन्धिरार्षः। यत् दैवं असामर्थ्ययुक्ते जययोग्यताराहिते नीचवर्गेऽपि जयप्रदम्।

एकपदे एकस्मिन्नेव क्षणे। अश्रोत्रिये वेदवर्जिते॥ ३०-३४॥

इन्द्रप्रस्थाद् गजसाह्वयं गच्छन्नर्जुनः क्वचित् काननाश्रयं व्यासं ददर्श॥ ३५॥

कथमीदृशोऽत्यन्तं विच्छायो निःश्रीकोऽसीति चिरमुवाच पृच्छ्यमानो दुःखवशात्तस्मिन् प्रतिवक्तुमशक्नुवति चिरं पुनः पुनरुवोचेत्यर्थः॥ ३६॥

• भ्रष्टा अपगता छाया कान्तिर्यस्य सः।

स्वयमेव निःश्रीकत्वे हेतून बहुधा विकल्पयन्नाह, **'अवीरज'** इति पञ्चभिः। अवीनां रजोऽनु तत्पृष्ठतः किं गमनं कृतम्, उपलक्षणञ्चैतन्निषिद्धानामजखरादिरजसाम् अनुगमनस्य। अवीरजोऽनुगमनं रजस्वलागमनं वा स्यात् स्त्रीा धर्मिण्यविरजा इत्यमरः। अयं मां रक्षिष्यतीति कस्यचित् या दृढा आशा तस्या भङ्गेन वा दुःखी॥ ३७॥

सान्तानिकादयो वा ते याचमाना निराकृताः।
अगम्यस्त्रीरतिर्वा त्वं तेनासि विगतप्रभः॥ ३८॥
भुक्तोऽप्रदाय विप्रेभ्य एको मिष्टमथी भवान्।
किं या कृष्णवित्तानि हृतानि भवतार्ज्जुन॥ ३९॥
कच्चित्वं शूर्पवातस्य गोचरत्वं गतोऽर्ज्जुन।
दुष्टचक्षुर्हतो वापि निःश्रीकः कथमन्यथा॥ ४०॥
स्पृष्टो नखाम्भसा चाथ घटाम्भःप्रोक्षितोऽपि वा।
तेनातीवासि विच्छायो न्यूनैर्वा युधि निर्ज्जितः॥ ४१॥
ततः पार्थो विनिःश्वस्य श्रूयतां भगवन्निति।
प्रोक्त्वा यथावदाचष्ट व्यासायात्मपराभवम्॥ ४२॥

अर्जुन उवाच

यद्बलं यच्च नस्तेजो यद्वीर्यं यत्पराक्रम।
या श्रीश्छाया च नः सोऽस्मान् परित्यज्य गतो हरः॥ ४३
इतरेणेव महता स्मितपूर्वाभिभाषिणा।
हीना वयं मुने तेन जातास्तृणमया इव॥ ४४॥
अस्त्राणां सायकानाञ्च गाण्डीवस्य तथा मम्।
सारता याभवन् मूलं स गतः पुरुषोत्तमः॥ ४५॥
यस्यावलोकनादस्मान् श्रीर्जयः सम्पदुन्नतिः।
न तत्याज स गोविन्दस्त्यक्त्वास्मान् भगवान् गतः॥ ४६॥

---

सन्तानार्थम् उद्वोढुकमो धनार्थी सान्तानिकः। आदिशब्दामनूक्तान्यप्यप्रत्याख्येयानि गृह्यन्ते तद् सान्तानिकं याजमानमाध्वरं सर्ववेदसम् गुर्वर्थं पितृमात्रर्थं स्वाध्यायायुपलापिन इति॥ ३८-४०॥

तोयपूर्णे घटे नीयमाने घटत-उच्चलत्तोयेनोक्षितः सिक्तः॥ ४१-४२॥

बलं शक्तिस्तेजः सामर्थ्यं, वीर्य प्रभावः, पराक्रमौ विक्रान्तिः, श्री सम्पत् छाया कन्तिः॥ ४३॥

इतरेण प्राकृतेन मित्रेणैव। मृगादिबिभीषितार्थं क्षेत्रेषु निर्मितास्तृणमया धन्विन इव वयं जाताः॥ ४४॥

भीष्मद्रोणाङ्गराजाद्यास्तथा दुर्योधनादयः।
यत्प्रभावेण निर्दग्धाः स कृष्णस्त्यक्तवान् भुवम्॥४७॥
निर्यौ-वन-हतश्रीका भ्रष्टच्छायेव मेदिनी।
विभाति तात नैकोऽहं विरहे तस्य चक्रिणः॥४८॥
यस्यादुभावाद् भीष्माद्यैर्मयग्नौ शलभायितम्।
विना तेनाद्य कृष्णेन गोपालैरस्मि निर्ज्ञितः॥४९॥
गाण्डीवं त्रिषु लोकेषु ख्यातिं यदनुभावतः।
गतं तेन विनाभीरलगुडैस्तन्निराकृतम्॥५०॥
स्त्रीसहस्राण्यनेकानि मन्नाथानि महामुने।
यततो मम नीतानि दस्युभिर्लगुडायुधैः• ॥५१॥
आनीयमानमाभीरैः कृष्ण कृष्णावरोधनम् •।
हृतं यष्टिप्रहरणैः परिभूय बलं मम॥५२॥
निःश्रीकान्ता न मे चित्रं यजीवामि तदद्भुतम्।
न चावमानपङ्कांकी निर्लज्ञोऽस्मि पितामह॥५३॥

व्यास उवाच

अलं ते व्रीडया पार्थ न त्वं शोचितुमर्हसि।
अवेहि सर्वभूतेषु कालस्य गतिरीदृशी॥५४॥

---

अङ्गराज्याद्याः कर्णाद्याः॥४७॥

निर्गतं यौवनं शस्यादिप्रसवसामर्थ्य यस्याः सा निर्यौवना॥४८॥

अग्नितुल्ये मयि शलभायितं शलभवदाचरितम्॥४९॥

अहं नाथः पालको येषां तानि यततो यतमानस्य मामनादृत्य॥५१॥

• ययत इति शतृप्रयोग आर्षः। लगुडायुधैः यष्टिदण्डमात्रप्रहरणैः। नीतानि हृतानि।

• आनीयमानं मया नेत्रा सतेयि शेषः कृष्णस्य अवरोधनभ् अन्तःपुरिकाकुलं यष्टिप्रहरणैः लगुड्मात्रायुधैः गोपालैरिति शैषः, हृतम्।

कृष्ण हे व्यास॥५२॥

कालो भवाय भूतानामभवाय च पाण्डव ।
कालमूलमिदं ज्ञात्वा भव स्थैर्यधनोऽर्ज्जुन• ॥५५॥
नद्यः समुद्रा गिरयः सकला च वसुन्धरा।
देवा मनुष्याः पशवस्तरवः ससरीसृपाः॥५६॥
सृष्टाः कालेन कालेन पुनर्यास्यन्ति संत्रयम्।
कालात्मकमिदं सर्वं ज्ञात्वा शममवाप्नुहि॥५७॥
यच्चाह कृष्णमाहत्म्यं तत्तथैव धनञ्जय।
भारावतारकार्यार्थमवतीर्णः स मेदनीम्• ॥५८
भाराक्रान्ता धरा याता देवानां समितिं पुरा।
तद्भारमवतीर्णोऽसौ कालरूपी जनार्द्दनः॥५९॥
तच्च निष्पादितं कार्यमशेषा भुभृतो हताः।
वृष्ण्यन्धकुलं सर्वं तथा पार्थोपसंहृतम्॥६०॥
न किञ्चिदन्यत् कर्त्तव्यमस्य भूमितले प्रभोः।
अतो गतः स भगवान् कृतकृत्यो यथेच्छया॥६१॥
सृष्टिं सर्गे करोत्येष देवदेवः स्थितौ स्थितिम्।
अन्तेऽन्ताय समर्थोऽयं साम्प्रतं हि यथाकृतम्॥६२॥
तस्मात् पार्थं न सन्तापस्त्वया कार्यः पराभवात्।
भवन्ति भवकालेषु पुरुषाणां पराक्रमाः॥६३॥
त्वयैकेन हता भीष्म-द्रोण-कर्णादयो नृपाः।
तेषामर्ज्जुनकालोत्थः किं न्यूनाभिभवो न सः॥६४॥
विष्णोस्तथानुभावेन यथा तेषां पराभवः।
ततस्तथैव भवतो दस्युभ्योऽन्ते तदुद्भवः• ॥६५॥

---

• अभवाय अभावाय विनाशायेति यावत्।

• तस्याः धराया भारं तं भारं वा हर्त्तुमिति शेषः असौ अवतीर्णः मर्त्यधाम्नि नर रूपेणेति शेषः। भवाय उद्भवाय कालमूलं कालाधीनम्॥५३-६३॥

• अनुभावेन प्रभावेण, 'अनुभावः प्रभावे स्तादि' ति कोषात्। तद्द्भुवः तस्य पराभवस्य उद्भवः उत्पत्तिः।

स देवोऽन्यशरीराणि समाविश्य जगत्स्थितम्।
करोति सर्वभूतानां नाशं चान्ते जगत्पतिः॥६६॥
भवोद्भवे च कौन्तेय सहायोऽभूज्जनार्दनः।
भवान्ते त्वद् विपक्षास्ते केशवेनावलोकिताः॥६७॥
कः श्रद्दध्यात् सगाङ्गेयान् हन्यास्त्वं सर्वकौरवान्।
आभीरेभ्यश्च भवतः कः श्रद्दध्यात् पराभवम्॥६८॥
पार्थैतत् सर्वभूतस्य हरेर्लीलाविचेष्टितम्।
त्वया यत् कौरवा ध्वस्ता यदाभीरैर्भवान् जितः॥६९॥
गृहीता दस्युभिर्याश्च भवतः शोचिता स्त्रियः ।
तदप्यहं यथावृत्तं कथयामि तवार्जुन• ॥७०॥
अष्टावक्रः पुरा विप्रो जलवासरतोऽभवत्।
बहून वर्षगणान् पार्थ गृणन् ब्रह्म सनातनम्॥७१॥
जितेष्वसुरसङ्घेषु मेरुपृष्ठे महोत्सवः।
बभूव तत्र गच्छन्त्यो ददृशुस्तं वरस्त्रियं॥७२॥
रम्भातिलोत्तमाद्याश्च शतशोऽथ सहस्रशः।
तुष्टुवुस्तं महात्मानं प्रशशंसुश्च पाण्डव॥७३॥
आकण्ठमग्नं सलिले जटाभारधरं मुनिम्।
विनयावनताश्चैनं प्रणेमुः स्तोत्रतत्पराः॥७४॥

---

यथैकस्मात् न्यूनात् त्वतो भीष्मादीनां पराभवः कालकृताः, तथैव न्यूनेभ्यः आभीरेभ्यः कालोद्भवः पराभव इत्युपपादयति त्वयैकेनेति षड्भिः॥६४-६५॥

सर्वभूतानां शरीराणि समाविश्य जगतः स्थितिं नाशञ्च स एव करोति॥६६॥

भवोद्भवे भाग्यस्योदये भवान्ते भाग्यनाशे॥६७॥

तासाञ्च स्त्रीणां दस्युभिहरणम् अष्टावक्रशापात् प्राप्तं केन वारयितुं शक्यमित्याख्यायिकां कथयन्नाह, गृहीता इत्यादिना दस्युहस्तं गमिष्यथेत्यन्तेन॥७०॥

• शोचिताः भवतः साम्प्रतिकशोकगोचरीभूताः स्त्रियः कृष्णावरोधभूता रमण्यः।

तुष्टुवुः प्रगीतैः वाक्यैः। प्रशंसुश्च अप्रगीतैर्वाक्यैः॥७३॥

यथा यथा प्रसन्नोऽसौ तुष्टुवुस्तं तथा तथा।
सर्वास्ताः कौरवाश्रेष्ठ वरिष्ठं तं द्विजन्मनाम्॥७५॥

अष्टावक्र उवाच

प्रसन्नोऽहं महाभागा भवतीनां यदिष्यते।
मत्तस्तद्व्रियता सर्वं प्रदास्याम्यतिदुर्लभम्॥७६॥
रम्भातिलोत्तमाद्यास्तं वैदिक्योऽप्सरसोऽब्रुवन।
प्रसन्ने त्वय्यपर्याप्तं किमस्माकमिति द्विज॥७७॥
इतरास्त्वब्रुवन् विप्र प्रसन्नो भगवान् यदि।
तदिच्छामः पतिं प्राप्तुं विप्रेन्द्र पुरुषोत्तमम्॥७८॥

व्यास उवाच

एवं भविष्यतीत्युक्त्वा उत्ततार जलान्मुनिः।
ददृशुस्तास्तमुत्तीर्णं विरूपं वक्रमष्टधा॥७९॥
तं दृष्ट्वा गूहमानानां यासां हासः स्फुष्टोऽभवत्।
ता! शशाप मुनिः कोपमवाप्य कुरुनन्दन॥८०॥
यस्माद् विश्वरूपं मां ज्ञात्वा हासावमानना •।
भवतीभिः कृता तस्मादेष शापं ददामि वः॥८१॥
मत्प्रसादेन भर्त्तारं लब्ध्वा तं पुरुषोत्तमम्।
मच्छापोपहताः सर्वा दस्युहस्तं गतिष्यथ॥८२॥
इत्युदीरितमाकर्ण्य मुनिस्ताभिः प्रसादितः।
पुनः सुरेन्द्रलोकं वै प्राह भूयो गमिष्यथ॥८३॥

---

वैदिक्यः वेदप्रसिद्धाः॥७७-७८॥

उत्ततार बहिर्निर्गतः॥७९॥

• विरूपं विकृताकारं रूपं स्वरूपं यम्य तम्, हासेन अवमानना अवज्ञा, अथवा हासः परिहास एव अवमानना।

गृहमानानां हासमप्रकटयन्तीनाम्॥८०-८२॥

एवं तस्य मुनेः शापादष्टावक्रस्य केशवम्।
भर्त्तारं प्राप्य ता दस्युहस्तं याता वराङ्गनाः॥८४॥
तत्त्वया नात्र कर्त्तव्यः शोकोऽल्पोऽपि हि पाण्डव।
तेनैवाखिलाथेन सर्वं तदुपसंहृतम्॥८५॥
भवतां चोपसंहारमासन्नं तेन कुर्वता।
बलं तेजस्तथा वीर्यं माहात्म्यं चोपसंहृतम्॥८६॥
जातस्य नियतो मृत्युः पतनञ्च तथोन्नतेः।
विप्रयोगावसानश्च संयोगः सञ्चयात् क्षयः॥८७॥
विज्ञाय न बुधाः शोकं न हर्षमुपयान्ति ये।
तेषामेवेतरे चेष्टां शिक्षन्तंः सन्ति तादृशाः॥८८॥
तस्मात्वया नरश्रेष्ठ ज्ञात्वैत्द् भ्रातृभिः सह।
परित्यज्याखिलं तन्त्रं गन्तव्यं तपसे वनम्॥८९॥
तद् गच्छ धर्मराजाय निवेद्यैतद्वचो मम।
परश्वो भ्रातभिः सार्द्धं यथा यासि तथा कुरु॥९०॥

पराशर उवाच

इत्युक्तोऽभ्येत्य पार्थाभ्यां यमाभ्याञ्च तथार्ज्जुनः।
दृष्टं चैवानुभूतञ्च कथितं तेष्वशेषतः॥९१॥•

---

पुनः सुरेन्द्रलोकं गमिष्यथेति प्राह॥८३-८५॥

माहात्म्यं गौरवम्॥८६॥

उन्नतेः सकाशात् पतनञ्च सञ्चयादनन्तरं क्षयञ्च॥८७॥

तादृशो हर्षशोकाविहीनाः सन्ति॥८८॥

तन्त्रं परित्यज्य परिकरं त्यक्त्वा॥८९-९०॥

• अर्जुनेन समीरितं कथितम्, व्यासस्य वाक्यम् अर्जुनंन प्रति उक्तपूर्वमिति शेषः।
दृष्टं यदुकुलक्षयादि। अनुभूतम् आभीरेभ्यः पराभवादि॥९१-९॥

व्यासवाक्यञ्च ते सर्वे श्रुत्वार्ज्जुनसमीरितम्।
राज्ये परीक्षितं कृत्वा ययुः पाण्डुसुता वनम्॥९२॥
इत्येतत् तव मैत्रेय विस्तरेण मयोदितम्।
जातस्य यद्यदोर्वंशे वासुदेवस्य चेष्टितम्॥९३॥

इति श्रीविष्णुपुराणे पञ्चमांशे अष्टत्रिंशः अध्यायः।

---

कृष्णलीलां निगमयति इत्येतदिति॥९३॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां पञ्चमांशे सप्तदशोऽध्यायः।

# षष्ठांशः

## प्रथमोऽध्यायः

### (कलिधर्मनिरूपणम्)

मैत्रेय उवाच

**व्याख्याता भवता सर्ग-वंश-मन्वन्तरस्थितिः।**
**वंशानुचरितञ्चैव विस्तरेण महामुने॥ १॥**
**श्रोतुमिच्छाम्यहं त्वत्तो यथावदुपसंहृतिम्।**
**महाप्रलयसंस्थानं कल्पान्ते च महामुने॥ २॥**

पराशर उवाच

**मैत्रेय श्रूयतां मत्तो यथावदुपसंहृतिः।**
**कल्पान्ते प्राकृते चैव प्रलयो जायते यथा॥ ३॥**
**अहोरात्रं पितृणान्तु मासोसोऽब्दस्त्रिदिवौकसाम।**
**चतुर्युगसहस्त्रे तु ब्रह्मणो द्वे द्विजोत्तम● ॥४॥**

---

श्रीगणेशाय नमः। सर्गादिफलमाख्यातुमुक्तमात्यन्तिकं लयम्। षष्ठेऽंशेऽन्यविरागाय लयान्तरनिरूपणम्। प्रथमां शमारभ्योक्तमर्थमनुवदन् बुभुत्सितमर्थं पृच्छति,—'**व्याख्याते**' ति द्वाभ्याम्॥ १॥

यथावत् सर्वथा उपसंहृतिम् आत्यन्तिकं प्रलयन्तिकंः कल्पान्ते ब्रह्मणो दिनान्ते॥ २॥

प्राकृते महाप्रलये॥ ३॥

कल्पप्रमाणं दर्शयन्नाह,—'**अहोरात्र**' इति। मनुष्याणां मासः पितृणामहोरात्रः, मनुष्याणामब्दो देवानामहोरात्रः। द्वे चतुर्युगसहस्त्रे ब्रह्मणोऽहोरात्रः॥ ४॥

• मास इति मनुष्याणामिति शेषः। पितृणां पितृलोकगतानाम् अहोरात्रः, अब्दः वस्तरः मनुष्याणामिति शेषः। त्रिदिवौकसां देवानाम् अहोरात्रः। द्वे चतुर्युगसहस्त्रे मनुष्याणामिति शेषः, ब्रह्मणः अहोरात्रक्षः एकैक इति शेषः।

कृतं त्रेता द्वापरश्च कलिश्चैव चतुर्युगम्।
दिव्यैर्वर्षसहस्त्रैस्तु तद् द्वादशभिरुच्यते॥५॥
चतुर्युगाण्यशेषाणि सदृशानि स्वरूपतः।
आद्यं कृतयुगं मुक्त्वा मैत्रेयान्ते तथा कलिम्॥६॥
आद्ये कृतयुगे सर्गो ब्रह्मणा क्रियते यतः।
क्रियते चोपसंहारस्तथान्ते च कलौ युगे॥७॥

मैत्रेय उवाच

कलेः स्वरूपं भगवन् विस्तराद् वक्तुमर्हसि।
धर्म्मश्चतुष्पाद्भगवन् यस्मिन् विप्लवमृच्छति॥८॥

पराशर उवाच

कलेः स्वरूपं मैत्रेय यद्भवान् प्रष्टुमिच्छति।
तन्निबोध समासन्नं वर्त्तते यन्महामुने॥९॥
वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम्।
न साम-ऋग्-यजुर्वेदविनिष्पादनहेतुका॥१०॥
विवाहा न कलौ धर्म्म्या न शिष्य-गुरुसंस्थितिः।
न दाम्पत्यक्रमो नैव वह्निदैवात्मकः क्रमः॥११॥

---

चतुर्युगमानमाह,—'कृतमि' ति॥५॥

चतुर्युगस्वरूपमाह,—'चतुर्युगाणी' ति॥६॥

आद्यं तयोर्वैसादृश्ये हेतुमाह,—'आद्य' इति। अपर्यवसित एव पूर्वप्रश्नस्योत्तरे लब्धावसरोऽन्यत् पृच्छति,— 'कलेरि'ति । विप्लवं नाशम्॥८॥

उत्तरमाह,—'कलेरि' त्यादिना यावदुत्तराध्यायसमाप्ति॥९॥

वर्णानामाश्रमाणाञ्च य आचारस्तदनुसारिणी नृणां प्रवृत्तिर्न भवति सामादिवेदोक्तकर्मविनिष्पादनं हेतुर्यस्याः सा। तथाभूता च न भवति, किन्तु अर्थकामप्रधानैर्वेत्यर्थः॥१०॥

धर्म्मा इति ब्राह्मणादिषु विवाहेषु यो विहितः स एव तस्येति व्यवस्था नास्तीत्यर्थः। शिष्यस्त गुरोश्च सम्यक् स्थितिः शुश्रूषानुग्रहरूपा नास्ति। दाम्पत्ये यः क्रमः परस्परं वृत्तिनियमः नास्ति। वह्नौ होमादिप्रकारनियमः देवेषु पूजादिक्रमश्च नास्ति॥११॥

यत्र तत्र कुले जातो बली सर्वेश्वरः कलौ।
सर्वेभ्य एव वर्णेभ्यो योग्यः कन्यावरोधने॥ १२॥
येन केनैव योगेन द्विजातिर्दीक्षितः कलौ।
यैर सैव मैत्रेय प्रायश्चित्तक्रिया कलौ॥ १३॥
सर्वमेव कलौ शास्त्रं यस्य यद्वचनं द्विज।
देवताश्च कलौ सर्वाः सर्वः सर्वस्य चाश्रमः॥ १४॥
उपवासस्तथायासो वित्तोत्सर्गस्तथा कलौ।
धर्मो यथाभिरुचितैरनुष्ठानैरनुष्ठितः॥ १५॥
वित्तेन भविता पुंसां स्वल्पेनाढ्यमदः कलौ।
स्त्रीणां रूपमदश्चैव केशैरेव भविष्यति॥ १६॥
सुवर्णमणिरत्नादौ वस्त्रे चापि क्षयं गते।
कलौ स्त्रियो भविष्यन्ति तदा केशैरलङ्कृताः॥ १७॥
परित्यक्षन्ति भर्त्तारं वित्तहीनं तथा स्त्रियः।
भर्त्ता भविष्यति कलौ वित्तवानेव योषिताम्॥ १८॥
यो यो ददाति बहुलं स स स्वामी तदा नृणाम्।
स्वामित्वहेतुः सम्बन्धो भावी नाभिजनस्तदा॥ १९॥

---

सर्वेश्वरो नियन्ता दण्डधर इति यावत्। स एव सर्ववर्णेभ्यः कन्याया अवरोधने परिग्रहे योग्या भविष्यति। कन्यावरोधनीति पाठे सवर्णत्वादिनियमं विना सर्वेभ्योऽपि वर्णेभ्यो धनी धनवान् कन्याया वरो योग्यो भविष्यतीत्यर्थः॥ १२॥

येन केनाप्युपायेन निषिद्धद्रव्यादिनापि दीक्षितः स्यात्। यैव सैवेति प्रातश्चित्तक्रियालोकरञ्जनमात्रार्था, न तु पापक्षयार्था॥ १३॥

सर्वाः स्वमतिविलासिता देवताः॥ १४॥

विधिक्रमं विना यथाभिरुचितैरनुष्ठानैः कृत उपवासादिः धमः स्यात्, आयासः कृच्छ्रादिः॥ १५-१८॥

यो यो हीनोऽपि बहुलं धनं ददाति, स स स्वामी उत्तमानामपि। तत्र हेतुः बहुद्रव्यदानादिना यः सम्बन्धः, स एव स्वामित्वे हेतुर्भावी। न त्वभिजनः सत्कुलीनत्वम्। स्वामिहेतुसम्बन्धो भविताभिजन इति पाठे स्वामित्वहेतुना बहुद्रव्यादानादिना सम्बन्ध एव अभिजनो कुलीनत्व भविष्यतीत्यर्थः॥ १९॥

गृहान्ता द्रव्यसङ्घाता द्रव्यान्ता च तथा मतिः।
अर्थाश्चात्मोपभोगान्ता भविष्यन्ति कलौ युगे॥ २०॥
स्त्रियः कलौ भविष्यन्ति स्वैरिण्यो ललितस्पृहाः।
अन्यायावाप्तवित्तेषु पुरुषाश्च स्पृहालवः॥ २१॥
अभ्यर्थितोऽपि सुहृदा स्वार्थहानिं न मानवः।
पणार्द्धार्द्धमात्रेपि करिष्यति तदा द्विज॥ २२॥
समानं पौरुषञ्चेतो भावि विप्रेषु वै कलौ।
क्षीरप्रदानसम्बन्धि भावि गोषु च गौरवम्॥ २३॥
अनावृष्टिभयप्रायाः प्रजाः क्षुद्भयकातराः।
भविष्यन्ति तदा सर्वा गगनासक्तदृष्टयः॥ २४॥
कन्दपर्णफलाहारास्तापसा इव मानवाः।
आत्मानं पातयिष्यन्ति तदा वृष्ट्यादिदुःखिताः॥ २५॥

---

द्रव्याणां संघाताः सञ्चया अपि गृहान्ताः। गृह एव अन्तः सतासिर्येषां ते तथा बहुधनादिसङ्ग्रहेऽपि गृहनिर्माणादिष्वेव क्षीणा भविष्यन्ति। न तु धर्मोपयोगिन इत्यर्थः। नृणां मतिश्च द्रव्यान्ता द्रव्यार्जनमात्रनिष्ठा न त्वात्मज्ञानोपयोगिनी। अर्थाश्च भोग्याः स्त्रक्चन्दनादय आत्मोपभोगान्ताः स्वभोगमात्रपर्यवसायिनः न त्वतिथिदेवताद्यर्था भविष्यन्ति॥ २०॥

स्वैरिण्यः पुंश्चल्य। तत्र हेतुः सुन्दरे स्पृहा यासां ताः॥ २१॥

पणो वराटिकाशीतिः, तदर्धार्धं काकिणी, तदर्धमात्रेऽपि विषये स्वार्थस्य हानिं न करिष्यति। कपर्दिकादशकमपि न त्यक्ष्यतीत्यर्थः। पञ्च गुञ्जा तुलितं स्वर्ण वापणः तत्राप्यर्धाधार्धमपि द्रष्टव्यम्॥ २२॥

समानपौरुषम् अस्मासु विप्रेष च पुरुषत्वं समानं तस्मादस्मतो विप्रेषु को विशेषइत्यनादरयुक्तं चित्तं शूद्रादेर्भविष्यतीत्यर्थः। समानपौरुषामिति पाठे सगर्वं निष्ठु रञ्चेत्यर्थः। क्षीरेति महिष्यादिष्विव क्षीरप्रदानतो गोषु सत्कारो भविष्यति न तु जातेरित्यर्थः॥ २३॥

क्षुद्भयेन कातराः व्याकुलाः प्रजाः मेघप्रतीक्षया गगने आसक्तदृष्टयो भविष्यन्ति॥ २४॥

पातयिष्यन्ति क्लेशयिष्यन्ति॥ २५॥

**दुर्भिक्षमेव सततं तदा क्लेशमनीश्वराः।**
**प्रापस्यन्ति व्याहतसुखप्रमोदा मानवाः कलौ॥ २६॥**
**अस्नानभोजिनो नाग्निदेवतातिथिपूजनम्।**
**करिष्यन्ति कलौ प्राप्ते न च पित्र्योदकक्रियाम्॥ २७॥**
**लोलुपा ह्रस्वदेहाश्च वह्वन्नादनतत्पराः।**
**बहुप्रजाल्पभाग्याश्च भविष्यन्ति कलौ स्त्रियः॥ २८॥**
**उभाभ्यामेव पाणिभ्यां शिरः कण्डूयनं स्त्रियः।**
**कुर्वन्त्यो गुरुभर्त्तृणामाज्ञां भेत्स्यन्त्यनादृताः॥ २९॥**
**स्वपोषणपराः क्षुदा देहसंस्कारवर्ज्जिताः।**
**परुषानृतभाषिण्यो भविष्यन्ति कलौ स्त्रियः॥ ३०॥**
**दुःशीला दुष्टशीलेषु कुर्वन्त्यः सततं स्पृहाम्।**
**असद्वृत्ता भविष्यन्ति पुरुषेषु कुलाङ्गनाः॥ ३१॥**
**वेदादानं करिष्यन्ति वटवश्च तदाव्रताः.**
**गृहस्थाश्च न होष्यन्ति न दास्यन्त्युचितान्यपि॥ ३२॥**
**वनवासा भविष्यन्ति ग्राम्याहारपरिग्रहाः।**
**भिक्षवश्चापि मित्रादिस्नेहसम्बन्धयन्त्रिताः॥ ३३॥**

---

अनीश्वरा निर्धनाः। व्याहतं सुखं प्रमोदश्च हर्षो येषां ते ॥२६-२७॥

बहुप्रजेत्यत्र सन्धिरार्षः॥ २८॥

अनादृताः आदरशून्याः॥ २९॥

परुषमनृतञ्च भाषितुं शीलं या यासां ताः॥ ३०॥

दुष्टशीलेषु असद्वृत्तेषु स्पृहां कुर्वन्त्यो व्यभिचारिण्यो भविष्यन्ति॥ ३१॥

आश्रमाणा विप्लवमाह,—'**वेदानानमि**' ति। अव्रता वेदव्रतादिहीना वटवो ब्रह्मचारिणो वेदाध्ययनं करिष्यन्ति॥ ३२॥

वनवासाः वानप्रस्थाः भिक्षवः सन्न्यासिनोऽपि पितृपुत्रादीन विहाय अन्यान् मित्रादीन् सम्पाद्य तेषु स्नेहसम्बन्धेन यन्त्रो यन्त्रणं तद्वशत्वम् इतो जातो येषांते तथा भूता भविष्यन्ति॥ ३३॥

अरक्षितारो हर्त्तारः शुल्कव्याजेन पार्थिवाः।
हारिणो जनवित्तानां सम्प्राप्ते तु कलौ युगे॥ ३४॥
यो योऽश्वरथनागाढ्यः स स राजा भविष्यन्ति।
यश्च यश्चाबलः सर्वः स स भृत्याः कलौ युगे॥ ३५॥
वैश्याः कृषिवाणिज्यादि सन्त्यज्य निजकर्म यत्।
शूद्रवृत्त्या प्रवत्स्यन्ति कारुकर्मोपजीविनः॥ ३६॥
भैक्ष्यव्रतास्तथा शूद्रा प्रव्रज्यालिङ्गिनोऽधमाः।
पाषण्डसंश्रयाः वृत्तिमाश्रयिष्यन्त्यसंस्कृताः॥ ३७॥
दुर्भिक्षकरपीडाभिरतीवोपहता जनाः।
गवेधुककदन्नाद्यान् देशान् यास्यन्ति दुःखिताः॥ ३८॥
वेदमार्गे प्रलीने च पाषण्डाढ्ये ततो जने।
अधर्मवृद्ध्या लोकानां स्वल्पमायुर्भविष्यति॥ ३९॥
अशास्त्रविहितं धोरं तप्यमानेषु वै तपः।
नरेषु नृपदोषेण बालमृत्युर्भविष्यति॥ ४०॥
भवित्री योषितां सूतिः पञ्चषट्सप्तवार्षिकी।
नवाष्टदशवर्षाणां मनुष्याणां तथा कलौ॥ ४१॥
पालितोद्भवश्च भविता तदा द्वादशवार्षिकः।
नातिजीवति वै कश्चित् कलौ वर्षाणि विंशतिम्॥ ४२॥
अल्पप्रज्ञा वृथालिङ्गा दुष्टान्तःकरणाः कलौ।
यतस्ततौ विनङ्क्ष्यन्ति कालेनाल्पेन मानवाः॥ ४३॥

---

पार्थिवा अरक्षितारः प्रजापालनमकुर्वन्त एव हर्त्तारः करग्राहिणः, तथा शुल्कच्छलेन वणिगजनवित्तानामपहारिणो भविष्यन्ति॥ ३४-३५॥

शूद्रवृत्त्या सेवया प्रकर्षेण वत्स्यन्ति वासं करिष्यन्ति वर्त्तिष्यन्त इत्यर्थः। प्रवत्स्यन्तीति पाठः सुगमः। कारूणां वरुडादीनां कर्म कटक्रियादि उपजीवितुं शीलं येषां ते॥ ३६-३७॥

गवेधुकादिकदन्नाद्यान् देशान् यास्यन्ति॥ ३८-४०॥

तथा मनुष्याणां पुंसां सूतिः।।४१।।
विंशतिवर्षानतिक्रम्य न जीवति।।४२-४३।।

यदा यदा हि पाषण्डवृद्धिर्मैत्रेय लक्ष्यते।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणैः॥४४॥
यदा यदा सतां हानिर्वेदमार्गानुसारिणाम्।
प्रारम्भाश्चावसीदन्ति यदा धर्म्मभृतां नृणाम्।
तदानुमेयं प्राधान्यं कलेर्मैत्रेय पण्डितैः॥४५॥
यदा यदा न यज्ञानामीश्वरः पुरुषोत्तमः।
इज्यते पुरुषैर्यज्ञैस्तदा ज्ञेयं कलेर्बलम्॥४६॥
न प्रीतिर्वेदवादेषु पाषण्डेषु यदा रतिः।
कलेर्वृद्धिस्तदा प्राज्ञैरनुमेया विचक्षणैः॥४७॥
कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम्।
नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता नराः॥४८॥
किं वेदैः किं द्विजैर्देवैः किं शौचेनाम्बुजन्मना।
इत्येवं विप्र वक्ष्यन्ति पाषण्डोपहता नराः॥४९॥
स्वल्पाम्बुवृष्टिः पर्ज्जन्यः शस्यं स्वल्पफलं तथा।•
फलं तथाल्पसारञ्च विप्र प्राप्ते कलौ युगे॥५०॥
शाणीप्रायाणि वस्त्राणि शमीप्राया महीरुहाः।
शूद्रप्रायास्तथा वर्णा भविष्यन्ति कलौ युगे॥५१॥
अणुप्रायाणि धान्यानि अजाप्रायं तथा पयः।
भविष्यति कलौ प्राप्ते उशीरञ्चानुलेपनम्॥५२॥

---

कलेः प्राबल्ये लिङ्गान्याह यदा यदेति पञ्चभिः।।४४-४८।।

अम्बुजन्मना वारिणा कृतेन शोचेन किम्।।४९।।

अल्पसारं निर्वीर्यम्।।५०।।

• पर्जन्यः शब्दायमानो मेघः, स्वल्पा अम्बुवृष्टिः जल वर्षणं यस्य तथाभूतः, अतिगर्जन्नपि स्वल्पमात्रजलवर्षीत्यर्थः।'पर्जन्यो रसदब्देन्द्रा' विति कोषात्।

शाणी शणसूत्रमयी पट्टिका तत्तुल्यानि वस्त्राणि।।५१।।

उशीरं सुरभितृणविशेषः।।५२।।

श्वश्रू-श्वशूरभूयिष्ठा गुरवश्च नृणां कलौ।
श्यालाद्या हारिभार्याश्च सुहृदो मुनिसत्तम॥५३॥
कस्य माता पिता कस्य यदा कर्म्मानुगः पुमान्।
इति चोदाहरिष्यन्ति श्वशुरानुगता नराः॥५४॥
वाङ्मनःकायिकैर्दोषैरभिभूताः पुनः पुनः।
नराः पापान्यनुदिनं करिष्यन्त्यल्पमेधसः • ॥५५॥
निःसत्त्वानामशौचानां निःश्रीकाणां तथा नृणाम्।
यद्ययद्दुःखाय यत् सर्वं कलि काले भविष्यति॥५७॥
निःस्वाध्यायवषट्कारे स्वधास्वाहाविवर्ज्जिते।
तथा प्रविरलो विप्र क्वचिल्लोको निवत्स्यति॥५७॥
तत्राल्पेनैव यत्नेन पुण्यस्कन्धमनुत्तमम्।
करोति यं कृतयुगे क्रियते तपसा हि सः॥५८॥

इति श्रीविष्णुपुराणे षष्ठांशे प्रथमः अध्यायः॥

---

शस्यं शस्यबीजम् स्वल्पफलम् अल्पमात्रफलदायि।

श्यालाः पत्नीभ्रातरः हारिण्यो मनोहरा भार्या येषां ते हारिभार्याश्च सुहृदः तथाविधेषु नृषु नराणां सख्यं भवति इत्यर्थः॥५३॥

कर्मात्मकः स्वधर्माधीनजन्मा॥५४-५५॥

• अल्पा मेधा बुद्धिः येषां ते अल्पमेधसः बहुव्रीहौ मेधाशब्दस्य असन्तत्वमानुशासनिकम्।

यद्यद्वस्तु तत् सर्व दुःखार्थमेव भविष्यति॥५६॥

क्वचित् कीकटादौ॥५७॥

कलेरकं महान्तं गुणमाह तत्रेति अल्पेनैव यत्नेन हरिकीर्त्तनादिनायं पुण्यस्कन्धं पुण्यराशिं नरः करोति, स हि कृतयुगे तपसा महता क्रियते य इति पाठे यः कोऽपि अतिमलिनोऽपीत्यर्थः। अतोऽनेनैकेन गुणेन कलिः सर्वश्रेष्ठ इत्यर्थः॥५८॥

**इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां**

## द्वितीयोऽध्यायः

### (वेदव्यासेन कलियुगस्य, शूद्राणाम्, स्त्रियाञ्च महत्वस्य वर्णनम्)

पराशर उवाच

व्यासश्चाह महाबुद्धिर्यदत्रैव हि वस्तुनि।
तच्छ्रूयतां महाभाग गदतो मम तत्त्वतः॥ १॥
कस्मिन् कालेऽल्पको धर्म्मो ददाति सुमहत् फलम्।
मुनीनामित्यभूद् वादः कैश्चासौ क्रियते सुखम्॥ २॥
सन्देहनिर्णायार्थाय वेदव्यासं महामुनिम्।
ययुस्ते संशयं प्रष्टुं मैत्रेय मुनिपुङ्गवाः॥ ३॥
ददृशुस्ते मुनि तत्र जाह्नवीसलिले द्विजाः।
वेदव्यासं महाभागमर्द्धस्नातं महामतिम्॥ ४॥
स्नानावसानं तत्तस्य प्रतीक्षन्तो महर्षयः •।
तस्थस्तटे महानद्यास्तरुषण्डमुपाथिताः॥ ५॥
मग्नोऽथ जाह्नवीतोयादुत्थायाह सुतो मम।
कलिः, साधुः कलिः साधुरित्येवं शृण्वतां वचः॥ ६॥
तेषां मुनीनां भूयश्च ममज्ज स नदीजले।
उत्थाय साधु साध्विति शुद्र धन्योऽसि चाब्रवीत्॥ ७॥
स निमग्नः समुत्थाय पुनः प्राह महामुनिः।
योषितः साधुदन्यास्तास्ताभ्यो धन्यतरोऽस्ति कः॥ ८॥

---

अतिनिकृष्टोऽपि कलिरल्पायासेन महाफलप्रदायीत्युपपादयिष्यन्, प्रसङ्गान्निकृष्टयोः स्त्रीशूद्रयोरपि गुणाधिक्यं वक्तुमितिहासं प्रस्तौति, व्यासश्चेति, वस्तुनि अर्थे॥ १॥

वादो विचारः कैश्चाधिकारिभिरसौ धर्मः सुखमनायासेन क्रियते॥ २॥

संशयविषयभूतमर्थं प्रष्टुं ययुः॥ ३-४॥

• प्रतीक्षन्त इत्यत्र ईक्षतेरात्मनेपदिनः शतृप्रयोग आर्षः। महत्या नद्याः जाह्नव्याः तटे।

स्नानसमाप्तिं प्रतीक्षमाणास्तरूणां षण्डं समूहमुपाश्रितास्तस्थुः स्थिताः। उत्थाय उन्मज्य तेषां मुनीनां शृण्वतां कलिः साधुः साधुरित्येवं वाचा मम सुतो व्यास आहेत्यन्वयः॥ ६॥

ततः स्नात्वा यथान्यायमायान्तं कृतसत्क्रियम्।
उपतस्थुर्महाभागं मुनयस्ते सुतं मम॥ ९॥
कृतसंवन्दनाश्चाह कृतासनपरिग्रहान्।
किमर्थमागता यूयमिति सत्यवतीसुतः॥ १०॥
तमूचुः संशयं प्रष्टुं भवन्तं वयमागता।
अलं तेनास्तु तावन्नः कथ्यतामपरं त्वया॥ ११॥
कलिः साध्विति यत् प्रोक्तं शूद्रः साध्विति योषितः ।
यदाह भगवान् साधु धन्याश्चेति पुनः पुनः• ॥ १२॥
तत् सर्वं श्रोतुमिच्छामो न चेद् गुह्यं महामुने।
तत् कथ्यतां ततो हृत्स्थं प्रक्ष्यामस्त्वां प्रयोजनम्॥ १३॥
इत्युक्तो मुनिभिर्व्यासः प्रहस्येदमथाब्रवीत्।
श्रूयतां भो मुंनिश्रेष्ठा यदुक्तं साधु साध्विति॥ १४॥
यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन यत्।
द्वापरे यच्च मासेन अहोरात्रेण तत् कलौ॥ १५॥
तरसोब्रह्मचर्य्यस्य जपादेश्च फलं द्विजाः।
प्राप्नोति पुरुषस्तेन कलिः साध्विति भाषितम्॥ १६॥
ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन्।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्त्य केशवम्॥ १७॥

---

तदेवं मुनिभिरपृष्टेनैव कस्मिन् व्यासेन कालेऽल्पको ददाति सुमहत् फलमित्येतत् प्रश्नोत्तरतया कलेः साधुत्वमुक्तम्। कैश्चासौ क्रियते सुखमित्येतन्निर्णयार्थं शूद्रस्य स्त्रीणाञ्च धन्यत्वमाह शूद्र धन्योऽसीति। बुद्धिऽसन्निधानात् प्रत्यक्षमिवोक्तम्।अत्र कलेः साधुत्वं शूद्रस्य धन्यत्वञ्च योषितां साधुत्वञ्च धन्यतरत्वञ्चेति यथोत्तर गुणाधिक्यं गङ्गायामघमर्षेण भगवद्ध्यानपूते चित्ते प्रतीतमित्युन्मज्योन्मज्य वारत्रयोक्त्या दर्शितम्॥७-९॥

कृतं संवन्दनमभिवादनं यैस्तान्॥ १०॥

तेन तावदलमस्तु तत्तावदास्तामित्यर्थः॥ ११-१३॥

• मासेन अहोरात्रेण इत्युभयत्र अपवर्गे तृतीया. तेन हेतुना कलिः साध्विति भाषितं मयेति् शेषः।

हृदिस्थप्रश्नस्यैवोत्तरं दत्तमप्यविज्ञाय पृष्छन्तीति प्रहस्येदमब्रवीत्॥ १४॥

धर्म्मात्कर्षमतीवात्र प्राप्नोति पुरुषः कलौ।
अल्पायासेन धर्म्मज्ञास्तेन तुष्टोऽस्म्यहं कलेः॥ १८॥
व्रतचर्य्यापरैर्ग्राह्यो वेदः पूर्वं द्विजातिभिः।
ततः स्वधर्म्मसम्प्राप्तैर्यष्टव्यं विधिनाध्वरैः॥ १९॥
वृथा कथा वृथाभोज्यं वृथेज्या च द्विजन्मनाम्।
पतनाय तथा भाव्यं तैस्त्वसंयमिभिः सदा॥ २०॥
असम्यकक्करणे दोषस्तेषां सर्वेषु कर्मसु।
भोज्यपेयादिकञ्चैषां नेच्छाप्रासिकरं द्विजाः॥ २१॥
पारतन्त्र्यं समस्तेषु तेषां कार्य्येषु वै ततः• ।
जयन्ति ते निजात् लोकान् क्लेशेन महता द्विजाः॥ २२॥
द्विजशुश्रूषयैवैष पाकयज्ञाधिकारवान्।
निजान् जयति वै लोकाञ् शूद्रो धन्यतरस्ततः॥ २३॥
भक्ष्याभक्ष्येषु नास्यास्ति पेयापेयेषु वै यतः।
नियमो मुनिशार्द्दूलास्तेनासौ साध्वितीरितः॥ २४॥
स्वधर्म्मस्याविरोधेन नरैर्लब्धं धनं सदा।
प्रतिपादनीयं पात्रेषु यष्टव्यञ्च यथाविधि॥ २५॥

---

यतकृते दशभिरिति द्वाभ्यामल्पेन कालेन कलौ धर्मोत्कर्षः। ध्यायन् कृत इति द्वाभ्यामल्पायासेनेतिः कलेः साधुत्वमुक्तं हायनेन वर्षेण॥ १५-१८॥

शूद्रस्याल्पायासेन पुरुषार्थसिद्धिं वक्तुं त्रैवर्णिकानां तत्रातिक्लेशमाह,—'**व्रतचर्यापरैरि**'ति चतुर्भिः। व्रतचर्योपहारैरिति पाठे उपहरणमुपहारः गुरवे सर्वलाभार्पणैरित्यर्थः॥ १९॥

वृथा कथा कृष्णकीर्त्तिरहिता, वृथा भोज्यं हरेरनिवेदितुं, वृथेज्या दम्भलोभादिपूर्विका॥ २०॥

इच्छया प्रासिकारं प्रासञ्च न भवति, किन्तु चोदनया॥ २१-२२॥

• तेषां द्विजन्मनां सर्वेषु कार्येषु कर्त्तव्यार्थेषु पारतन्त्र्यं शास्त्रपारवश्यम् कठोरशास्त्रनियमपराधीनतेति यावत्।

शूद्रस्य तादृक्क्लेशाभावेन धन्यत्वमुक्तमुत्याह ''**द्विजशूश्रूषते**' ति द्वाभ्याम्॥ २३-२४॥

स्त्रीणामनायासेन श्रयःप्राप्त्या धन्यत्वं वक्तं पुरुषाणां तत् प्रासौ क्लेशमाह—'**स्वधर्मस्ये**' ति त्रिभिः॥ २५॥

तस्यार्ज्जने महाक्लेशः पालने च द्विजोत्तमाः।
तथा सद् विनियोगाय विज्ञेयं गहनं नृणाम्॥ २६॥
एभिरन्यैस्तथा क्लेशैः पुरुषा द्विजसत्तमाः।
निजान् जयन्ति वै लोकान्प्राजापत्यादिकान् क्रमात्॥ २७
योषिच्छुश्रूषणं भर्तुः कर्म्मणा मनसा गिरा।
कुर्वतो समवाप्नोति तत्सालोक्यं यतो द्विजाः॥ २८॥
नातिक्लेशेन महता तानेव पुरुषो यथा।
तृतीयं व्याहृतं तेन मया साध्विति योषितः॥ २९॥
एतद् वः कथितं विप्रा यन्निमित्तमिहागताः।
तत् पृच्छध्वं यथाकामं सर्वं वक्ष्यामि वः स्फुटम्॥ ३०॥

पराशर उवाच

ततस्ते मुनयः प्रोचुर्यत् प्रष्टव्यं महामुने।
अन्यस्मिन्नेव तत् पुष्टे यथावत् कथितं त्वया॥ ३१॥
ततः प्रहस्य तान् प्राह कृष्णद्वैपायनो मुंनिः।
विस्मयोत्फुल्लनयनांस्तापसांस्तानुपागतान्॥ ३२॥
मयैष भवतां प्रश्नो ज्ञातो दिव्येन चक्षुषा।
तता हि वः प्रसङ्गेन साधु साध्विति भाषितम्॥ ३३॥
स्वल्पेनैव प्रयत्नेन धर्म्म सिध्यति वै कलौ।
नरैरात्मगुणाम्भोभिः क्षालिताखिलकिल्विषैः॥ ३४॥

---

एवं नृणां गहनं क्लेशः॥ २६-२७॥

योषितः तादृक् क्लेशो नास्तीत्याह—**'योषिदि'** ति द्वाभ्याम्। पुरुषो यथा महता क्लेशेन प्राजापत्यादीन् लोकान् प्राप्नोति तथा नातिक्लेशेन तांस्तांल्लोकान् प्राप्नोतीत्यर्थः॥ २८-३१॥

इदानीन्तु मदुक्तमेतैर्ज्ञातमिति पुनः प्रहस्याह। अपृष्टैनैव व्यासेन कथमेवं निर्णयः कृतः इति विस्मयोत्फुल्लनयनान्॥ ३२-३३॥

उक्तमर्थं निगमयति—**' स्वल्पेनैवे'** ति चतुर्भिः। आत्मनो हरेर्गुणा एवाम्भांसि तैः क्षालितमखिलं किल्विषं येषां तैर्नरैः कर्त्तृभिधर्मः सिध्यति॥ ३४॥

शूद्रैश्च द्विजशुश्रूषातत्परैर्मुनिसत्तमाः।
तथा स्त्रीभिरनायासं पतिशुश्रूषयैव हि॥ ३५॥
ततस्त्रितमयप्येतन्मम धन्यतमं मतम्।
धर्म्मसंसाधने क्लेशो द्विजातीनां कृतादिषु॥ ३६॥
भवद्भिर्यदभिप्रेतं तदेतत् कथितं मया।
अपृष्टेनापि धर्मज्ञाः किमन्यत् कथ्यतां द्विजाः॥ ३७॥
ततः संम्पूज्य ते व्यासं प्रशस्य च पुनः पुनः।
यथागतं द्विजा जग्मुर्व्यासोक्तिक्षतसंशयाः॥ ३८॥
भवतोऽपि महाभाग! रहस्यं कथितं मया॥ ३९॥
अत्यन्तदुष्टस्य कलेरयमेको महान् गुणः।
कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत्॥ ४०॥
यच्चाहं भवता पृष्टो जगतामुपसंहतिम्।
प्राकृतामान्तरालाञ्च तामप्येष वदामि ते॥ ४१॥

इति श्रीविष्णुपुराणे षष्ठांशे द्वितीयः अध्यायः॥

---

यदभिप्रेतं ज्ञातुमिष्टम्॥ ३७-३८॥

प्रासङ्गिकं परिसमाप्य प्रस्तुतमनुसन्धत्ते—'यच्चाह' मिति। आन्तरालां ब्रह्मणो दिने दिने भवाम्॥ ४०॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां षष्ठांशे द्वितीयोऽध्यायः॥

# तृतीयोऽध्यायः

## (निमेषादिकालमानस्य नैमित्तिकप्रलयस्य च वर्णनम्)

पराशर उवाच

सर्वेषामेव भूतानां त्रिविधः प्रतिसञ्चरः।
नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको मतः॥ १॥
ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते प्रतिसञ्चरः।
आत्यन्तिकश्च मोक्षाख्यः प्राकृतो द्विपरार्द्धिकः॥ २॥

मैत्रेय उवाच

परार्द्धसंख्यां भगवन्! ममाचक्ष्व यया तु सः।
द्विगुणीकृतया ज्ञेयः प्राकृतः प्रतिसञ्चरः॥ ३॥

पराशर उवाच

स्थानात् स्थानं दशगुणमेकस्माद् गण्यते द्विज।
ततोऽष्टादशमे स्थाने परार्द्धमभिधीयते॥ ४॥
परार्द्धद्विगुणं यत्तु प्राकृतः प्रलयो द्विज!
तदाव्यक्तेऽखिलं व्यक्तं स्वहेतौ लयमेति वै॥ ५॥

---

प्रतिसञ्चरः प्रलयः। प्राकृतो द्विपरार्द्धिक इति द्विगुणे परार्धे ब्रह्मायुःसमाप्तौ भवतः। प्रकृतौ तत् कार्य्ये लय-प्राकृतः॥ २॥

प्रथमांशे परार्द्धमानमुक्तमेव। तथापि तदेव मानं परार्धस्य उक्तप्रकारान्तरमप्यस्तीत्याह—'**स्थानात् श्थानं दशगुण**' मिति। यथाह वायुः—'कोटिकोटिसहस्राणि परार्द्धमिति कीर्त्यते। परार्द्धंदिगुणञ्चापि परमायुर्मनीषिणः। स्थानं दशगुणं विद्याद् दशाद्दशशतं ततः। सहस्रमयुतं तस्मान्नियुतं प्रयुतं ततः। अर्वुदं निर्वुदञ्चैव वृन्दञ्चैव ततः परम्। खर्वञ्चैव निखर्वञ्च शंखः पद्मं तथैव च। समुद्रो मध्यमन्तश्च परार्ध परमेव च। एवमष्टादशैतानि पदानि गणनाविधौ। कल्पसंख्याप्रवृत्तस्तु परार्धो ब्रह्मणः स्मृतः। तावच्छेषस्य कालोऽन्यत् तदन्ते प्रतिसृज्यत इति। एकं दशगुणं दश दश दशगुणाः शतम्। शतं दशगुणं सहस्रमित्येवमङ्कस्थानानां वामतोऽष्टादशे स्थाने परार्धं भवति। कल्पाश्चात्रासंख्येयाः। कल्पसंख्याप्रवृत्तस्तु परार्द्धो ब्रह्मण इति वायूक्तेः। ततश्च

**निमेषो मानुषो योऽयं मात्रामात्रप्रमाणतः।**
**तैः पञ्चदशभिः काष्ठा त्रिंशत् काष्ठास्तथा कला:॥६॥**
**नाडिका तु प्रमाणेन कला दश च पञ्च च।**
**उन्मानेनाम्भसः सा तु पलान्यर्द्धत्रयोदश॥७॥**
**हेममाषैः कृतच्छिद्रश्चतुर्भिश्चतुरङ्गलैः।**
**मागधेन प्रमाणेन जलप्रस्थस्तु स स्मृतः॥८॥**

---

कल्पानां कोटिकोटिसहस्राणि परार्द्धं, तद्‌द्विगुणं परं ब्रह्मायुरित्युक्तं भवति। यत्तूक्तं **प्रथमांशे**– '**निजेन तस्य मानेन आयुर्वर्षशतं स्मृतम्। तत् पराख्यं तदर्द्धन्तु परार्द्धमभिधीयते। एवन्तु ब्रह्मणो वर्षमेव वर्षशतं हि तदि**'त्यादि। तस्मिन् पक्षे कल्पानां षट्‌त्रिंशत् सहस्राणि ब्रह्मण आयुरित्युक्तं स्यात्। अनयोश्च पक्षयोर्महाकल्पभेदेन व्यवस्था। यद्वा वायूक्तकल्पशब्देन लक्षणया तदंशभूतदिव्यमानुषवर्षादिभिः परार्द्धसंख्यासम्पादनेनाविरोधः समर्थनीयः॥४-५॥

नैमित्तिकं लयं प्रपञ्चयिष्यन्निमेषादिक्रमेण प्रथमांशोक्तमेव कल्पप्रमाणमनुस्मारयति–'**निमेष**' इति सप्तभिः। मात्रैव मात्रा प्रमाणं यस्य सः। एकमात्रलध्वक्षरोच्चारणकालसम्मितो हि निमेषः, '**निमेषकालतुल्या हि मात्रा लध्वक्षरञ्च यदि**'ति **ब्रह्माण्डोक्तेः**॥६॥

नाडिकाज्ञानोपायमाह–'**उन्मानेने**' ति सार्द्धेन। अम्भसः उन्मानेन उन्मीयते अनेनेत्युन्मानं पात्रम् अर्धेन योगे त्रयोदश सार्द्ध द्वादशेत्यर्थः। उन्मानरूपेण घटितानि सार्द्धद्वादशपलानि सा नाडिका ज्ञातव्येत्यर्थः॥७॥

किं प्रमाणं तत् पात्र कार्यं तदाह –'**मागधेन प्रमाणेन जलप्रस्थस्तु स स्मृतः**' इति सार्द्धद्वादशपलजलेन हि मगधदेशप्रस्थः पूर्यते, षोडशपलजलेन हि मागधदेशाख्यः प्रस्थः पूर्यते। यदाह **स्कन्धः**, ''**पलञ्च कुडलः प्रस्थ आढको द्रोण एव च। धान्यमानेन बोद्धव्याः क्रमशोऽमी चतुर्गुणाः**'' तत् प्रमाणं पात्रं कार्यमित्यर्थसिद्धम्। ननु तथापि पात्रेण कथं नाडिकाज्ञानं क्रियापरिच्छेद्यत्वात् कालस्येत्याशंक्य क्रियासिद्धये प्रस्थं विशिनष्टि–'**हेमे**'ति। माषः पञ्चगुञ्चः। हेम्नो माषैश्चतुर्भिशचतुरङ्गुलशालाकारूपेण परिषतैः कृतच्छिद्रः। एतदुक्तं भवति–सार्द्धवद्वादशपलताम्रमयं मागधप्रस्थसम्मितमूर्द्धवायतं पात्रञ्चतुर्माषचुतरङ्गुलहेमशलाकया कृताधश्छिद्रं जले स्थापिते तेन च्छिद्रेण यावता कालेन पूर्य्यते, तावान् कालो नाडिकेति। तथा च **शुकः**–''**द्वादशार्द्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः। स्वर्णमाषैः कृतच्छिद्रं यावत् प्रस्थजलप्लुतम्**'' हति॥८॥

नाड़िकाभ्यामथ द्वाभ्यां मुहूर्त्तो द्विजसत्तम।
अहोरात्रं मुहूर्त्तास्तु त्रिंशन्मासो दिनैस्तथा॥ ९॥
मासैर्द्वादशभिर्वर्षैमहोरात्रन्तु तद्दिवि।
त्रिभिर्वर्षशतैर्वर्षं षष्ट्या चैवासुरद्विषाम्॥ १०॥
तैस्तु द्वादशसाहस्रं चतुर्युगमुदाहृतम्।
चतुर्युगसहस्रन्तु कथ्यते ब्रह्मणो दिनम्॥ ११॥
स कल्पोऽप्यत्र मनवश्चतुर्दश महामुने।
तदन्ते चैव मैत्रेय! ब्राह्मो नैमित्तिको लयः॥ १२॥
तस्य स्वरूपमत्युग्रं मैत्रेय गदतो मम।
शृणुष्व प्राकृतं भूयस्तव वक्ष्याम्यहं लयम्॥ १३॥
चतुर्युगसहस्रान्ते क्षीणप्राये महीतले।
अनावृष्टिरतीवोग्रा जायते शतवार्षिकी॥ १४॥
ततो यान्यल्पसाराणि तानि सत्त्वान्यशेषतः।
क्षयं यान्ति मुनिश्रेष्ठ! पार्थिवान्यत्र पीड़नात्॥ १५॥
ततः स भगवान् विष्णु रुद्ररूपधरोऽव्ययः।
क्षयाय यतते कर्त्तुमात्मस्थाः सकलाः प्रजाः॥ १६॥
ततः स भगवान् विष्णुर्भानोः सप्तसु रश्मिषु।
स्थितः पिबत्यशेषाणि जलानि मुनिसत्तम॥ १७॥
पीत्वाम्भांसि समस्तानि प्राणिभूमिगतानि वै।
शोषं नयति मैत्रेय! समस्तं पृथिवीतलम्॥ १८॥

---

तथा त्रिंशता दिनैः मास इत्यर्थः॥ ९-१२॥

नैमित्तिकलयप्रकारमाह—'**तस्य स्वरूप**'मिति यावदध्यायसमाप्ति॥ १३॥

क्षीणप्राये दुर्भिक्षादिभिः॥ १४-१५॥

क्षयाय रुद्ररूपधरः सन् आत्मस्थाः स्वस्मिन् लीनाः प्रजाः कर्त्तुंप्रयतते॥ १६॥

सप्त रश्मयः कूर्मोक्ताः—'**सुषुम्नो हरिकेशश्च विश्वकर्मा तथैव च। विश्ववर्चास्तथा दर्चा वसुः संयद् वसुस्तथे**' ति॥ १७॥

सरित्-समुद्र-शैलेषु शैल प्रस्रवणेषु च।
पातालेषु च यत्तोयं तत् सर्वं नयति क्षयम्॥ १९॥
ततस्तस्यानुभावेन तोयाहारोपबृंहिताः।
त एव रश्मयः सप्त जायन्ते सप्त भास्कराः॥ २०॥
अधश्चोर्द्ध्वञ्च ते दीप्तास्ततः सप्त दिवाकराः।
दहन्त्यशेषं त्रैलोक्यं सपातालतलं द्विज॥ २१॥
दह्यमानन्तु तैर्दीप्तैस्त्रैलोक्यं द्विज! भास्करैः।
साद्रिनद्यर्णवाभोगं निःस्नेहमति जायते॥ २२॥
ततो निर्दग्धवृक्षाम्बु त्रैलोक्यमखिलं द्विज।
भवत्येका च वसुधा कूर्म्मपृष्ठोपमाकृतिः॥ २३॥
ततः कालाग्निरुद्रोऽसौ भूत्वा सर्वहरो हरिः।
शेषनिःश्वाससम्भूतः पातालानि बभस्त्यधः॥ २४॥
पातालानि समस्तानि स दग्ध्वा ज्वलनो महान्।
भूमिमभ्येत्य सकलं बभस्ति वसुधातलम्॥ २५॥
भुवर्लोकं तत सर्वं स्वर्लोकञ्च सुदारुणः।
ज्वालामालामहावर्त्तस्तत्रैव परिवर्त्तते॥ २६॥
अम्बरीषमिवाभाति त्रैलोक्यमखिलं तदा।
ज्वालावर्त्तपरीवारमुपक्षीणचराचरम्॥ २७॥

---

प्राणिगतानि रक्तवसादीनि, भूमिगतानि तडागादिस्थितानि॥ १८-१९॥

सप्तरश्मयः भास्कराः सप्त-अरोगो भ्राजः पटलः पतङ्गः स्वर्णरोमा ज्योतिष्मान् विभावसुः सप्त सूर्याः इति श्रुत्युक्ताः॥ २०-२१॥

आभोगो विस्तारः, निःस्नेहं अतिरूक्षम्॥ २२-२३॥

बभस्ति भस्मीकरोति॥ २४-२५॥

ज्वालानां मालस्तासां महान्त आवर्त्ता यस्मिन् सः। तत्रैव त्रैलोक्यमध्य एव॥ २६॥

अम्बरीषं भर्जनभाण्डम्॥ २७॥

ततस्तापपरीतास्तु लोकद्वयनिवासिनः।
कृताधिकारा गच्छन्ति महर्लोकं महामुने॥ २८॥
तस्मादपि महातापतप्ता लोकास्ततः परम्।
गच्छन्ति जनलोकं ते दशावृत्या परैषिणः॥ २९॥
ततो दग्ध्वा जगत् सर्वरुद्ररूपी जनार्द्दनः।
मुखनिःश्वासजान् मेघान् करोति मुनिसत्तम॥ ३०॥
ततो गजकुलप्रख्यास्तडित्वन्तो निनादिनः।
उत्तिष्ठन्ति तदा व्योम्नि घोराः संवर्त्तका घनाः॥ ३१॥
केचिन्नीलोत्पलश्यामाः केचित् कुमुदसन्निभाः।
धूमवर्णा घनाः केचित् किंचित् पीताः पयोधराः॥ ३२॥
केचिद्रासभवर्णाभा लाक्षारसनिभास्तथा।
केचिद्वैदूर्य्यसङ्काशा इन्द्रनीलनिभाः परे॥ ३३॥
शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभास्तथा।
इन्द्रगोपनिभाः केचिन्मनःशिलनिभास्तथा॥ ३४॥

---

लोकद्वयनिवासिनः दिवि भुविस्थाः कृताधिकाराः अनुष्ठितस्वीयविनियोगाः॥ २८॥

दशायाः तत्रत्यफलफोगावस्थायाः आवृत्या परिवृत्या परैषिणः उद्धर्वलोकैषिणः। अन्ये त्वाहुः—त्रैलोक्येऽपि ये आधिकारिका मन्वाद्यास्ते कृताधिकारा भोगप्रक्षीणकर्माणः सन्तो महर्ल्लोकं प्राप्य तस्मादपि तप्ताः तद्वासिभिः सह सशरीरा जनं यान्ति, तेषां मन्वादीनां मध्ये ये परैषिणः परवस्तुप्राप्तीच्छवः ते दशवारमावृत्या क्रमात्तपः सत्यादिद्वारा ततः परमीश्वरं विशन्ति। अन्ये तु त्रैलोक्यस्था जीवाः स्वात्मनि संह्रियन्ते. यथाह वायुः, पितृभिर्मनुभिश्चैव सार्धं सप्तर्षिभिस्तथा। यज्वानश्चैव येऽप्यन्ये तद्भक्ताश्चैव तैः सह। महर्लोकं गमिष्यन्ति त्यक्त्वा त्रैलोक्यमीश्वराः। महर्लोकं परित्यज्य गणास्ते वै चतुर्दश। सशरीराः श्रयन्ते वै जनलोकं सहानुगाः। एवं देवाः सपितर ऋषयो मनवश्च ह। पुत्रै सहोर्द्ध गच्छन्ति व्यावर्त्तन्ते च तैः सह। जनलोकात् सुराः सर्वे दश कल्पान् पुनः पुनः। पर्यायकाले सम्प्राप्ते सम्भूता नैधनेन ह। अवश्यं भावितार्थेन सम्बध्यन्ते तदा तु ते। निवर्त्तन्ते तथावृतौ तेषां शक्यो न विस्तरः। महाञ्जनश्चैव जनात्तपश्च तपात् ततस्तानि भवन्ति सत्ये। मन्वन्तराणां परिवर्त्तनानि मुञ्चन्ति सत्येन ततोऽन्तराणि। तपोऽभियोगाद्विषयप्रमाणाद्विशन्ति ते शाश्वतमेव देवम्।

चाषपत्रनिभाः केचिदुत्तिष्ठन्ति घना घनाः।
केचित् पुरवराकाराः केचित् पर्वतसन्निभाः॥ ३५॥
कूटागारनिभाश्चान्ये केचित् स्थूलनिभा घनाः।
महारावा महाकायाः पूरयन्ति नभस्तलम्॥ ३६॥
वर्षन्तस्ते महासारैस्तमग्निमतिभैरवम्।
शमयन्त्यखिलं विप्र! त्रैलोक्यान्तरविस्तृतम्॥ ३७॥
नष्टे चाग्नौ शतं तेऽपि वर्षाणामनिवारिताः।
प्लावयन्तो जगत् सर्वं वर्षन्ति मुनिसत्तम॥ ३८॥
धाराभिरक्षमात्राभिः प्लावयित्वाखिलं भुवम्।
भुवर्लोकं तथैवोर्द्ध्वं प्लावयन्ति दिवं द्विज॥ ३९॥
अन्धकारीकृते लोके नष्टे स्थावरजङ्गमे।
वर्षन्ति ते महामेघा वर्षाणामधिकं शतम्॥ ४०॥

इति श्रीविष्णु पुराणे षष्ठांशे तृतीयः अध्यायः।

---

अथात्मनि महातेजाः सर्वमास्थाय कर्मकृत्। ततः स्वरात्रिं स्वपिति तमस्येकार्णवे जले।' इति॥ २९-३४॥

चाषो नीलपक्षः शकुनः॥ ३५॥

कूटागारं गृहविशेषः॥ ३६-४०॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां षष्ठांशे तृतीयोऽध्यायः।

# चतुर्थोऽध्यायः

## (प्राकृतप्रलयवर्णनम्)

पराशर उवाच

सप्तर्षिस्थानमाक्रम्य स्थितेऽम्भसि महामुने।
एकार्णवं भवत्येव त्रैलोक्यमखिलं ततः॥ १॥
मुखनिःश्वासजो विष्णोर्वायुस्तान् जलदांस्ततः।
नाशयित्वा तु मैत्रेय! वर्षाणामधिकं शतम्॥ २॥
सर्वभूतमयोऽचिन्त्यो भगवान् भूतभावनः।
अनादिरादिर्विश्वस्य पीत्वा वायुमशेषतः॥ ३॥
एकार्णवे ततस्तस्मिन् शेषशय्यास्थितः प्रभुः।
ब्रह्मरूपधरः शेते भगवानादिकृद्धरिः॥ ४॥
जनलोकगतैः सिद्धैः सनकाद्यैरभिष्टुतः।
ब्रह्मलोकगतैश्चैव चिन्त्यमानो मुमुक्षुभिः॥ ५॥
आत्ममायामयीं दिव्यां योगिनिद्रां समास्थितः।
आत्मानं वासुदेवाख्यं चिन्तयन् परमेश्वरः॥ ६॥
एष नैमित्तिको नाम मैत्रेय! प्रतिसञ्चरः।
निमित्तं तत्र यच्छेते ब्रह्मरूपधरो हरिः॥ ७॥
यदा जागर्त्ति विश्वात्मा स तदा चेष्टते जगत्।
निमीलत्येतदखिलं योगशय्याशयेऽच्युते॥ ८॥
पद्मयोनेर्दिनं यत्तु चतुर्युगसहस्रवत्।
एकार्णवाप्लुते लोके तावती रात्रिरिष्यते॥ ९॥

---

तदेवं नैमित्तिकं त्रैलोक्यप्रलयं निरूप्य तत्कालीनां स्थितिं निरूपयन्नाह—'**सप्तर्षिस्थान**'मित्यादिना '**अनावृष्ट्ये**' त्यतः प्राक्तनेन ग्रन्थेन॥ १-३॥

शेष एव शय्या तामाश्रितः शेते॥ ४-७॥

स यदा जागर्त्ति तदा जगच्चेष्टते सृष्ट्युन्मुखं भवति, निमीलति लयं याति॥ ८॥

ततः प्रबुद्धो रात्र्यन्ते पुनः सृष्टिं करोत्यजः।
ब्रह्मस्वरूपधृग् विष्णुर्यथा ते कथितं पुरा॥ १०॥

इत्येष कल्पसंहारश्चान्तरः प्रलयो द्विज।
नैमित्तिकस्ते कथितः प्राकृतः श्रृण्वतः परम्॥ ११॥
अनावृष्ट्याग्निसम्पर्कात् कृते संक्षालने मुने।
समस्तेष्वेव लोकेषु पातालेष्वखिलेषु च॥ १२॥
महदादेर्विकारस्य विशेषान्तस्य संक्षये।
कृष्णेच्छाकारिते तस्मिन् प्रवृत्ते प्रतिसञ्चरे • ॥ १३॥
आपो ग्रसन्ति वै पूर्वं भूमेर्गन्धात्मकं गुणम्।
आत्तगन्धा ततो भूमिः प्रलयत्वाय कल्पते॥ १४॥
प्रनष्टे गन्धतन्मात्रेऽभवत् पृथ्वी जलात्मिका।
रसाज्जलं समुद्रभूतं तस्माज्जातं रसात्मकम्॥ १५॥
आपस्तदा प्रवृद्धास्तु वेगवत्यो महास्वनाः।
सर्वमापूरयन्तीदं तिष्ठन्ति विचरन्ति च।
सलिलेनैवोर्म्मिमता लोका व्याप्ताः समन्ततः॥ १६॥
अपामपि गुणो यस्तु ज्योतिषा पीयते तु सः।
नश्यन्त्यापस्ततस्ताश्च रसतन्मात्रसंक्षयात् • ॥ १७॥
ततश्चापो हृतरसा ज्योतिष्टंव प्राप्नुवन्ति वै।
अग्न्यवस्थे तु सलिले तेजसा सर्वतो वृते॥ १८॥

---

कियन्तं कालं शेते, कदा व प्रबुद्धः सन् जगत् सृजतीत्यत्राह—'**पद्मयोने**'रिति द्वाभ्याम्॥ ९-१२॥

महादादेर्विशेषान्तस्य पृथिव्यन्तस्य विकारस्य संक्षये निमित्ते प्रतिसञ्चरे प्रवृत्त इत्यर्थः॥ १३॥

• महादादेः सांख्योक्तमहत्तत्त्वादेः, कृष्णस्य विष्णोः इच्छया कारिते प्रतिसञ्चरे प्रलये प्रवृत्ते सति, इत्यर्थः।

आत्तोऽपहृतो गन्धो यस्याः सा प्रलयत्वाय प्रलीनत्वाय॥ १४-१५॥

• रसतन्मात्रस्य जलकारणभूतस्य संक्षयात् सूक्ष्मजलस्य विनाशात्।

स चाग्निः सर्वतो व्याप्त आदत्ते तज्जलं तदा।
सर्वमापूर्य्य तेजोभिस्तदा जगदिदं शनैः॥ १९॥
अर्च्चिर्भिः संवृते तस्मिन् तिर्य्यगूर्द्ध्वमधस्तथा।
ज्योतिषोऽपि परं रूपं वायुरत्ति प्रभाकरम्॥ २०॥
प्रलीने च ततस्तस्मिन् वायुभूतेऽखिलात्मनि।
प्रनष्टे रूपतन्मात्रे हृतरूपो विभावसुः॥ २१॥
प्रशाम्यति तदा ज्योतिर्वायुर्दोधूयते महान्।
निरालोके तदा लोके वाय्ववस्थे च तेजसि • ॥ २२॥
ततस्तु मूलमासाद्य वायुः सम्भवमात्मनः।
ऊर्ध्वञ्चाधश्च तिर्य्यक् च दोधवीति दिशो दश • ॥ २३॥
वायोरपि गुणं स्पर्शमाकाशो ग्रसते पुनः।
प्रशाम्यति ततो वायुः खन्तु तिष्ठत्यनावृतम् • ॥ २४॥
अरूपमरसस्पर्शमगन्धं न च मूर्त्तिमत्।
सर्वमापूरयच्चैतत् सुमहत् सम्प्रकाशते • ॥ २५॥

---

सलिलेनैव लोका व्याप्ताः क्रमादित्यर्थः॥ १७-१९॥

प्रभाकरं प्रकाशकं वायुरत्ति ग्रसते॥ २०-२१॥

निरालोके वायुर्दोधूयते प्रचलति।।२२।।

• प्रशाम्यति नश्यति, दोधूयते इति धूञ्कम्पन इत्यस्य यङि रूपम्। वाय्ववस्थे वायुभावमापन्ने।

तुमुलं शब्दम् आत्मनः सम्भवं कारणम् आकाशम् आसाद्य उर्द्धवमधश्च दश दिशो दोधवीति प्रसर्पति।।२३।।

• तुमुलं शब्दं शब्दामात्रं सूक्ष्ममाकाशतत्त्वमित्यर्थः, आत्मनः वायुतत्त्वस्य सम्भवं उत्पत्तिबीजम्, 'अथैतस्मादत्मन आकाशः सम्भूत आकाशाद् वायु' रित्यादि श्रुतेः। दश दिशः व्याप्त, दोधवीति भृशं पुनः पुनर्वा चलति, दोधवीतीति यङ्लुको रूपम्।

• खं आकाशम्।

अनावृतं विकारैरपरिच्छिन्नम्।।२४-२५।।।

• न विद्यते रूपं यत्र तत् न विद्यते रसस्पर्शौ यत्र तत्, न विद्यते गन्धो यत्र तत्, रूपरसस्पर्शगन्धशून्यमित्यर्थः, रूपादीनां प्रागुक्तक्रमेण विनाशादिति भावः। न च मूत्तिमत्, न

परिमण्डलं तच्छुषिरमाकाशं शब्दलक्षणम्।
शब्दमात्रं तदाकाशं सर्वमावृत्य तिष्ठति • ॥२६॥
ततः शब्दं गुणं तस्य भूतादिर्ग्रसते पुनः।
भूतेन्द्रियेषु युगपद् भूतादौ संस्थितेषु वै॥२७॥
अभिमानात्मको ह्येष भूतादिस्तामसः स्मृतः।
भूतादिं ग्रसते चापि महान् वै बुद्धिलक्षणः॥२८॥
उर्वी महांश्च जगतः प्रान्तेऽन्तर्बाह्यतस्तथा॥२९॥
एवं सप्त महाबुद्धे! क्रमात् प्रकृतयस्तु वै।
प्रत्याहारे तु ताः सर्वा प्रविशन्ति परस्परम्॥३०॥

---

परिच्छिनन्नस्वरूपम्। सुमहत् परमहत् परिमाणयुक्तम्, तदुक्तं **कारिकावल्यां** विश्वाथेन— **'कालखात्मदिशां सर्वगतत्वं परमं मह'** दिति।

परिमण्डलं सर्वतो वर्त्तुलं तच्च ब्रह्माण्डकटाहावृतत्वात् शब्दलक्षणं स्थूलेन शब्देन लक्ष्यम्॥२६॥

• सुषिरं सरन्ध्रं सावकाशमित्यर्थः। शब्दः लक्षणं यस्य तथाभूतम्। शब्दस्य विशेषगुणस्य आश्रयतयैव अप्रत्यक्षस्याकाशस्य सिद्धेः।

भूतादिरित्यनेनात्र न तामसमात्रग्रहणं किन्तु तमःप्राधान्येन सामान्यतोऽहङ्कारमात्रस्य, अत एव भूतानामिन्द्रियाणाञ्च युगपत् प्रलयोक्तिः। देवानामप्युलक्षणमेतत्॥२७॥

अभिमानविषयाणां भूतादीनां लीनत्वात् केवलाभिमानात्मकस्य चावरणैकस्वभावत्वात्। एष भूतादिस्तदा तामसस्तमप्रधानः स्मृत इत्यर्थः। बुद्धिलक्षणः ज्ञानप्रधानत्वात्॥२८॥

यथा सृष्टिक्रमप्रातिलोम्येन पृथिव्यादेः महत्तत्त्वपर्यन्तो लय उक्तः। आवरणे स्वयमेव लयक्रम इति वक्तुं ब्रह्माण्डान्तर्वर्त्तिनः कार्यस्य अन्तर्बाह्यतश्च आद्यन्तकोटीर्दशयति— **उर्वी महां'** श्चेति। ब्रह्माण्डस्यान्तर्यथादौ जगतः पृथिवी महत्तत्त्वञ्च प्रान्ते आद्यन्तसीम्नोर्भवतः तथा ब्रह्माण्डाद्बाह्यतोऽपि। ततः किमत आह—**'एव '** मिति। यथा चरमसृष्ट्यां पृथ्वीमारभ्य प्रथमसृष्टमहत्तत्त्वपर्यन्तं प्रातिलोम्येन स्वस्वकारणे लयः, एवमावरणभूता अपि याः पृथिव्याद्याः सप्त प्रकृत्यः॥२९॥

येनेदमावृतं सर्वमण्डमप्सु प्रलीयते।
सप्तद्वीपसमुद्रान्तं सप्तलोकं सपर्वतम्॥ ३१॥
उदकावरणं यत्तु ज्योतिषा पीयते तु तत्।
ज्योतिर्वायौ लयं याति यात्याकाशे समीरणः॥ ३२॥
आकाशञ्चैव भूतादिर्ग्रसते तं तदा महान्।
महान्तमेभिः सहितं प्रकृतिर्ग्रसते द्विज॥ ३३॥
गुणासाम्यमनुद्रिक्तमन्यूनञ्च महामुने ।
प्रोच्यते प्रकृतिर्हेतु प्रधानं कारणं परम् • ॥ ३४॥
इत्येषा प्रकृतिः सर्वा व्यक्ताव्यक्तस्वरूपिणी।
व्यक्तस्वरूपमव्यक्ते तस्मिन् मैत्रेय! लीयते॥ ३५॥
एकः शुद्धोऽक्षरो नित्यः सर्वव्यापी तथा पुमान्।
सोऽप्यंशः सर्वभूतस्य मैत्रेय! परमात्मनः॥ ३६॥
न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः।
सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे॥ ३७॥

---

तत्रापि प्रत्याहारे उपसंहारे परं परं स्वं कारणं प्रविशन्ति। तदाह—'**येने**'ति। त्रिभिः। येनेदं सप्तद्वीपादिकमावृतमासीत् तदण्डं अण्डकटाहरूपा पृथ्वी स्वावरणरूपास्वप्सु प्रलीयत इत्यर्थः॥ ३०-३१॥

• गुणानां सत्त्वरजस्तमसां साम्यम् समावस्था। अनुद्रिक्तम् त्रिषु गुणेषु कस्याप्याधिक्यशून्यम्, अन्यूनं कस्यापि न्यूनतया रहितम्। गुणसाम्यमनुद्रिक्तमन्यूनञ्चेति त्रयं प्रतिपाद्यबुद्धिवैशद्यार्थमुक्तम् एकमात्रेणापि चरितार्थत्वादिति ध्येयम्।

प्रकृति स्वरूपं दर्शयंस्तत् कार्यस्य तस्मिन्नेव लयमुपसंहति—'**गुणसाम्य**'मिति॥ ३४॥

व्यक्ताव्यक्तस्वरूपिणी कार्यकारणरूपा॥ ३५॥

प्रकृति पुरुषयोरपि लयं वक्तुं तयोस्तदंशत्वमाह—'एक' इति। सर्वव्यापी प्रकतेस्तत्कार्यस्य चाधिष्ठाता, सोऽपीत्यपिशब्दात् प्रकृंतिरपि, सर्वभूतस्य प्रकृत्यादिसर्वात्मकस्य परमात्मनोऽंशः॥ ३६॥

कः पुनः परमात्मेत्यत्राह—'**न सन्ता**'ति, द्वाभ्याम्, आत्मनः पुरुषात् परे॥ ३७॥

स ब्रह्म तत् परं धाम परमात्मा स चेश्वरः।
स विष्णुः सर्वमेवेदं यतो नावर्त्तते यतिः॥ ३८॥
प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी।
पुरुषश्चाप्युभावेतौ लीयते परमात्मनि॥ ३९॥
परमात्मा च सर्वेषामाधारः परमेश्वरः।
विष्णुर्नाम्ना स वेदेषु वेदान्तेषु च गीयते॥ ४०॥
प्रवृत्तञ्च निवृत्तञ्च द्विविधं कर्म वैदिकम्।
ताभ्यामुभाभ्यां पुरुषैः सर्वमूर्त्तिः स इज्यते॥ ४१॥
ऋग्-यजुः सामभिर्मार्गैः प्रवृत्तैरिज्यते ह्यसौ।
यज्ञेश्वरो यज्ञपुमान् पुरुषैः पुरुषोत्तमः• ॥ ४२॥
ज्ञानात्मा ज्ञानयोगेन ज्ञानमूर्त्तिः स चेज्यते।
निवृत्ते योगिभिर्मार्गे विष्णुर्मुक्तिफलप्रदः॥ ४३॥
ह्रस्व-दीर्घप्लुतैर्यत्तु किञ्चिद्वस्त्वभियुज्यते।
यच्च वाचामविषये तत्सर्वं विष्णुरव्ययः॥ ४४॥
व्यक्तं स एव चाव्यक्तं स एव पुरुषोऽव्ययः।
परमात्मा स विश्वात्मा विश्वरूपधरो हरिः॥ ४५॥

---

पुरुषोत्तमे लीयेते लीनाविव तिष्ठतः॥ ३९॥

तस्य तु नास्ति लय इत्याह—'**परमात्मे**' ति तस्मात् स एव परमपुरुषार्थः॥ ४०॥

तत्प्रत्यर्थमेव सर्वसाधनजातमित्याह—'**प्रवृत्तञ्चे**'ति॥ ४१॥

कैः कथमिज्यत इत्यत्राह—'**ऋगि**'ति द्वाभ्याम्। प्रवृत्तैरविरक्तैः पुरुषैः ऋग्वेदादिविहितैः कर्मभिः मार्गभूतैरिज्यते॥ ४२॥

• प्रवृत्तैरविरक्तैरिति श्रीधरः। अविरक्तैः वैराग्यशून्यैः सकामैरिति यावत्। मार्गैः उपायैः। असौ पुरुषोत्तमो विष्णुः इज्यते पूज्यते।

कर्मभिर्विशुद्धचित्तैस्तु योगिभिर्निवृत्ते मार्गे स्थितैर्ज्ञानयोगेन इज्यत इत्यर्थः॥ ४३॥

ज्ञानयोगस्वरूपमाह—'**ह्रस्वदीर्घे**' ति द्वाभ्याम्॥ ४४॥

व्यक्ताव्यक्तात्मिका तस्मिन् प्रकृतिः सम्प्रलीयते।
पुरुषश्चापि मैत्रेय! व्यापिन्यव्याहतात्मनि॥ ४६॥
द्विपरार्द्धात्मकः कालः कथितो यो मया तव।
तदहस्तस्य मैत्रेय! विष्णोरीशस्य कथ्यते॥ ४७॥
व्यक्ते च प्रकृतौ लीने प्रकृत्यां पुरुषे तथा।
तत्र स्थिते निशा चान्या तत्प्रमाणा महामुने॥ ४८॥
नैवाहस्तस्य न निशा नित्यस्य परमात्मनः।
उपचारस्तथाप्येष तस्येशस्य द्विजोच्यते॥ ४९॥
इत्येष तव मैत्रेय! कथितः प्राकृतो लयः।
आत्यन्तिकमितो ब्रह्मन्निबोध प्रतिसञ्चरम्॥ ५०॥

इति श्रीविष्णुपुराणे षष्ठांशे चतुर्थः अध्यायः॥

---

सर्वं विष्णुरेव, न तु ततो व्यतिरिक्तमस्तीत्यत्र हेतुमाह—'**व्यक्ताव्यक्तात्मिके**' ति॥ ४६॥

विष्णोः सर्वोत्कर्षप्रतिपत्त्यर्थं सर्वातिशायिनीमहोरात्रकल्पनामाह—'**द्विपरार्द्धे**'ति द्वाभ्याम्॥ ४७॥

तथा पुरुषे तत्र परमेश्वरे स्थिते सति प्रकत्याञ्च तत्र स्थितायामित्यर्थः ॥४८॥

एतच्च न वास्तवमित्याह—'**नैवे**' ति। उपचारः सर्वोत्कर्षप्रतिप्रत्तये क्रियते इत्यर्थः॥ ४८॥

प्राकृतं लयमुपसंहरन् आत्यन्तिक-लयमुपक्षिपति '**इती**'ति॥ ४९॥

**इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा**

**श्रीविष्णुपुराणटीकायां षष्ठांशे चतुर्थोऽध्यायः।**

## पञ्चमोऽध्यायः

### (आध्यात्मिकादित्रिविधतापवर्णनम्, भगवान् वासुदेवश्चेति शब्दद्वयस्य व्याख्या, भगवतः पारमार्थिकस्वरूपवर्णनञ्च)

पराशर उवाच

आध्यात्मिकादि मैत्रेय! ज्ञात्वा तापत्रयं बुधः।
उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् • ॥१॥
आध्यात्मिको वै द्विविधः शारीरो मानसस्तथा।
शारीरो बहुभिर्भेदैर्भिद्यते श्रूयताञ्च सः॥२॥
शिरोरोग-प्रतिश्याय-ज्वरशूल-भगन्दरैः।
गुल्मार्शः-श्वयथु-श्वास-च्छर्द्यादिभिरनेकधा॥३॥
तथाक्षिरोगातीसार-कुष्ठाङ्गामयसंज्ञकैः।
भिद्यते देहजस्तापो मानसं श्रोतमर्हसि॥४॥
काम-क्रोध-भय-दोष-लोभ-मोह-विषादजः।
शोका-सूया-वमाने-र्ष्या-मात्सर्य्यादिभवस्तथा॥५॥
मानसोऽपि द्विजश्रेष्ठ! तापो भवति नैकधा।
इत्येवमादिभिर्भेदैस्तापो ह्याध्यात्मिकः स्मृतः॥६॥

---

• आध्यात्मिकादीत्यादिपदेन आधिभौतिकाधिदैविकपरिग्रहः। तापत्रय दुःखत्रयम्।

आत्यन्तिको लयो नाम सर्वात्मना अज्ञानतत्कार्यनाशात्मको मोक्षः। तच्चाध्यात्मिकादितापत्रयं दुःसहमिति ज्ञात्वा बुद्धा विवेकी उत्पन्नवैराग्यः सन् गुरूपदेशादिनोत्पन्नज्ञानः प्राप्नोति॥१॥

आत्मानं कार्यकारणसंघातं निमित्तमधिकृत्य भवतीत्याध्यात्मिकः, तं प्रपञ्चयति- '**आध्यात्मिक**' इति पञ्चभिः॥॥

प्रतिश्यायः पीनसः। श्वयथुः शोथः। अङ्गामयो वातजलोदरादिः॥३-४॥

द्वेषोऽप्रीतिः मोहो वैचित्यं, विषादः सत्त्वहानिः, शोकोऽनुशोचम्। असूया गुणेषु दोषारोपः, ईर्ष्या क्षमाराहित्यं, मात्सर्यं परोत्कर्षसहिष्णुता॥५-६॥

मृग-पक्षि-मनुष्याद्यैः पिशाचोरग-राक्षसैः।
सरीसृपाद्यैश्च नृणां जन्यते चाधिभौतिकः● ॥७॥
शीतोष्णवातवर्षाम्बु-वैद्यतादिसमुद्भवः।
तापो द्विजवरश्रेष्ठ! कथ्यते चाधिदैविकः॥८॥
गर्भ-जन्म-जराज्ञान-मृत्यु-नारकजं तथा।
दुःखं सहस्रशो भेदैर्भिद्यते मुनिसत्तम॥९॥
सुकुमारतनुर्गर्भे जन्तुर्बहुमलावृते।
उल्वसंवेष्टितो भुग्नपृष्ठग्रीवास्थिसंहतिः॥१०॥
अत्यन्तकटु-तीक्ष्णोष्ण-लवणैर्मातृभोजनैः।
अत्यन्ततापैरत्यर्थं वर्द्धमानातिवेदनः॥११॥
प्रसारणाकुञ्चनादेर्नाङ्गानां प्रभुरात्मनः।
शकृन्मूत्रमहापङ्कशायी सर्वत्र पीडितः॥१२॥
निरुच्छ्वासः सचैतन्यः स्मरन् जन्मशतान्यथ।
आस्ते गर्भेऽतिदुखेन निजकर्मनिबन्धनः॥१३॥

---

भूतानि निमित्तत्वेनाधिकृत भवतीत्याधिभौतिकः. तमाह-मृगेति मृगादिभिर्यो जन्यते स आधिभौतिकः॥७॥

● आधिभौतिक इति भूतानि प्राणिनः अधिकृत्य प्रवृत्त इत्यर्थः, मृगपक्षिप्रभृति प्राणिप्रभव इति यावत्।

केवलं दैवमेवाधिकृत्य भवतीत्याधिदैविकः। तमाह, —'**शीतोष्णवाते**' ति॥८॥

एतदेव तापत्रयं गर्भाद्यवस्थाभेदेन सहस्रशः प्रपञ्चयति गर्भेत्यादिना इति संसारतापार्केत्यतः प्राक्तनेन ग्रन्थेन॥९॥

तत्र गर्भदुःखमाह, सुकुमारेति चतुर्भिः उल्वं गर्भवेष्टाजालम्। भुग्नं वक्रीभूतं पृष्ठादि यस्य सः॥१०॥

मात्राभुक्तैरतिविदादिभिः अत्यन्तमम्लादिभिर्वद्धमानातिवेदना यस्य सः॥११॥

आत्मनो गात्राणां प्रसारणादावसमर्थः॥१२-१३॥

**जायमानः पुरीषाश्रृंमूत्रशुक्राविलाननः।**

**प्राजापत्येन वातेन पीड्यमानास्थिबन्धनः॥ १४॥**

**अधोमुको वै क्रियते प्रबलैः सूतिमारुतैः।**

**क्लेशैर्निष्क्रान्तिमाप्नोति जठरान्मातुरातुरः॥ १५॥**

**मूर्च्छामवाप्य महतीं संस्पृष्टो बाह्यवायुना।**

**विज्ञानभ्रंशमाप्नोति जातश्च मुनिसत्तम • ॥ १६॥**

**कण्टकैरिव तुन्नाङ्ग क्रकचैरिव दारितः।**

**पूतिव्रणान्निपतितो धरण्यां कृमिको यथा • ॥ १७॥**

**कण्डूयने चाप्यशक्तः परिवर्त्तेऽप्यनीश्वरः।**

**स्तन्यपानादिकाहारमवाप्नोति परेच्छया॥ १८॥**

**अशुचिः प्रस्तरे सुप्तः कीटदंशादिभिस्तथा।**

**भक्ष्यमाणोऽपि नैवैषां समर्थो विनिवारणे॥ १९॥**

**जन्मदुःखान्यनेकानि जन्मनोऽनन्तराणि वै।**

**बालभावे यदाप्नोति आधिभौतादिकानि च॥ २०॥**

---

जन्मदुःखमाह, जायमान इति द्वाभ्यां पुरीषादिभिराविलं क्लिन्नमाननं यस्य सः। प्राजापत्येन प्रजापतिनियुक्तेन गभसङ्कोचकेन। तस्यादुपायात् स गर्भः करणीयांसं तं योनिं न हिनस्ति ब्रह्मण हि क्लृप्त इति श्रुतेः॥ १४॥

सूतिमारुतैः प्रसूत्यर्थं गर्भप्रेरकैर्वायुभिः॥ १५॥

जन्मानन्तरं दुःखान्याह,—'**मूर्च्छा**'मिति चतुर्भिः॥ १६॥

• विज्ञानभ्रंश गर्भवासदशायां तस्य यथा व्यतीतजन्मान्तरस्मरणादि रूपं विज्ञानमासीत् तस्माद् विच्युतिम्।

तुन्नाङ्गौ व्यथितगात्रः, क्रकचैः विदारणयन्त्रैः पूतिब्रणात् दुर्गन्धिब्रणतुल्याद्योनेः॥ १७॥

• तुन्नेति व्यथनार्थस्य तुदतेर्धातोः रूपम् तुन्नानि व्याथितानि अङ्गानि गात्राणि यस्य सः।

बाल्यदुःखान्याह—'**कण्डूयने**'इत्यादित्रिभिः॥ १८-२०॥

अज्ञानतमसाच्छन्नो मूढान्तःकरणो नरः।

न जानाति कुतः कोऽहं क्वाहं गन्ता किमात्मकः॥ २१॥

केन बन्धेन बद्धोऽहं कारणं किमकारणम्।

किं कार्य्यं किमकार्य्यं वा किं वाच्यं किन्न वोच्यते॥ २२

कोऽधर्म्मः कश्च वै धर्मः कस्मिन् वर्त्तेत वा कथम्।

किं कर्त्तव्यकर्त्तव्यं किं वा किं गुणदोषवत्॥ २३॥

एवं पशुसमैर्मूढैरज्ञानप्रभवं महत्।

अवाप्यते नरैर्दुःखं शिश्नोदरपरायणैः॥ २४॥

अज्ञानं तामसो भावः कार्यारम्भाः प्रवृत्तयः।

अज्ञानिनां प्रवर्त्तन्ते कर्म्मलोपास्ततो द्विज॥ २५॥

नरकं कर्मणां लोपात् फलमाहुर्महर्षयः।

तस्मादज्ञानिनां दुःखमिह चामुत्र चोत्तमम्॥ २६॥

जराजर्ज्जरदेहश्च शिथिलावयवः क्रमात्।

विगलच्छीर्णदशनो बली स्नायुशिरावृतः॥ २७॥

दुरप्रनष्टनयनो व्योमान्तर्गततारकः।

नासाविवरनिर्यात-लोपपुञ्जजश्चलद्वपुः॥ २८॥

प्रकटीकृतसर्वास्थिर्नतपृष्ठास्थिसंहतिः।

उत्सन्नजठराग्नित्वादल्पाहारोऽल्पचेष्टितः॥ २९॥

---

यौवनदुःखान्याह—'अज्ञाने'ति षड्भिः। अज्ञानमिह कामलोभाद्याभिनिवेशः तेन तमसाच्छन्नः अन्धीभूतः॥ २१॥

कार्याकार्ये लौकिके॥ २२॥

कर्त्तव्याकर्त्तव्ये वैदिके॥ २३-२४॥

किञ्च अज्ञानं तमसो भावः अतोऽज्ञानिनां विहितेष्वपि कार्यारम्भेष्वप्रवृत्तयः स्युः। ततः कर्मलोपाः प्रवर्त्तन्ते॥ २५॥

ततो नकरप्राप्तिरिति उत्तमम् अत्यधिकं दुःखम्॥ २६॥

कृच्छ्रचङ्क्रमणोत्थानशयनासनचेष्टितः।
मन्दीभवच्छ्रोत्रनेत्रः स्रवल्लालाविलाननः॥ ३०॥
अनायत्तैः समस्तैश्च करणैर्मरणोन्मुखः।
तत्क्षणेऽप्यनुभूतानामस्मर्त्ताखिलवस्तुनाम्॥ ३१॥
सकृदुच्चारिते वाक्ये समुद्भूतमहाश्रमः।
श्वासः कासससमुद्भूतमहायासप्रजागरः॥ ३२॥
अन्येनोत्थाप्यतेऽन्येन तथा संवेश्यते जरी।
भृत्यात्मपुत्रदाराणामवामानस्पदीकृतः॥ ३३॥
प्रक्षीणाखिलशौचश्च विहाराहारसस्पृहः।
हास्यः परिजनस्यापि निर्व्विण्णाशेषबान्धवः॥ ३४॥
अनुभूतमिवान्यस्मिन् जन्मन्यात्मविचेष्टितम्।
संस्मरन् यौवने दीर्घ निःश्वसित्यभितापितः॥ ३५॥
एवमादीनि दुःखानि जरायामनुभूय वै।
मरणे यानि दुःखानि प्राप्नोति शृणु तान्यपि॥ ३६॥
श्लथग्रीवांघ्रिहस्तोऽथ व्याप्तो वेपथुना भृशम्।
मुहुर्ग्लानिपरवशो मुहुर्ज्ञानलवान्वितः॥ ३७॥

---

स्थाविरदुःखान्याह—'जराजर्जरे' ति दशभिः। बली लम्बमाना त्वक्, शिरा रक्तवहा नाडी सैवास्थिबन्धनी स्नायुः। दूरे दूरस्थेऽर्थे नष्टं नयनं ग्रहणासमर्थं चक्षुर्यस्य सः. व्योम्नि चक्षुर्गोलकाकाशेऽन्तर्गते निमग्ने तारके कनीनिके यस्य सः॥ २८-३०॥

अनायत्तैरस्वाधीनैः करणैरिन्द्रियैः॥ ३१-३४॥

यौवने यदात्मनो विविधं चेष्टितं तदन्यजन्मानुभूतमिव संस्मरन दीर्घं श्वासं मुञ्चति॥ ३५-३६॥

मरणदुःखान्याह—'श्लथग्रीवे' ति सार्द्धैः षड्भिः। वेपथुना कम्पेन॥ ३७-३८॥

हिरण्य-धान्य-तनय-भार्या-भृत्य-गृहादिषु।
एते कथं भविष्यन्ति ममेति ममताकुलः• ॥ ३८॥
मर्मभिद्भिर्महारोगैः क्रकचैरिव दारुणैः।
शरैरिवान्तकस्योग्रैश्छिद्यमानास्थिबन्धनः॥ ३९॥
विवर्त्तमानताराक्षि हस्तपादं मुहुः क्षिपन्।
संशुष्यमाणताल्वोष्ठकण्ठो घुरघुरायते॥ ४०॥
निरुद्धकण्ठो दोषौघैरुदानश्वासपीड़ितः।
तापेन महता व्याप्तस्तृषा चार्त्तस्तथा क्षुधा॥ ४१॥
क्लेशादुत्क्रान्तिमाप्नोति याम्यकिङ्करपीडितः।
ततश्च यानतादेहं क्लेशेन प्रतिपद्यते॥ ४२॥
एतान्यन्यानि चोग्राणि दुःखानि मरणे नृणाम्।
श्रृणुष्व नरके यानि प्राप्यन्ते पुरुषैर्मृतैः॥ ४३॥
याम्यकिङ्करपाशादिग्रहणं दण्डताडनम्।
यमस्य दर्शनञ्चोग्रमुग्रमार्गविलोकनम्॥ ४४॥
करम्भबालुका-वह्नि-यन्त्र-शस्त्रादिभीषणे।
प्रत्येकं नरके याश्च यातना द्विज! दुःसहाः॥ ४५॥
क्रकचैः पीडयमानानामूषायाञ्चापि धम्यताम्।
कुठारैः कृत्यमानानां भूमौ चापि निखन्यताम्॥ ४६॥

---

• एते हिरण्यादयः, कथं मम मत्स्वामिका भविष्यन्ति, इत्येवं ममताकुलः ममकारेण व्याकुलः। अथवा अतः परं ममाभावदशयामेते मम हिरण्यादयः कथं भविष्यन्ति केन प्रकारेण वर्त्तिष्यन्ते इत्यर्थः, इति ममताकुलः।

दोषौघैः श्लेष्मादिसंघैर्निरुद्धकण्ठैः घुरु घुरुः इत्येवं शब्दं करोति॥ ४०-४१॥

यातनार्थमन्यं देहम्॥ ४२॥

नरकदुःखान्याह,—'श्रृणुष्वे'ति सार्धैः षड्भिः॥ ४३॥

याम्यकिङ्करैः पाशादिग्रहणम्॥ ४४॥

करम्भाबालुकाः तप्तबालुकाः॥ ४५॥

धम्यतां खंन्यतामित्यादि कर्मणि परस्मैपदमार्षम्। कृत्यमानानां छिद्यमानानाम्॥ ४६॥

शूलेष्वारोप्यमाणानां व्याघ्रवक्त्रे प्रवेश्यताम्।

गृध्रः सम्भक्ष्यमाणानां द्वीपिभिश्चोपभुज्यताम्॥ ४७॥

क्वाथ्यतां तैलमध्ये च क्लिश्यतां क्षारकर्दमैः।

उच्चान्निपात्यमानानां क्षिप्यतां क्षेपयन्त्रकैः॥ ४८॥

नरके यानि दुःखानि पापहेतूद्भवानि वै।

प्राप्यन्ते नारकैर्विप्र! तेषां संख्या न विद्यते• ॥४९॥

न केवलं द्विजश्रेष्ठ नरके दुःखपद्धतिः।

स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः॥ ५०॥

पुनश्च गर्भे भवति जायते च पुनः पुनः।

गर्भे विलीयते भूयो जायमानोऽस्तमेति च॥ ५१॥

म्रियते जातमात्रश्च बालभावेऽथ यौवने।

मध्यमं वा वयः प्राप्य वार्द्धके वा ध्रुवा मृति॥ ५२॥

यावज्जीवति तावच्च दुखैर्नानाविधैः प्लुतः।

तन्तुकारणपक्ष्मौघैरास्ते कार्पासबीजवत्॥ ५३॥

द्रव्यनाशे तथोत्पत्तौ पालने च तथा नृणाम्।

भवन्त्यनेकदुःखानि तथैवेष्टविपत्तिषु॥ ५४॥

---

द्वीपिभिर्व्याघ्रैः।।४७-४८।।

पापमेव हेतुः कारणं तदुद्भवानि॥४९॥

• पापमेव हेतुः तस्मादुद्भवो येषां तानि। नारकैः नरकगतैः पुरुषैः।

स्वर्गेऽपि दुःखमेवेत्याह—'न केवल' मिति। स्वर्गे निवृत्तिर्नास्ति, दुःखपद्धतिरेवास्तीत्यर्थः॥५०॥

स्वर्गनरकभोगानन्तरं पुनगर्भादिदुःखमाह—'पुनश्चे'ति षड्भिः॥५१-५२॥

दुःखैः प्लुतो व्याप्त आस्ते, तन्तूनां कारणं पक्ष्माणि कार्पासांशवस्तेषामोघैः समूहैः कार्पासबीजं यथा व्याप्त तद्वत्॥५३॥

उत्पतौ द्रव्यस्यार्जने॥५४-५५॥

यद् यत् प्रीतिकरं पुंसां वस्तु मैत्रेय! जायते।
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति॥५५॥
कलत्र-पुत्र-भृत्यादि-गृह-क्षेत्र-धनादिकैः।
क्रियते न तथा भूरि सुखं पुंसा यथाऽसुखम्॥५६॥
इति संसारदुःखार्कतापतापितचेतसाम्।
विमुक्तिपादपच्छायामृते कुत्र सुखं नृणाम्॥५७॥
तदस्य त्रिविधस्यापि दुःखजातस्य पण्डितैः।
गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः॥५८॥
निरस्यातिशयाह्लादसुखभावैकलक्षणा।
भैषस्यं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता॥५९॥
तस्मात् तत्प्राप्तये यत्नः कर्त्तव्यः पण्डितैर्नरैः।
तत्प्राप्तिहेतुर्ज्ञानञ्च कर्म चोक्तं महामुने॥६०॥

---

कलत्रादिकैर्यथा असुखं भूरि क्रियते, न तथा सुखं क्रियते॥५६॥

एवं दुःखानुसन्धानेन लब्धविवेकवैराग्यस्य पुंसो मुमुक्षैव युक्तेत्याशयेनाह—'**इति**'ति त्रिभिः॥५७॥

गर्भेदिस्थानेषु प्रकर्षेण भविष्यतो दुःखजातस्य भगवत् प्राप्तिरेव भैषज्यं मता सम्मतेत्यन्वयः॥५८॥

कथम्भूता भगवत्प्राप्तिस्तदाह—निरस्तातिशय आह्लादो निर्वृत्तिः यस्मिन् सुखे तद्भावस्तदात्मत्वमेवैकलक्षणं यस्याः सा तथा। किञ्च एकान्ता भगवन्निष्ठामात्रेणा-वश्यम्भाविनि न तु ऋत्विगादिवैगुण्येन कर्मफलवदनैकान्तिकी अनित्या॥५९॥

यत्नस्य साधनविषयत्वात् साधनमाह—'**तत्प्राप्ती**'ति। कर्म सत्त्वशुद्धिद्वारा ज्ञानं साक्षात्॥६०॥

आगमोत्थं विवेकोत्थं द्विधा ज्ञानं तथोच्यते।
शब्दब्रह्मागममयं परं ब्रह्म विवेकजम्॥ ६१॥
अन्धं तम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम्।
यथा सूर्यस्तथा ज्ञानं यद् विप्रर्षे! विवेकजम्॥ ६२॥
मनुरप्याह वेदार्थं स्मृत्वा यन्मुनिसत्तम।
तदेतच्छ्रूयतामत्र सम्बन्धे गदतो मम॥ ६३॥
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत्।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति॥ ६४॥
द्वे विद्ये वेदितव्ये वै इति चाथर्वणी श्रुतिः।
परया त्वक्षरप्राप्तिर्ऋग्वेदादिमयापरा॥ ६५॥

---

तच्च ज्ञानं द्विविधमित्याह—'**आगमोत्थमि**'ति। तद्विवृणोति— '**शब्दब्रह्मेति**। आगममयम् आगमोत्थं ज्ञानं शब्दब्रह्मशब्दात्, सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिवाक्याज् जायमानं ब्रह्मश्रवणजं ज्ञानमागतोत्थमित्यर्थः। देहादिविविक्ताकारचित्तवृत्तौ निदिध्यासनाख्यायां प्रकाशमानं परब्रह्म विवेकजं ज्ञानमित्यर्थः । वृत्तिव्यङ्ग्यस्य ब्रह्मण एव ज्ञानाभिधेयत्वाद् ब्रह्मैव ज्ञानमित्युक्तम्॥ ६१॥

शब्दश्रवणादपि ब्रह्मज्ञानमेवोत्पद्यते तेनैवाज्ञानं निवर्त्त्य भगवत्प्राप्तिसिद्धेः किं विवेकजज्ञानेनेत्याशंक्याह—'**अन्ध**'मिति निविडतम इवाज्ञानम्। व्यापकमावरणम् इन्द्रियैः शब्दादिद्वारा जातं ज्ञानं दीपवत् न सर्वात्मना अज्ञाननिवर्त्तकं विवेकजन्तु ज्ञानं सूर्यवत् सर्वाज्ञाननिवर्त्तकमित्यर्थः॥ ६२॥

उक्तलक्षणे ज्ञानद्वैधे मनुसम्मतिमाह ,अत्र सबन्धे अस्मिन् प्रसङ्गे॥ ६३॥

शब्दब्रह्मणि श्रवणेन निष्णातो विवेकजेन परं ब्रह्म प्राप्नोति॥ ६४॥

तत्प्राप्तिहेतुर्ज्ञानञ्च कर्म चोक्तमित्येतत्परश्रुतिसम्मतिमाह—'**द्वे विद्ये**'इति। विद्याशब्देन तद् हेतुकर्मब्रह्मविषयौ वेदभागौ गृह्येते तदाह— '**परये**' ति। अक्षरप्रतिपादकपराख्यवेदभागादितरः कर्मभाग ऋग्वेदादिशब्देनोच्यते। ब्राह्मणपरिव्राजकादिवत्,सा त्वपरा साधनगोचरत्वात्॥ ६५॥

**यत्तदव्यक्तमजरचिन्त्यमजमव्ययम्।**
**अनिर्देश्यमरूपञ्च पाणिपादाद्यसंयुतम्॥ ६६॥**
**विभुं सर्वगतं नित्यं भूतयोनिमकारणम्।**
**व्याप्तव्याप्तं यत: सर्वं तद् वै पश्यन्ति सूरय:॥ ६७॥**
**तद् ब्रह्म परमं धाम तद् ध्येयं मोक्षकाङ्क्षिभि:।**
**श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णो: परमं पदम्॥ ६८॥**
**तदेव भगवद्वाच्यं स्वरूपं परमात्मन:।**
**वाचको भगवच्छब्दस्तस्याक्षयात्मन:॥ ६९॥**
**एवं निगदितार्थस्य तत्तत्त्वं तस्य तत्त्वत:।**
**ज्ञायते येन तज्ज्ञानं परमन्यत् त्रयीमयम्॥ ७०॥**
**अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज।**
**पूजायां भगवच्छब्द: क्रियते ह्यौपचारिक:॥ ७१॥**
**शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्त्तते।**
**मैत्रेय! भगवच्छब्द: सर्वकारणकारणे॥ ७२॥**

---

अथ पराख्यया यदाक्षरमधिगम्यते तत्तददृश्यमग्राह्यमित्यथर्वश्रुत्युक्तं परविद्याविषयम् अक्षराख्यं तत्त्वमाह—'**यत्त**'दिति त्रिभि:॥ ६६॥

तत् परं ब्रह्मैव स्वेच्छया आविष्कृतषाड्गुण्यम् परमेश्वाख्यं भगवच्छब्दवाच्यं द्वादशाक्षरादिपरविद्योपासनया भक्तै: सुलभदर्शनमित्याह॥ ६९॥

ईदृग्विषयञ्च ज्ञानं परविद्येत्याह—एवमि' ति। निगदितार्थस्य द्वादशाक्षरादिभिरुक्तार्थस्य सतत्त्वं स्वरूपं तत्त्वत: अप्रच्युतब्रह्मस्वरूपेण येन द्वादशाक्षरादिना ज्ञायते तत् परं ज्ञानं परविद्या, त्रयीमयन्तु यत् अपरविद्या कर्माख्या॥ ७०॥

ननु यदीश्वरो ब्रह्मैव, कथं तर्हि तस्यानिर्देश्यस्य भगवच्छब्दवाच्यत्वमित्याशङ्याह—'**अशब्दे**' ति। पूजायां निमित्तभूतायाम् आविष्कृतषाड्गुण्येन भगवच्छबद: प्रयुज्यते तत्रापि गुणानां स्वरूपाभिपन्नत्वात् उपचारात् मत्वर्थीय: प्रयुज्यते तद्भेदविवक्षायाम्॥ ७१॥

इत्थम्भूते मुख्य एव भगवच्छब्दो वर्त्तते इत्याह—'**शुद्धे**' इति। शुद्धे असङ्गे महाविभूत्याख्ये अचिन्त्यैश्वर्यें॥ ७२॥

सम्भर्त्तेति तथा भर्त्ता भकारोऽर्थद्वयान्वितः।
नेता गमयिता स्त्रष्टा गकारार्थस्तथा मुनि॥७३॥
ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीङ्गना॥७४॥
वसन्ति यत्र भूतानि भूतात्मन्यखिलात्मनि।
सर्वभूतेष्वशेषेषु वकारार्थस्ततोऽन्ययः॥७५॥
एवमेष महाशब्दो भगवानिति सत्तम।
परमब्रह्मभूतस्य वासुदेवस्य नान्यतः॥७६॥
तत्र पूज्यपदार्थोक्ति-परिभाषासमन्वितः।
शब्दोऽयं नोपचारेण अन्यत्र ह्युपचारतः॥७७॥
उत्पत्तिं प्रलयञ्चैव भूतानामगतिं गतिम्।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति॥७८॥

---

अक्षरार्थनिरुक्त्या भगवच्छब्दो परमेश्वरवाचकत्वमाह,—सम्भर्त्ता, पौषकः भर्त्ता आधार इत्यर्थद्वयेनान्वितः। नेता कर्मज्ञानफलप्रापकः। गमयिता प्रलये कार्याणां कारणम्। प्रतिस्त्रष्टा पुनरपि तेषाम् उद्गमयिता सर्गकर्त्ता इति गकारार्थः॥७३॥

अक्षरार्थनिरुक्त्या इदानीम् अक्षरद्वयात्मकस्य पदस्यार्थमाह,—ऐश्वर्यस्येति इङ्गना संज्ञा इत्यर्थः॥७४

वकारार्थमाह,—'वसन्ती'ति। यत्राधिष्ठान भूते भूतानि वसन्ति स च भूतेषु वसतीति वकारार्थः॥७५॥

एवमेष शब्दे वासुदेवस्य वाचकः, नान्यस्येत्यर्थः। भश्चादौगश्च वश्च भगवानित्यक्षरसाम्यात् निरुक्तिः। षाड्गुण्यं भग इति पक्षे तद्वान् भगवानित्यनुगम एव॥७६॥

तदेवं परमेश्वरे निरतिशयैश्वर्यादियुक्ते मुख्योऽयं शब्दः, तु गौण इत्याह,—'तत्रे'ति पूज्यस्य श्रेष्ठस्य पदार्थस्य उक्तौ या परिभाषा सङ्केतरूपग्रहस्तत् सङ्ग्रहः। तत्समन्वितोऽयं शब्दः। अतो नोपचारेण प्रवर्त्तते। अन्यत्र देवादावुपचारेण प्रवर्त्तते॥७७॥

उपचारे बीजमाह—'उत्पत्ति'मिति॥७८॥

ज्ञान-शक्ति-बलैश्वर्य-वीर्यम्तेजांस्यशेषतः।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥७९॥
सर्वाणि तत्र भूतानि वसन्ति परमात्मनि।
भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः॥८०॥
खाण्डिक्यजनकायाह पृष्टः केशिध्वजः पुरा।
नामाव्याख्यमनन्तस्य वासुदेवस्य तत्त्वतः॥८१॥
भूतेषु वसते सोऽन्तर्वसन्त्यत्र च तानि यत्।
धाता विधाता जगतां वासुदेवस्ततः प्रभुः ॥८२॥
स सर्वभूतप्रकृतिं विकारान् गुणांश्च दोषांश्च मुने! व्यतीतः।
अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवान्तराले॥८३॥
समस्तकल्याणगुणात्मको हि स्वशक्तिलेशावृतभूतवर्णः।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ॥८४॥
तेजोबलैश्वर्यमहावबोधः स्ववीर्यशक्त्यादिगुणैकराशिः।
परः पराणौं सकला न यत्रक्लेशादयः सन्ति परापरेशे॥८५॥
स ईश्वरो व्यष्टिसमष्टिरूपो व्यक्तस्वरूपोऽप्रकटस्वरूपः।
सर्वेश्वरः सर्वगः सर्ववेत्ता समस्तशक्तिः पममेश्वराख्यः॥८६॥

---

भगवच्छब्दवाच्यं षाड्गुण्यं प्रकारान्तरेणाह '**ज्ञानेति**'। हेयैः प्रकृतिगुणैः तत्कार्यैः कर्मभिस्तत्फलैश्च विना॥७९॥

द्वादशाक्षरान्तर्गतभगवच्छदस्यार्थमुक्त्वा वासुदेवशब्दस्यार्थमाह—'**सर्वाणी**'ति। वसनाद् वासानाच्च वासुः साधनात् साधुरितिवत्। द्योतनाद् देवः। वासुश्चासौ देवश्चेति वासुदेवः। तदुक्तं मोक्षधर्मे—'**वसनाद् देवनाच्चैव वासुदेवन्ततोविदु,**' रिति॥८०॥

जनकादयोऽपि भगवन्नामालोचननिष्ठयैव ब्रह्मज्ञानं प्राप्ता इति दर्शयन्नाह—'**खाण्डिक्ये**'ति षड्भिः॥८१॥

भूतेषु सोऽन्तरिति वासुशब्दो व्याख्यातः। '**धाता विधाते**'त्यादिना देवशब्दो दिवेर्धातोः अनेकार्थप्रपञ्चेन व्याख्यात इति ज्ञेयम्॥८२॥

भुवान्तराले यदस्ति, तत्सर्वं तेनास्तृतं छन्नं व्याप्तमिति यावत्॥८३-८४॥

कल्याणगुणानेवाह—'**तेजोबले**'ति॥८६॥

संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम्।
संदृश्यते वाप्यधिगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्॥ ८७॥

इति श्रीविष्णुपुराणे षष्ठांशे पञ्चमः अध्यायः॥

---

प्रकृतमुपसंहरति—'स' इति। येन ज्ञायते परोक्षवृत्त्या। संदृश्यते साक्षात् क्रियते। अधिगम्यते निशेषाविद्यानिवृत्त्या प्राप्यते तत् ज्ञानं परा विद्या, अन्यदज्ञानं अविद्यान्तर्वत्तिनी अपरा विद्येत्यर्थः॥ ८७॥

**इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां षष्ठांशे पञ्चमोऽध्यायः।**

# षष्ठोऽध्याय:

## (केशिध्वज-खाण्डिक्ययोर्विवरणम्)

**पराशर उवाच**

**स्वाध्यायं संयमाभ्यां स दृश्यते पुरुषोत्तम:।**
**तत्प्राप्तिकारणं ब्रह्म तदेतदिति चोच्यते॥ १॥**
**स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमेव च।**
**स्वाध्याय-योगसम्पत्त्या परमात्मा प्रकाशते • ॥ २॥**
**तदीक्षणाय स्वाध्यायश्चक्षुर्योगस्तथापरम्।**
**न मांसचक्षुषा द्रष्टुं ब्रह्मभूत: स शक्यते॥ ३॥**

**मैत्रेय उवाच**

**भगवंस्तमहं योगं ज्ञातुमिच्छामि तं वद।**
**ज्ञाते यत्राखिलाधारं पश्येयं परमेश्वरम्॥ ४॥**

---

पूर्वाध्यायान्ते 'संज्ञायते येने'त्यत्र परमात्मानो ज्ञानदर्शनप्राप्तयो येन भवन्ति, तत्परं ज्ञानमित्युक्तं, तत्र दृढाज्ञानं मननमसकृतेन वेदान्तवाक्यश्रवणेन भवतीति प्रसिद्धम्। अत स्तदुल्लन्ध्य दर्शनप्राप्तयो: कारणमाह—'**स्वाध्याये**'ति। स्वाध्याय: प्रणवजप:, संयमो योग:, ताभ्यां स दृश्यते। तस्य प्राप्तावपि तदेतद् द्वयं कारणम्। अत एव तद्हेतुद्वयं दर्शनद्वारा ब्रह्मणं: प्राप्तिहेतुत्वात् ब्रह्मेत्यभिधीयते॥ १॥

तदनुष्ठानप्रकारमहा—'**स्वाध्याया**'दिति। सम्पत्त्या समृद्धया, तथा च योगशास्त्रम्, '**जपाच्छ्रान्त: पुनर्ध्यायेद् ध्यानाच्छ्रान्त: पुनर्जपेत्। जपध्यानाभियोगेन पश्येदात्मानमात्मनि** इति॥ २॥

योगम् अश्रित्येति शेष:, आसीत अवतिष्ठेत। अथवा धातूनामनेकार्थत्वात् आसीत् अनुतिष्ठेदित्यर्थ:।

ननु चक्षुरादिभिरप्यात्मन एव स्फुरणात् कथमिदमेव द्वयं तत्प्रकाशमुच्यते, तत्राह,—'**तदीक्षणाये**' ति। विषयावच्छेदं विना परिपूर्णब्रह्मभूतो मांसमयैश्चक्षुरादिभिर्द्रष्टुं न शक्यते इत्यर्थ:॥ ३॥

यत्र यस्मिन् ज्ञाते ज्ञात्वा अनुष्ठिते सतीत्यर्थ:॥ ४॥

पराशर उवाच

यथा केशिध्वजः प्राह खाण्डिक्याय महात्मने।
जनकाय पुरा योगं तथाहं कथयामि ते॥५॥

मैत्रेय उवाच

खाण्डिक्यः कोऽभवद् ब्रह्मन् को वा केशिध्वजोऽभवत्।
कथं तयोश्च संवादो योगसम्बन्धवानभूत्॥६॥

पराशर उवाच

धर्म्मध्वजो वै जनकस्तस्य पुत्रो मितध्वजः।
कृतध्वजश्च नाम्ना स सदाध्यात्मरतिर्नृपः॥७॥
कृतध्वजस्य पुत्रोऽभूत् ख्यातः केशिध्वजो द्विजः।
पुत्रो मितध्वजस्यापि खाण्डिक्यो जनकोऽभवत्॥८॥
कर्म्ममार्गेऽति खाण्डिक्यः पृथिव्यामभवत् कृती।
केशिध्वजोऽप्यतीवासीदात्मविद्याविशारदः॥९॥
तावुभावपि खाण्डिक्यः विजिगीषु परस्परम्।
केशिध्वजेन खाण्डिक्यः स्वराष्ट्रादवरोपितः॥१०॥
पुरोधसा मन्त्रिभिश्च समवेतोऽल्पसाधनः।
राज्यान्निराकृतः सोऽथ दुर्गारण्यचरोऽभवत् • ॥११॥
इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः।
ब्रह्मविद्यामधिष्ठाय तर्त्तुं मृत्युमविद्यया॥१२॥

---

पूर्वाध्यायोपक्षिप्तमितिहासं योगनिरूपणार्थम् अनुवर्त्तयति—'**यथा केशिध्वज**' इत्यादिना यावदुत्तराध्यायसमाप्ति॥७॥

अति अतिशयितः कर्मभागे॥८-१०॥

अल्पसाधनः स्वल्पपरीवारः॥११॥

दुर्गं दुर्गम् यत् अरण्यं तत्र चरतीति सः दुर्गारण्यचरः।

स केशिध्वजः ज्ञानव्यपाश्रयः ज्ञाननिष्ठोऽपि ब्रह्मविद्यामधिष्ठाय ब्रह्मार्पणाभ्यासेन कर्त्तृकर्मादि सर्वं ब्रह्मैवेतिदृष्टया। बहून यज्ञान् इयाज कृतवान्. किमर्थम्? अविद्यया कर्मलक्षणया मृत्युं कामादिकषायशेषं तर्त्तुंक्षपयितुम्॥१२॥

एकदा वर्त्तमानस्य योग योगविदां वर।
धर्म्मधेनुं जघानोग्र-शार्द्दूलो विजने वने॥ १३॥
ततो राजा हतं ज्ञात्वा धेनुं व्याघ्रेण ऋत्विजः।
प्रायश्चितं स पप्रच्छ किमत्रेति विधीयते॥ १४॥
ते चोचुर्न वयं विद्मः कशेरुः पृच्छ्यतामिति।
कशेरुरपि तेनोक्तस्तथैव प्राह भार्गवम्॥ १५॥
शुनकं पृच्छ राजेन्द्र! नाहं वेद्मि स वेत्स्यति।
स गत्वा तमपृच्छच्च सोऽप्याह श्रृणु यन्मुने॥ १६॥
न कशेरुर्न चैवाहं न चान्यः साम्प्रतं भुवि।
वेत्त्येक एव त्वच्छत्रुः खाण्डिक्यो यो जितस्त्वया॥ १७॥
स चाहं तं प्रयाम्येष प्रष्टुमात्मरिपुं मुने।
प्राप्त एव मया यज्ञो यदि मां स हनिष्यति॥ १८॥
प्रायश्चित्तमशेषेण यदि पृष्टो वदिष्यति।
ततश्चाविकलो यागो मुनिश्रेष्ठ! भविष्यति॥ १९॥

पराशर उवाच

इत्युक्त्वा रथमारुह्य कृष्णाजिनधरो नृपः।
वनं जगाम यत्रास्ते खाण्डिक्यः स महामतिः॥ २०॥
तमायान्तं समालोक्य खाण्डिक्यो रिपुमात्मनः।
प्रोवाच क्रोधताम्राक्षः समारोपितकार्म्मुकः॥ २१॥

---

धर्मधेनुं होमधेनुं, धर्मदोग्ध्रीतिमिति पाठे प्रवर्ग्ये हरिर्विशेषो धर्मः तदर्थं पयोदोग्ध्रीं। शार्दूलो व्याघ्रः॥ १३॥

किमत्र प्रायश्चित्तं विधीयत इति पप्रच्छ॥ १४॥

तथैव तेनोक्तः कशेरुरपि शुनकं पृच्छेत्याहेत्यन्वयः॥ १५-१७॥

'प्राप्त एवे' ति। धर्मार्थं यतमानस्तु अन्तरा चेद्विपद्यते स धर्मफलमाप्नोतीत्यादिवचनात्॥ १८॥

अविकलो योगो भरिष्यतीति स चाहेति पूर्वोणान्वयः॥ १९-२१॥

खाण्डिक्य उवाच

कृष्णाजिनं त्वं कवचमावध्यास्मान्निहंस्यसि।
कृष्णाजिनधरे वेत्सि न मयि प्रहरिष्यति • ॥२२॥
मृगाणां वत पृष्ठेषु मूढ! कृष्णाजिनं न किम्।
येषां त्वया मया चोग्राः प्रहिताः शितसायकाः॥२३॥
स त्वामहं हनिष्यामि न मे जीवन् विमोक्ष्यसे।
आततायसि दुर्बुद्धे! मम राष्ट्रहरो रिपुः॥२४॥

केशिध्वज उवाच

खाण्डिक्य! संशयं प्रष्टुं भवन्तमहमागतः।
न त्वां हन्तुं विचार्यैतत् कोपं वाणञ्च मुञ्च च॥२५॥

पराशर उवाच

ततः स मन्त्रिभिः सार्द्धमेकान्ते सुपुरोहितः।
मन्त्रयामास खाण्डिक्यः सर्वैरेव महामतिः॥२६॥
तमूचुर्मन्त्रिणो वध्यो रिपुरेष वशं गतः।
हते तु पृथिवी सर्वा मम वश्या भविष्यति॥२७॥
खाण्डिक्यश्चाह तान् सर्वानितदेवं न संशयः।
हते तु पृथिवी सर्वा मम वश्या भविष्यति॥२८॥

---

कृष्णाजिनकवचबन्धे तस्याभिप्रायमुत्प्रेक्षयते। कृष्णाजिनधरे मयि खाण्डिक्यो न प्रहरिष्यतीति वेत्सि मन्यसे॥२२॥

कृष्णाजिनधरे मयि न प्रहरिष्यति मच्छत्रुरिति शेष इति वेतसि। निहंस्यसीत्यत्र इडागमाभाव आर्षः।

तद्व्यर्थमित्याह,—'**मृगाणा**'मिति। येषां पृष्ठेष्वित्यनुषङ्गः॥२३॥

मे मत्तः '**अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः क्षेत्रदारहरश्चैव षडेत आततायिनः**' इतिस्मृतेः। त्वमाततायी, अतः स्ववनस्थस्यापि ते वधे मे न दोषः, '**नाततायिवधे देषो हन्तुर्भवति कश्चने**' त्यादिवचनात्॥२४॥

कोपञ्च मुञ्च वाणञ्च मुञ्चेत्यन्वयः॥२५-२८॥

परलोकजयस्तस्य पृथिवी सकला मम।
न हन्मि चेल्लोकजयो मम तस्य वसुन्धरा।
नाहं मन्ये लोकजयादधिका स्याद् वसुन्धरा॥ २९॥
परलोकजयोऽनन्त: स्वल्पकालो महीजय:।
तस्मादेनं न हिंसिष्ये यत् पृच्छति वदामि तत्॥ ३०॥
ततस्तमभ्युपेत्याह खाण्डिक्यजनको रिपुम्।
प्रष्टव्यं यत्त्वया सर्वं तत् पृच्छस्व वदाम्यहम् • ॥ ३१॥
तत: सर्वं यथावृत्तं धर्मधेनुवधं द्विज।
कथयित्वा स पप्रच्छ प्रायश्चितं हि तद्‌गतम्॥ ३२॥
स चाचष्ट यथान्यायं द्विज! केशिध्वजाय तत्।
प्रायश्चित्तमशेषेण यद् वै तत्र विधीयते॥ ३३॥
विदितार्थ: स तेनैवं सोऽनुज्ञातो महात्मना।
यागभूमिमुपाश्रित्य चक्रे सर्वा: क्रिया: क्रमात्॥ ३४॥
क्रमेण विधिवद् यागं नीत्वा सोऽवभृथाप्लुत:।
कृतकृत्यस्ततो भूत्वा चिन्तयामास पार्थिव: ॥ ३५॥
पूजिता ऋत्विज: सर्वे सदस्या मानिता मया।
तथैवार्जिनोऽध्यर्थैर्योजितोऽभिमतैर्यथा॥ ३६॥

---

परलोकजयस्तस्येत्युक्तञ्च धर्मार्थं प्रवृतस्यान्तराम रणेऽपि तत्फलसिद्धे:, न हन्मि चेल्लोकजय इति । उपसन्नवधकृतपापप्रतिबन्धाभावे पूर्वैरेव पुण्यै: परलोकसिद्धेरितिभाव॥२९-३२॥

तं रिपुं केशिध्वजम्। पृच्छस्वेत्यात्मनेपदमार्षम्।

'स चाचष्टे'ति इममेव विषय प्रस्तुत्य वाजशनेयतके स्मृतिहोमाख्यं प्रायश्चित्तमुक्तम्। चन्द्रात्ते मनस्प्रणोमि स्वाहेत्यादि अस्य च प्रायश्चित्तस्य स्फुटत्वेऽपि यथा देशकालावस्थादिशेषं कल्पनीयम्। खाण्डिक्यादपरो न वेत्तीति पूर्वोक्तस्याभिप्राय:। यद्वै तत्र प्रायश्चित्तं विधीयते तदशेषं यथान्यायं केशिध्वजायच्टेति।।३३-३४।।

नीत्वा समाप्य।।३५-३६

यथार्हमस्य लोकस्य मया सर्वं विचेष्टितम्।
अनिष्पन्नक्रियं चेतस्तथापि मम किं यथा॥ ३७॥
इति सञ्चिन्त्य यत्नेन सस्मार स महीपतिः।
खाण्डिक्याय न दत्तेति मया वै गुरुदक्षिणा॥ ३८॥
जगाम च ततो भूयो रथमारुह्य पार्थिवः।
मैत्रेय! दुर्गगनहं खाण्डिक्यो यत्र संस्थितः॥ ३९॥
खाण्डिक्योऽपि तथायान्तं पुनर्दृष्ट्वा धृतायुधः।
तस्थौ हन्तुं कृतमतिस्तथाह स पुनर्नृपः॥ ४०॥
भो नाहं तेऽपकाराय प्राप्तः खाण्डिक्य! मा क्रुधः।
गुरोर्निष्क्रयदानाय मामवेहि त्वमागतम्॥ ४१॥
निष्पादितो मया यागः सम्यक् त्वदुपदेशतः।
सोऽहं ते दातुमिच्छामि वृणुष्व गुरुदक्षिणाम्॥ ४२॥
भूयः स मन्त्रिभिः सार्द्धं मन्त्रयामास पार्थिवः।
गुरुनिष्कृतिकामोऽत्र किमयं प्रार्थ्यतामिति॥ ४३॥
तमूचुर्मन्त्रिणो राज्यमशेषं प्रार्थ्यतामिति।
कृतिभिः प्रार्थ्यते राज्यमनायासित सैनिकैः॥ ४४॥
प्रहस्य तानाह नृपः स खाण्डिक्यो महामतिः।
स्वल्पकालं महीराज्यं मादृशैः प्रार्थ्यते कथम्॥ ४५॥
एवमेतद्भवन्तोऽत्र ह्यर्थसाधनमन्त्रिणः।
परमार्थः कथं कोऽत्र यूयं नात्र विचक्षणाः॥ ४६॥

---

तथापि यथावदनिष्पन्नक्रियम् अकृतकृत्यमिवाप्रसन्नं मम चेतः किमिति तिष्ठतीति चिन्तयामासेत्यन्वयः।।३९-४०।।

भोः खाण्डिक्य! मा क्रुधः क्रोधं मा कार्षीः।।४१-४३।।

अनायासिताः युद्धादिक्लेशमप्रापिताः सैनिकाः यैः।।४४-४५।।

अत्र राज्ये अर्थसाधने मन्त्रिणः। अत्र संसारे कः परमार्थः,स च कथं भवतीत्यत्रार्ते यूयं न पण्डिताः।।४६-४८।।

इत्युक्त्वा समुपेत्यैनं स तु केशिध्वजं नृपम्।
उवाच किमवश्यं त्वं ददासि गुरुदक्षिणाम्॥ ४७॥
बाढमित्येव तेनोक्तः खाण्डिक्यस्तमथाब्रवीत्।
भवानध्यात्मविज्ञानपरमार्थविचक्षणः॥ ४८॥
यदि चेद्दीयते मह्य भवता गुरुनिष्क्रयः।
तत् क्लेशप्रशमायालं यत् कर्म्म तदुदीरय॥ ४९॥

इति श्रीविष्णुपुराणे षष्ठांशे षष्ठः अध्यायः॥

---

तत् तर्हि।।४९।।

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा
श्रीविष्णुपुराणटीकायां षष्ठांशे षष्ठोऽध्यायः।

# सप्तमोऽध्यायः

## (ब्रह्मयोगनिर्णयः)

केशिध्वज उवाच

**न प्रार्थितं त्वया कस्मान्मम राज्यमकण्टकम्।**
**राज्यलाभाद् विना नान्यत् क्षत्रियाणामतिप्रियम् * ॥१॥**

खाण्डिक्य उवाच

**केशिध्वज निबोध त्वं मया न प्रार्थित यतः।**
**राज्यमेतदशेषं ते यत्र गृध्यन्तपण्डिताः॥ २॥**
**क्षत्रियाणामयं धर्म्मो यत् प्रजापरिपालनम्।**
**वधश्च धर्म्मयुद्धेन स्वराज्यपरिपन्थिनाम्॥ ३॥**
**यत्राशक्तस्य मे दोषो नैवास्त्यपहृते त्वया।**
**बन्धायैव भवत्येषा अविद्याप्यक्रमोज्झिता॥ ४॥**
**जन्मोपभोगलिप्सार्थमियं राज्यस्पृहा मम।**

---

खाण्डिक्याय ददौ विद्यामविद्यागुरवे वरम्।
केशिध्वजो न तच्चित्रं न ह्यदेयं महीयसाम्॥

तत्त्वं जिज्ञासवे खाण्डिक्याय तत्त्वज्ञानमुपदेष्टु केशिध्वजस्तस्य विवेकवैराग्यपरीक्षार्थमाह— न '**प्रार्थित**' मिति। अकण्टकं निष्प्रतिपक्ष राज्यं विना प्रजापालनादेः क्षत्रधर्मस्यासिद्धेः तत्सिद्धये राज्यप्रार्थनैव युक्ता। अन्यथा स्वधर्महानिप्रसङ्ग स्यादिति भावः॥१॥

न विद्यते कण्टकः क्षुद्रशत्रुर्यत्र तत् अकण्टकं क्षुद्रेणापि शत्रुणा शून्यम्, '**सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टक**' इति कोषात्।

अत्रोत्तरं केशिध्वजेत्यादि। यतः कारणात् त्वदीयं राज्यं मया न प्रार्थित तदिदं निबोध श्रृणु। यत्र राज्ये अपण्डिताः अविवेकिनो भोगलिप्सव एव गृध्यन्ति अपेक्षां कुर्वन्ति॥२॥

ननु स्वधर्मसिद्धये पण्डितानामपि राज्याकांक्षा युक्तैबेत्युक्तं तत्राह—'**क्षत्रियाणा**' मिति। यत् प्रजापालनं, यश्च स्वराज्यप्रतिक्षाणां वध, अयं राज्याधिकृतानां क्षत्रियाणां धर्मः, न तु क्षत्रियमात्रस्य॥३॥

**अन्येषां दोषजा नैषा धर्ममेवानुरुध्यते॥५॥**

**न याञ्चा क्षत्रबन्धूनां धर्म्मो ह्येतत् सतां मतम्।**

**अतो न याचितं राज्यविद्यान्तर्गतं तव॥६॥**

**राज्ये गृध्यन्त्यविद्वांसो ममत्वाहतचेतसः।**

**अहम्मानमहापान-मदमत्ता न मादृशः॥७॥**

पराशर उवाच

**प्रहृष्टः साध्विति प्राह ततः केशिध्वजो नृपः।**

**खाण्डिक्यजनकं प्रीत्या श्रूयतां वचनं मम॥८॥**

**अहन्त्वविद्यामृत्युञ्च तर्त्तुकामः करोमि वै।**

**राज्यं यागांश्च विविधान् भोगैः पुण्यक्षयं तथा॥९॥**

---

एवञ्च सति मम वा मन्मन्त्रिणां वा त्वद्राज्यस्पृहा धर्मो न भवतीत्याह'**जन्मे**'ति। यदैवं धर्मः, तदा मयेयं राज्यस्पृहा राजजन्मोचितच्छत्रचामराद्युपभोगलिप्सार्थमेव भवेत, न धर्मार्थ, अन्येषां सचिवादीनामियं त्वद्राज्यास्पहा राज्यलोभादिदोषजा। अधर्ममेव केवलं नानुरुध्यते नानुवर्तते, अपि तु धर्मच्छलेन अर्थशास्त्रमेवानुवर्तते इत्यर्थः॥५॥

ननुं तथापि याञ्चामात्रेण राज्यं लब्धवा महान् धर्मः किमिति नानुष्ठीयते? तत्राह'**यातत्रे**'ति। अतोऽधर्मत्वात् अविद्यान्तर्गततत्वाञ्च त्वदीयं राज्यं मया न प्रार्थितम्॥६॥

अतो '**यत्र गृध्यन्तपण्डिता**' इति यदुक्तं तदेव सिद्धमित्याह—'**राज्य**' इति। अहंमान एव महापानं तेन यो मद तेन मत्ताः।।७।।

'**खाण्डिक्येनोक्तं श्रुत्वा कोशिध्वजः किं कृतवानित्यपेक्षायामाह प्रहृष्टः साध्वि**' ति। ततः प्रकृष्ट इति पाठे तव बुद्धिरिति शेषः॥८॥

अविद्यामयेऽपि राज्ये स्वप्रवृत्तौ तावत् कारणमाह—'**अविद्ये**'ति। सत्यं त्वयोक्तम् अविद्यान्तर्गततत्वात् राज्यमनुपादेयमिति, तच्च ममपि तुल्यम्, तथाप्यविद्यया प्रजापालनादिलक्षणया सत्त्वशुद्धया कामक्रोधादिलक्षणं मृंत्यु संसारहेतुं तर्त्तुमिच्छन् अहं राज्यादि करोमि। '**अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत**' इति श्रुतेः॥९॥

**तदिदं ते मनो दिष्ट्या विवेकैश्वर्यतां गतम्।**
**श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन॥१०॥**
**अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः।**
**अविद्यातरुसम्भूतेर्बीजमेतद् द्विधा स्थितम्॥११॥**
**पञ्चभूतात्मके देहे देही मोहतमोवृतः।**
**अहमेतदितीत्युच्चैः कुरुते कुमतिर्मतिम्॥१२॥**
**आकाश-वाय्वग्नि-जल-पृथिवीभ्यः पृथक् स्थिते।**
**आत्मन्यात्ममयं भावं कः करोति कलेवरे॥१३॥**
**कलेवरोपभोग्यं हि गृहक्षेत्रादिकञ्च कः।**
**अदेहे ह्यात्मनि प्राज्ञो ममेदमिति मन्यते॥१४॥**
**इत्थञ्च पुत्र-पौत्रेषु तद्देहोत्पादितेषु कः।**
**करोति पण्डितः स्वाम्यमनात्मनि कलेवरे॥१५॥**

---

पुनस्तदिदं मनोविवेकैश्वर्य्यतां विवेके ऐश्वर्यं सामर्थ्य यस्य तस्य भावो विवेकैस्वर्य्यता तां गतं प्राप्तम्. उपदेशाद्यनपेक्ष्य स्वयमेव विवेकाधिकारतां प्राप्तं, एतद्दिष्ट्याभद्रमित्यर्थः। **'विवेकैश्वर्य्यमागत'** मिति तु पाठः सुगम। तदेवं शिष्यस्य विवेकादिकं परीक्ष्य अभिनन्द्य चेदानीं तेन यत् पुष्टः तत् **'क्लेशप्रशमायालं यत् कर्म तदुदीरये'** ति तद्वक्तुं प्रथमं तावत् अविद्यास्थं क्लेशस्वरूपं दर्शयति—**'तत् श्रूयता'** मित्यादिनासार्द्धेन श्लोकेन॥१०॥

अनात्मनि देहादौ अस्वे क्षेत्रादौ च अहं ममेति या मतिः सा अविद्या विपर्ययरूपा,एतस्या अनर्थ हेतुत्वमाह—एतद्द्विधा दर्शितमाविद्यास्वरूपं संसाररूपं भूतेर्बीजतया स्थितम्॥११॥

देहादावहंमानस्याविद्यात्वमुपपादयति—**'पञ्चे'**ति। पञ्चभूतात्मके देहे देही कुमतिः विपर्यस्तमतिः अहमेतदिति मतिं कुरुते। द्वितीय इतिशब्दस्तदावृत्त्यर्थः। विपर्य्यासे हेतुः मोहतमसा स्वरूपज्ञानेनावृत इति। अज्ञाते हि वस्तुस्वरूपे विपर्यासो भवति॥१२॥

कुमतित्वमेव स्पष्टयति—**'आकाशे'**। आकाशादिभ्यः तत्साक्षितया आत्मनि पृथक् स्थिते सति तत्कार्ये देहे अहम्भावं कः कुर्यात्॥१३॥

मम—प्रत्ययस्यापि मिथ्यात्वं स्फुटयति—**'कलेवरे'**ति द्वाभ्याम्। अदेहे देहत्वतिरिक्ते आत्मनि सति देहोपभोग्यं गृहादि मदीयमिति कः प्राज्ञो मन्येते॥१४॥

एवं कलेवरे अनात्मनि सति तदुत्पादितेषु पुत्रादिषु कः स्वाम्यं कुर्यात्॥१५॥

**सर्वं देहोपभोगाय कुरुते कर्म्म मानवः।**
**देहश्चान्यो यदा पुंसस्तदा बन्धाय तत्परम्॥ १६॥**
**मृन्मयञ्च यथा गेहं लिप्यते च मृदम्भसा।**
**पार्थिवोऽयं तथा देहो मृदन्नालेपनस्थितिः॥ १७॥**
**पञ्चभूतात्मकैर्भोगैः पञ्चभूतात्मकं वपुः।**
**आप्यायते यदि ततः पुंसो गर्वोऽत्र किं ततः॥ १८॥**
**अनेकजन्मसाहस्रीं संसारपदवीं व्रजन्।**
**मोहश्रमं प्रयातोऽसौ वासनारेणुगुण्ठितः॥ १९॥**
**प्रक्षाल्यते यदा सोऽस्य रेणुर्ज्ञानोष्णवारिणा।**
**तदा संसारपान्थस्य याति मोहश्रमः शमम्॥ २०॥**
**मोहश्रमे शमं याते स्वस्थान्तः करणः पुमान्।**
**अनन्यातिशयाबाधं परं निर्वाणमृच्छति॥ २१॥**

---

तदेवं देहगेहादिष्वहं ममाभिमानयोरविद्यात्वं समर्पितम् इदानीं तत्पूर्वकं कर्त्तुत्वभोक्तृताद्यपि अविद्यामयमेवेत्याह—'**सर्व**'मित्यादिना। देहश्च यदा पुंसः सकाशादन्यस्तदा पुंसो भोगसम्बन्धो नास्त्येव, परं केवलं तत् कर्म्म तस्य बन्धायैव स्यात्॥ १६॥

देहोपभोगायेति यदुक्तं तदेव दृष्टान्तेन समर्थयते—'**मृन्मये**'ति द्वाभ्याम्। मृदम्बुभ्यामन्नपानरूपाभ्यामालेपनेन स्थितिर्यस्य स तथा॥ १७॥

भोगैर्भुज्यमानैरन्नादिभिः॥ १८॥

देहकर्म पुंसो बन्धायेत्युक्तम्, तत्र हेतुमाह—'**अनेके**'ति, सहस्रमेव साहस्रम् अनेकानि जन्मसाहस्रणि यस्यास्तां संसाररूपां पदवीं मार्ग गच्छन् असौ पुमान् मोरश्रमं मोहः कर्त्तृत्वभोक्तृत्वाभिनिवेशः तत्कृतश्रमं प्राप्तः। यतः वासनां अहंममेत्यादिमिथ्याज्ञानंसंस्कारः सैव रेणुः तेन गुण्ठितः॥ १९॥

कदा तस्य श्रमस्योपशम इत्येपेक्षायामाह '**प्रक्षाल्यते**'इति। ज्ञानत्मकेनोष्णवारिणा उष्णोदकेन हि सुखेनैवान्तर्गतोऽपि मलः प्रकर्षेण क्षाल्यते॥ २०॥

ततः किमत आह—'**मोहश्रम**' इति। न विद्यते अन्यस्यातिशयो यस्मिन् तदनन्नातिशयं तच्च तदबाधञ्च निरुपद्रवं निर्वाण सुखं परं मोक्षाख्यं प्राप्नोति॥ २१॥

निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः।
दुःखाज्ञानमला धर्म्माः प्रकृतेस्ते तु नात्मनः॥ २२॥
जलस्य नाग्निसंसर्गः स्थालीसङ्गात्तथापि हि।
शब्दोद्रेकादिकान् धर्म्मांस्तत् करोति यथा मुने॥ २३॥
तथात्मा प्रकृतेः सङ्गादहम्मानादिदूषितः।
भजते प्राकृतान् धर्म्मानभ्यस्तेभ्यो हि सोऽव्ययः॥ २४॥
तदेतत् कथितं बीजमविद्यायास्तव प्रभो।
क्लेशानाञ्च क्षयकरं योगादन्यन्न विद्यते॥ २५॥

खाण्डिक्य उवाच

तन्तु ब्रूहि महाभाग! योगं योगविदुत्तम!
विज्ञातयोगशास्त्रार्थस्त्वमस्यां निमिसन्ततौ॥ २६॥

केशिध्वज उवाच

योगस्वरूपं खाण्डिक्य! श्रूयतां गदतो मम।
यत्र स्थितो न च्यवते प्राप्य ब्रह्मलयं मूनिः ॥ २७॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः।
बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं तथा॥ २८॥

---

नन्वेवं निर्वाणस्यागन्तुकत्वे अनित्यता प्रसज्येत, अत आह—'**निर्वाणमय**' एवेति॥ २२॥

कथं तर्हि आत्मनि दुःखादिप्रतीतिस्तत्राह—'**जल**'ति द्वाभ्याम्। अग्निसंसर्गेण तासायाः स्थाल्याः सङ्गात् तदन्तः स्थितं जलं शब्दमुद्रेकञ्च आदिशब्दात् शोषमुष्णत्वादींश्च यथा करोति भजते॥ २३॥

तथा प्राकृते देहे अहंमानात्तत्कर्म्माणि भजते॥ २४॥

अविद्यामुपसंहरंस्तन्निवर्त्तकं योगमुपसंहरति— '**तदेत**'दिति। अविद्यायाः पञ्चक्लेशाख्यविपर्ययरूपायाः बीजं मोहतमः संज्ञम् आत्मावरणमज्ञानम्॥ २५-२६॥

यत्र योगे स्थितः आरूढो मुनिः ब्रह्मलयं प्राप्य न च्यवते पुनर्न संसरति॥ २७॥

योगेऽवस्थितिर्मनसो विषयवैतृष्ण्यं विना न सिध्यतीत्याशयेनाह—'**मन**' इति॥ २८॥

विषयेभ्यः समाहृत्य विज्ञानात्मा मनो मुनिः।
चिन्तयेन्मुक्तये तेन ब्रह्मभूतं परमेश्वरम्॥ २९॥
आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुनिम्।
विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा॥ ३०॥
आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः।
तस्य ब्रह्मणि संयोगो योग इत्यभिधीयते॥ ३१॥
एवमत्यन्तवैशिष्ट्ययुक्त कर्मोपलक्षणः।
यस्य योगस्य वै योगी मुमुक्षुरभिधीयते॥ ३२॥
योगयुक् प्रथमं योगी युञ्जानो ह्यभिधीयते।
विनिष्पन्नसमाधिस्तु परं ब्रह्मोपलब्धिमान्॥ ३३॥
यद्यन्तरायदोषेण दूष्यते नास्य मानसम्।
जन्मान्तरैरभ्यसतो मुक्तिः पूर्वस्य जायते ॥ ३४॥

---

अतो मुमुक्षुरेवं कुर्यादित्याह—'**विषयेभ्य**'इति। विज्ञानात्मा विवेकज्ञानयुक्तः पुमान् शब्दादिभ्यो मनः प्रत्याहृत्य तेन मनसा परम् ईश्वरं चिन्तयेत् ॥२९॥

ततः किमत आह—'**आत्मभाव**'मिति। चिन्तितं तद्ब्रह्म एवन्ध्यायिनं पुरुषम् आत्मभावम् आत्मैक्यं नयति विकार्य विकारार्हं लोहं स्वशक्त्या आकर्षः अयस्कान्तो यथा। अयन्तु दृष्टान्तः संयोगमात्रे, न तु तदैक्ये॥ ३०॥

इदानीं योगस्वरूपं दर्शयति—'**आत्मे**'ति। आत्मनः प्रयत्नो यमनियमादिविषयः, तत्सापेक्षा तदधाना विशिष्टा सत्त्वमयी या मनसो वृत्तिः तस्या ब्रह्मण्येव संयोगो योगः॥ ३१॥

योगिनो लक्षणमाह—'**एवमि**'ति। एवमनेन प्रकारेणात्यन्तवैशिष्ट्यक्तो धर्म उपलक्षणं यस्य योगस्य स एव योगी मुमुक्षुश्च, अन्यस्तु केवलं दाम्भिकं इत्यर्थः॥ ३२॥

इदानीं योगिनोऽवस्थाभेदेन त्रैविध्यमाह—'**योगयु**'गिति। प्रथमं योगनिष्पत्तेः पूर्व तदर्थं योगाभ्यासं कुर्वन् योगयुगित्युच्यते, परं ततः पश्चात् ब्रह्मोपलब्धिमान् सन् विनिष्पन्नसमाधिः कथ्यते॥ ३३॥

तयोर्मुक्तौ कश्चिद्विशेषमाह—'**यदी**'ति द्वाभ्याम्। आलस्यं व्याधयस्तीव्राः प्रमादः स्थानसंशयः।अनवस्थितचित्तत्वमश्रद्धा भ्रान्तिदर्शनम् दुःखानि दौर्म्मनस्यञ्च विषयेषु च लोलते'त्येवमाद्यन्तरायरूपेण पूर्वस्य योगयुक्संज्ञस्य॥ ३४॥

विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि।

प्राप्नोति योगी योगाग्निदग्धकर्म्मचयोऽचिरात्॥ ३५॥

ब्रह्मचर्यमहिंसा च सत्यास्तेयापरिग्रहान्।

सेवेत योगी निष्कामो योग्यतां स्वमनो नयन्॥ ३६॥

स्वाध्याय-शौच-सन्तोष-तपांसि नियतात्मवान्।

कुर्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः॥ ३७॥

एते यमाः सनियमाः पञ्च पञ्च प्रकीर्त्तिताः।

विशिष्टफलदाः काम्याः निष्कामाणां विमुक्तिदाः॥ ३८॥

एकं भद्रासनादीनां समास्थाय गुणैर्युतः।

यमाख्यैर्नियमाख्यैश्च युञ्जीत नियतो यतिः॥ ३९॥

प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते तु यत्।

प्राणायामः स विज्ञेयः सबीजोऽबीज एव च॥ ४०॥

---

योगाग्निदग्ध कर्मसमूहः॥ ३५॥

इदानीं यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधय इत्यष्टौ योगाङ्गानि क्रमेण दर्शयिष्यन् यमनियममाह—'**ब्रह्मचर्य**'मित्यादित्रिभिः॥ ३६॥

स्वीयं मनोब्रह्मप्रवेशे योग्यतां प्रापयन् परस्मिन् ब्रह्मणि मनः प्रवणं कुर्वीतेत्यनेन ईश्वरप्रणिधानाख्यं पञ्चमं नियमं दर्शयति॥ ३७-३८॥

आसनमाह—'**एक**' मिति। यमाख्यैर्निमाख्यैश्च गुणैर्युतः सन्। भद्रासनादीनां लक्षणमुक्तं योगियागवल्कीये—गुल्फौ तु वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत्। पार्श्वे पादौ च हस्ताभ्यां दृढं बद्ध्वा सुनिश्चलम्। भद्रासनं भवेदेतत् सर्वव्याधिविनाशन' मित्यादि.॥ ३९॥

प्राणायाममाह—'**प्राणाख्यमि**'त्यादि। सबीजः सालम्बनो भगवन्मूर्तिध्यानमन्त्रजप-सहितः॥ ४०॥

परस्परेणाभिभवं प्राणापानौ यदानिलौ।
कुरुतः सद्विधानेन तृतीयः संयमात्तयोः॥४१॥
तस्य चालम्बनवतः स्थूलं रूपं द्विजोत्तम।
आलम्बनमनन्तस्य योगिनोऽभ्यसतः स्मृतम्॥४२॥
शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित्।
कुर्याच्चित्तानुचारीणि प्रत्याहारपरायणः॥४३॥
वश्यता परमा तेन जायतेऽतिचलात्मनाम्।
इन्द्रियाणामवश्यैस्तैर्न योगी योगसाधकः॥४४॥

प्राणायामेन पवनैः प्रत्याहारेण चेन्द्रियैः।
वशीकृतैस्ततः कुर्यात् स्थिरं चेतः शुभाश्रये॥४५॥

खाण्डिक्य उवाच

कथ्यतां मे महाभाग! चेतसो यः शुभाश्रयः।
यदाधारमशेषं तद्धन्ति दोषसमुद्भवम्॥४६॥

केशिध्वज उवाच

---

द्विविधस्यापि तस्य पुनस्त्रैविध्यमाह—'**परस्परेणे**'ति। निश्वासेनासिकाभ्यां निर्गच्छति यो वायुः स प्राणः। उच्छ्वासेनान्तः प्रविशति यः सोऽपानः। तत्र प्राणवृत्त्या अपानवृत्तेरभिभवो निरोधो रेचकाख्यः प्राणायाम। एवमपानवृत्त्या प्राणावृत्तेरभिभवः पूरकाख्यः । एवमनेन परस्परभिभवप्रकारद्वयेन स प्राणायामो द्विधा। अनयोर्युगपत् संयमात् कुम्भकाख्यस्तृतीयः प्राणायामः. यद्वा सद्विधानेनेत्येकमेव पदं तत्र चायमर्थः। सद्विधानेन सद्गुरुपदिष्यमार्गेण रेचकपूरकाभ्यां यत् परस्पराभिभूतं द्वयम्। यश्च कुम्भकेनोभयोः सहाभिभवः। एवमभिभवत्रयेणैकः प्राणायाम इति॥४१॥

सवीजस्यालम्बनमाह—'**तस्य चे**'ति स्थूलं वक्ष्यमाणं हिरण्यगर्भादिरूपम्॥४२॥

प्रत्याहारमाह—'**शब्दादिष्व**'ति चित्तानुचारीणिचित्तालम्बनादन्यालम्बनशून्यानीत्यर्थः॥

तस्मात् प्राणायामप्रत्याहारपूर्वकमेव धारणामभ्यसेदित्याह'**प्राणायमेने**'ति॥४५॥

यदाधारञ्चेतो दोषफलानामन्तरायाणामुद्भवं हन्ति स आश्रयः कथ्यताम्॥४६॥

**आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वभावतः।**

**भूप मूर्तममूर्तञ्च परञ्चापरमेव च॥४७॥**

**त्रिविधा भावना भूप! विश्वमेतन्निबोध मे।**

**ब्रह्माख्या कर्म्मसंज्ञा च तथा चैवोभयात्मिका॥४८॥**

**ब्रह्मभावात्मिका ह्येका कर्मभावात्मिका परा।**

**उभयात्मिका तथैवान्या त्रिविधा भावभावना॥४९॥**

**सनन्दनादयो ब्रह्मन् ब्रह्मभावनया युताः।**

**कर्मभावनया चान्ये देवाद्याः स्थावराश्चराः॥५०॥**

**हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा।**

**बोधाधिकारयुक्तेषु विद्यते भावभावना॥५१॥**

**अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु।**

---

तमेवाह—'**आश्रय**'इति। चेतस आश्रयो ब्रह्मैव, तच्च मन्दमध्यमोत्तमाधिकारिणां यथायोग्यं मूर्त्तामूर्त्तपरापरभेदेन चतुर्धावस्थितं क्रमेण धारणे विषय इति दर्शयितुं ब्रह्मणश्चातुर्विध्यमाह। तच्च ब्रह्म मूर्त्तममूर्त्तं चेति द्विधा स्वभावतः स्वेच्छातः मूर्त्तं मूर्त्तिमत् अमूर्त्तं तद्रहितं, ततः प्रत्येकं परञ्चापरञ्चेति द्विधाः. तत्र परममूर्त्त षड्गुणेश्वररूपम्। परं मूर्त्तं पद्मनाभादिलीलाविग्रहरूपम् अपरमूर्त्तं हिरण्यगर्भादिविश्वरूपम्॥४७॥

तदेवं परब्रह्मेश्वरलीलामूर्त्तिरूपतया चतुर्धेत्युक्तम् तत्र चतुर्थं विश्वाख्यं रूपमाह —'**त्रिविधे**' त्यादिना, त्रिविधभावनाश्रयजीवात्मकात्वात् तदुपचारेण त्रिविधा भावनेत्युच्यते। तद्धि हरेः स्थूलं रूपम्, अतः पररूपप्रप्त्युपायत्वात् तत्र प्रथमं मनः सन्धार्यमिति भावः। भावना नाम ज्ञानविशेषजा वासना, तां त्रिविधामपि संज्ञयोद्दिशति—'**ब्रह्माख्ये**' ति॥४८॥

तामेव विषयत्रैविध्येन विविनक्ति'**ब्रह्मभावात्मिके**' ति। भाव भावना भावो वस्तु तद् विषया भावना त्रिविधा॥४९॥

तत्र वयं ब्रह्मैव भवामः,वयं कर्मैव कुर्मः, वयं पुनरुभयमिदमनुसंदध्म इत्येवं त्रिविधभावनायुक्तान् जीवानुदाहरति'**सनन्दनादय**' इति द्वाभ्याम्॥५०॥

बोधः स्वरूपविषयः अधिकारश्च सर्गादिविषयः, तद्युक्तेषु तदुभयानुसन्धानात्मिका द्विधाः भावना विद्यते॥५१॥

विश्वमेतत् परं चान्यद् भेदभिन्नदृशां नृप॥५२॥
प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥५३॥
तच्च विष्णोः परं रूपमरूपस्याजमक्षरम्।
विश्वरूपाच्च वैरूप्यलक्षणं परमात्मनः॥५४॥
न तद्योगयुजा शक्यं नृप! चिन्तयितुं यतः।
ततः स्थूलं हरे रूपं चिन्तयेद् विश्वगोचरम्॥५५॥
हिरण्यगर्भो भगवान् वासवोऽथ प्रजापतिः.
मारुतो वसवो रुद्रा भास्करास्तारका ग्रहाः॥५६॥
गन्धर्व-यक्षा दैत्याद्याः सकला देवयोनयः।
मनुष्याः पशवः शैलाः समुद्राः सरितो द्रुमाः॥५७॥
भूप! भूतान्यशेषाणि भूतानां ये च हेतवः।
प्रधानादि विशेषान्तं चेतनाचेतनात्मकम्॥५८॥
एकपादं द्विपादञ्च बहुपादमपादकम्।

---

ब्रह्मभावनावन्तोऽपि सनन्दनादयो जीवा एव देहानुसन्धानानिवृत्तेरित्याशयेनाह—'अक्षीणेष्वि' ति विशेषज्ञानहेतुषु कर्म्मसु निःशेषमक्षीणेषु सत्सु विश्वमेतदन्यत् परं ब्रह्म चान्यद्भाति भेदेन भेदकरेण अहङ्कारेण भिन्नदृशाम् अभ्यस्तेऽपि ध्यात्ध्येयभेददर्शित्वात् स्थूलविश्वान्तःपातिन एवेत्यर्थः॥५२॥

शुद्धब्रह्मस्वरूपमाह—'प्रत्यस्तमिते' ति द्वाभ्याम्। प्रत्यस्तमितः प्रविलीनो भेदो यस्मिन् तत् वचसामगोचरम् स्वसंवेद्यं स्वानुभवगम्यम्॥५३॥

विश्वरूपाद्वैरूप्यं वैलक्षण्यमेव लक्षणं यस्य तज्ज्ञानं परमात्मनो विष्णोः पररूपमित्यन्वयः॥५४॥

ननु तर्हिं श्रेष्ठत्वादिदमेव चिन्तयितं युक्तं तत्राह—'ने' ति योगयुजा प्रथमाभ्यासिना॥५५॥

स्थुलंरूपं प्रपञ्चयति—'हिरण्यगर्भ'इत्यादिपञ्चभिः॥५६-५७॥

विशेषान्तं पृथिव्यन्तम्॥५८॥

**मूर्त्तमेतद्धरे रूपं भावनात्रितयात्मकम्॥ ५९॥**

**एतत् सर्वमिदं विश्वं जगदेतच्चराचरम्।**

**परब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम्॥ ६०॥**

**विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा।**

**अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते॥ ६१॥**

**यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा।**

**संसारतापनखिलानवाप्नोत्यनुसन्ततान्॥ ६२॥**

**तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता।**

**सर्वभूतेषु भूपाल! तारतम्येन लक्ष्यते॥ ६३॥**

**अप्राणवत्सु स्वल्पाल्पा स्थावरेषु ततोऽधिका।**

**सरीसृपेषु तेभ्योऽन्याप्यतिशक्त्या पतत्रिषु॥ ६४॥**

---

एतानि सर्वाणि चराचराणि यस्मिंस्तज्जगदिदं इदङ्कारास्पदं विश्वाख्यं मूर्त्त हरे रूपमित्यन्वयः॥५९॥

एतच्च न तत्त्वतो विष्णोः स्वरूपमिति चिन्तनीयं, किन्तु तच्छक्तिव्याप्तमित्याह—'**शक्तिसमन्वित**'मिति॥६०॥

कासौ शक्तिः, यया व्याप्तमित्यत आह—विष्णुशक्तिः विष्णोः स्वरूपभूता परा चित्स्वरूपा शक्तिः। परमपदपरब्रह्मपरतत्त्वाद्याख्या प्रोक्ता। प्रत्यस्तमितभेदं यत् सत्तामात्रमित्यत्र प्रागुक्तं स्वरूपमेव कार्य्यन्मुखं शक्तिशब्देनोक्तम्। इदानीं परमशक्ति व्याप्तं भावनात्रयात्मकं क्षेत्रस्वरूपं प्रपञ्चयिष्यन्नाह क्षेत्रज्ञाख्येति। व्याप्यव्यापकभेदहेतुभूतं विष्णोः शक्त्यन्तरमाह—'**अविद्ये**'ति। अविद्येति कर्मेति च संज्ञा यस्याः सा। तथा च मायोपलक्ष्यते, हेतुहेतुमतोरविद्याकर्मणोरेकीकृत्योक्तिः, संसारलक्षणकार्यैक्यात्॥६१॥

तदेवमाह—'**यये**'ति वस्तुतः सर्वगता अपि सा क्षेत्रज्ञशक्तिः यया अविद्यया वेष्टिता आश्लिष्टा सती भेदं प्राप्य कर्मभिः संसारतापान् प्राप्नोतीत्यर्थः॥६२॥

जीवानां न्यूनाधिकभावेऽपि सैव हेतुरित्याह—'**तये**' ति॥६३॥

तारतम्यमेवाह—'**अप्राणवत्स्वि**'त्यादि—सार्द्धैश्रुतिभिः। अप्राणवत्सु अनभिव्यक्तप्राणेषु स्वल्पा अत्यन्तमल्पा, स्थावरेषु अल्पा अल्पतोऽधिका, सरीसृपेषु क्षुद्रजन्तुषु ततोऽप्यधिका, पतत्रिषु अतिशक्त्या अधिकशक्त्या लक्ष्यते॥६४-६५॥

पतत्रिभ्यो मृगास्तेभ्यः स्वशक्त्या पशवोऽधिका।
पशुभ्यो मनुजाश्चातिशक्त्या पुंसः प्रभाविता:॥६५॥
तेभ्योऽपि नाग-गन्धर्व-यक्षाद्या देवता नृप।
शक्रः समस्तदेवेभ्यस्ततश्चाति प्रजापति:॥६६॥
हिरण्यगर्भोऽति ततः पुंसः शक्त्युपलक्षितः।
एतान्यशेषरूपस्य तस्य रूपाणि पार्थिव॥६७॥
यतस्तच्छक्तियोगेन व्याप्तानि नभसा यथा।
द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामते॥६८॥
अमूर्त्तं ब्रह्मणो रूपं यत् सदित्युच्यते बुधैः।
समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिता:॥६९॥
तद्विश्वरूपरूपं वै रूपमन्यद्धरैर्महत्।
समस्तशक्तिरूपाणि तत् करोति जनेश्वर॥७०॥
देव-तिर्य्यङ्मनुष्यादिचेष्टावन्ति स्वलीलया।
जगतामुपकाराय न सा कर्मनिमित्तजा।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका॥७१॥
तद्रूपं विश्वरूपस्य तस्य योगयुजा नृप!
चिन्त्यमात्मविशुद्ध्यर्थं सर्वकिल्विषनाशनम् ॥७२॥
यथाग्निरुद्धतशिखः कक्षं दहति सानिलः।

---

ततः शक्रदतिशयितः प्रजापतिः॥६६-६७॥

असङ्गत्वेपि सर्वव्याप्तौ दृष्टान्तो'**नभसा**' यथे' ति। तदेवं मूर्त्तयोर्मध्ये स्थूलं रूपं प्रपञ्चितम्. अमूर्त्तयोस्तु प्रथमं रूपं ब्रह्मोक्तं द्वितीयं अमूर्त्तसच्छब्दादिवाच्यं ईश्वराख्यं रूपमाह—'**द्वितीय**' मिति। योगिध्येयम् आरूढयोगिभिश्चिन्त्यम्॥६८॥

तदेव विशिनष्टि—'**समस्ता**' इति। एताः कार्यमय्यः समस्ताः शक्त्यो यत्र ईश्वरे सर्व्वकारणभूते प्रतिष्ठिताः॥६९॥

अत एव विश्वरूपं विश्वं रूप्यते येन तत्। महत् सर्वोत्कृष्टम्। लीलाविग्रहरूपस्य मूर्त्तस्य परस्य तत एवाविर्भावमाह '**समस्ते**' ति। समस्तशक्तियुक्तानि रूपाणि॥७०॥

तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्विषम्॥७३॥
तस्मात् समस्तशक्तीनामाधारे तत्र चेतसः।
कुर्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा॥७४॥
शुभाश्रयः स चित्तस्य सर्वगस्य तथात्मनः।
त्रिभावभावनातीतो मुक्तये योगिनां नृप॥७५॥
अन्ये च पुरुषव्याघ्र! चेतसो ये व्यपाश्रयाः।
अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः॥७६॥
मूर्त्तं भगवतो रूपं सर्वापाश्रयनिःस्पृहम्।
एषा वै धारणा ज्ञेया यच्चितं तत्र धार्यते॥७७॥
यच्च मूर्त्तं हरे रूपं यादृक् चिन्त्यं नराधिपः।
तच्छ्रूयतामनाधारे धारणा नोपपद्यते॥७८॥
प्रसन्नचारुवदनं पद्मपत्रोपमेक्षणम्।
सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम्॥७९॥
समकर्णान्तविन्यस्य-चारुकर्णविभूषणम्।

---

तदेव प्रकटयति—देवाद्यनुरूपचेष्टायुक्तानि, देव उपन्द्रादिः तिर्य्यङ् मत्स्यादिः, मनुष्यो रामादिः, आदिशब्दान्मिश्रोनृसिंहादिः. लीलयेत्युक्तिं समर्थयते—'**जगता**' मिति। कर्मनिमित्ताज्ञाता हि चेष्टा परिच्छिन्न सप्रतिघाता च भवति। इयन्तु व्यापिनी सर्वजगद् विषया, अव्याहतात्मिका च, अतः सा चेष्टा स्वतन्त्रस्येश्वरस्य लीलैवेत्यर्थः॥७१॥

भवत्येवं प्रस्तुते किमायतं तत्राह—'**तद्रूप**'मिति चतुर्भिः। पूर्वोक्तेषु तद्रूपं तृतीयं लीलाविग्रहरूपम्॥७२॥

कक्षं शुष्कतृणम्॥७३॥

समस्तशक्तीनामाश्रये तत्र अवचाररूपे चेतसः स्थितिं कुर्वीत॥७४॥

सर्वगस्यात्मनः परब्रह्मणोऽप्याश्रयः प्रतिष्ठा, तदुक्तं भगवता—'**ब्रह्मणो** हि प्रतिष्ठाहममृतस्याव्ययस्य च। शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य चेति। त्रिभावभावनातीतः असंसारित्वात्॥७५॥

अर्वादेवतानिन्दया भगवन्मूर्त्तिधारणामेव दृढीकरोति '**अन्ये चे**' ति द्वाभ्याम्॥७६॥

सर्वेष्वाश्रयेषु आश्रयणीयेषु अर्थेषु निःष्पृहं परमानन्दरूपत्वात् चित्तविशेषणं वा॥७७॥

कम्बुग्रीवं सुविस्तीर्ण-श्रीवत्साङ्कितवक्षसम्॥८०॥
बलीत्रिभङ्गिना मग्नाभिना चोदरेण वै।
प्रलम्बाष्टभुजं विष्णुमथवापि चतुर्भुजम्॥८१॥
समस्थितोरुजङ्घञ्च सुस्थिराङ्घ्रिवराम्बुजम्।
चिन्तयेद् ब्रह्म मूर्त्तस्य पीतनिर्मलवाससम्॥८२॥
किरीटचारुकेयूर-कटकादिविभूषितम्।
चिन्तयेत् तन्मना योगी समाधायात्ममानसम्।
तावद् यावद् दृढीभूता तत्रैव नृप! धारणा॥८४॥
व्रजतस्तिष्ठतोऽन्यद् वा स्वेच्छया कर्म कुर्वत:।
नापयाति यदा चित्तात् सिद्धां मन्येत तां तदा॥८५॥
तत: शङ्ख-गदा-चक्र-शार्ङ्गादिरहितं बुध:।
चिन्तयेद्भगवद्रूपं प्रशान्तं साक्षसूत्रकम्॥८६॥
शार्ङ्ग-शङ्ख-गदा-खड्ग-चक्राक्षबलयान्वितम्॥८३॥
सा यदा धारणा तद्वदवस्थानवती तत:।
किरीट-केयूरमुखैर्भूषणै रहितं स्मरेत्॥८७॥

---

अनाधारे विशिष्टालम्बनरहिते॥७८-७९॥

कम्बुग्रीवं रेखात्रयाङ्कितकण्ठम्। सुविस्तीर्णं श्रीवत्साङ्कित वक्षो यस्य तं विष्णुम्॥८०॥

त्रयो भङ्गा इव भङ्गास्तरङ्गाकारा रेखा: सन्ति यस्मिन् तत् त्रिभङ्गि, बलीभिस्त्रिभङ्गिना। मग्ना निम्ना नाभिर्यस्मिन तथाभूतेन चोदरेणोपलक्षितम्॥८१॥

धृतकाख्यां यष्टिमिव घनीभूतं ब्रह्म मूर्त्तम्॥८२॥

अक्षबलयम् अक्षमाला अष्टभुजत्वे अवशिष्टयोर्भुजयो: पद्मबाणौ अपरौ भाव्यौ। चतुर्भुजत्वे शङ्खचक्रगदाब्जान्वितम्॥८३-८४॥

धारणादार्ढर्थं लक्षणमाह,.—'व्रजत' इतिय चित्ताद् यदा मूर्त्तिर्नापयाति, तदातां धारणां दृढां मन्येत॥८५॥

मूर्त्तिधारणायामेव आयुधभूषणावयवपरित्यागेन आलम्बनसौख्यारतम्यमाह—'तत' इति॥८६॥

**तदेकावयवं देवं चेतसा हि पुनर्बुधः।**
**कुर्यात्ततोऽवयविनि प्रणिधानपरो भवेत्॥८८॥**
**तद्रूपप्रत्ययायैका सन्ततिश्चान्यनिःस्पृहा।**
**तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप॥८९॥**
**तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत्।**
**मनसा ध्याननिष्पाद्यः समाधिः सोऽभिधीयते॥९०॥**
**विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव!**
**प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः॥९१॥**
**क्षेत्रज्ञः कारणं ज्ञानं करणं तेन तस्य तत्।**
**निष्पाद्यं मुक्तिकार्यं वै कृतकृत्यो निवर्त्तते॥९२॥**
**तद्भावभावनापन्नस्ततोऽसौ परमात्मना।**

---

अवस्थानवती दृढा॥८७॥

तत् ततः एकावयवं पादाङ्गुल्या-दिनानावयवनिष्ठं चित्तं ततो वियोज्य एकावयवयुक्तं देवं चेतसा कुर्यात् भावयेत्। तदुक्तं **भागवते**—तत् सर्वव्यापकं चित्तमाकृष्यैकत्र धारयेत्। नान्यानि चिन्तयेद् भूयः सुस्मितं भावयेन्मुखमिति। तदेवं लीला मूर्त्तिधारणैव स्थूला, सा च क्रमेण चतुर्थ्युक्ता। इदानीं तत् कारणेश्वरधारणमाह—**'ततोऽवयविनी'**ति—प्रसन्नचारुवदनमित्यादिनोक्ता अवयवा येन लीलामूर्तिना आविष्कृताः तस्मिन्। यद्वा अवयवा लीलावताराः येन गृहीतास्तस्मिन् प्रणिधानं चित्तस्थैर्यं तत्परो भवेत्॥८८॥

इदानीं ध्यानमाह—**'तद्रूपे'** ति। तद्रूपस्य धारणासिद्धस्य वस्तुनः प्रत्यया यस्यां सन्ततौ सा एका अविच्छिन्ना सन्ततिः अन्यानिःस्पृहा विषयान्तरेणाव्यवधीयमानः विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाहो ध्यानमित्यर्थः. तच्च प्रथमैर्यमादिभिर्धारणान्तैः षड्भिरङ्गैर्निष्पाद्यते॥८९॥

तस्यैव ध्येयस्य कल्पनहीनं घातृध्यानध्येयभदेहीनं यथा भवति, एवं यत्स्वरूपग्रहणं तदेकाकारत्वेनावस्थानं ध्यानसाध्यः समाधिः। तदाह **पतञ्जलिः—'देहबन्धाचितस्य धारणा तत्रत्यक्यैकतानता ध्यानम्, तदेवार्थमात्रनिर्भास स्वरूपशून्यमिव समाधिरिति॥९०॥**

निष्पन्नसमाधेर्मुक्तिप्रकारमाह—**'विज्ञान'** मिति। समाधिजन्यस्वरूपसाक्षात् कारो विज्ञानम्। प्रक्षीणाः अशेषाः पूर्वोक्तास्तिस्त्रो भावना यस्य सः॥९१॥

भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्॥ ९३॥
विभेदजनके ज्ञाने नाशमात्यन्तिकं गते।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥ ९४॥
इत्युक्तस्ते महायोगः खाण्डिक्य! परिपृच्छतः।
संक्षेप-विस्तराभ्यान्तु किमन्यत् क्रियतां तव॥ ९५॥

खाण्डिक्य उवाच

कथिते योगसद्भावे सर्वमेव कृतं मम।
तवोपदेशेनाशेषो नष्टश्चित्तमलो यतः॥ ९६॥
ममेति यन्मया प्रोक्तमसदेतन्न चान्यथा।
नरेन्द्र! गदितुं शक्यमपि विज्ञेयवेदिभिः॥ ९७॥
अहं ममेत्यविद्येयं व्यवहारस्तथानयोः।
परमार्थस्त्वसंलाप्यो गोचरो वचसां न सः॥ ९८॥
तद्गच्छ श्रेयसे सर्वं ममैतद्भवता कृतम्।
यद्विमुक्तिप्रदो योगः प्रोक्तः केशिध्वजाव्ययः॥ ९९॥

पराशर उवाच

यथार्हपूजया तेन खाण्डिक्य स पूजितः।

---

ननु तर्हि विज्ञानेनैव व्यवधानात् कथमात्मनो ब्रह्मैक्यं तत्राह—'**क्षेत्रज्ञ**'इति ॥९२॥

ननु ज्ञानिनोऽपि भेदप्रतीतिरस्त्येव अन्यथोपदेशाद्यसिद्धेः, तत्राह—'**भेदश्चे**'ति। बाधित एव कथंचिदनिवर्त्तत इत्यर्थः॥९३॥

तस्मादज्ञानं तत्कार्य्यञ्च संसारः विनाश्य स्वयमेवाज्ञानकार्यमनोवृत्तिरूपत्वाद् दग्धेन्धनानलवत् ज्ञानेऽपि विनष्टे सति न पुनः संसारप्ररोहशङ्केत्याह—'**विभेदे**'ति॥ ९४-९५

योगस्य सद्भावे याथार्थ्ये कथिते सति॥ ९६॥

ननु चित्तमले अहंममतादौ नष्टे मम तवोपदेशेनेति तद्वचनं न विरुद्धेतेत्यत आह—'**ममे**'ति। यन्मया प्रोक्तं एतदसदेव बाधितानुवृत्त्या प्रोक्तम्। अन्यथा तु विज्ञेयवेदिभिः अवगतपरमार्थैः गदितुमपि न शक्यं, कुतः पुनः प्रारब्धकर्मभोगस्तेषामित्यर्थः॥ ९७॥

एतत् स्पष्टयति, —'**अहंममे**'ति॥ ९८-९९॥

आजगाम पुरं ब्रह्मंस्ततः केशिध्वजो नृपः॥ १०० ॥
खाण्डिक्योऽपि सुतं कृत्वा राजानं योगसिद्धये।
वनं जगाम गोविन्दे विनिवेशितमानसः॥ १०१॥
तत्रैकान्तरतिर्भूत्वा यमादिगुणशोधितः।
विष्णवाख्ये निर्मले ब्रह्मण्यवाप नृपतिर्लयम्॥ १०२॥
केशिध्वजोऽपि मुक्त्यर्थं स्वकर्मक्षपणोन्मुखः।
बुभुजे विषयान् कर्म चक्रे चानभिसंहितम्॥ १०३॥
स कल्पनोपभोगैश्च क्षीणपापोऽमलस्तथा।
अवाप सिद्धिमत्यन्तं तापक्षयफलां द्विज॥ १०४॥

इति श्रीविष्णुपुराणे षष्ठांशे सप्तमः अध्याय:॥

---

राजानं बलदुर्गमन्त्रिभृत्यादिस्वामिनं सुतं कृत्वा॥१०१-०१२॥

मुक्त्यर्थं विदेहकैवल्यार्थम् अनभिसंहितं फलाभिसन्धिशून्यं लोकसङ्ग्रहार्थ कर्म चक्रे॥१०६॥

क्षीणपापः प्रक्षीणप्रारब्धकर्म्मा॥१०४॥

इति श्रीधरस्वामिकृतायामात्मप्रकाशाख्यायां स्वप्रकाशाख्यायां वा श्रीविष्णुपुराणटीकायां षष्ठांशे सप्तमोऽध्यायः।

# अष्टमोऽध्यायः

## (शिष्यपरम्पराकथनम्, विष्णुपुराणस्य माहात्म्यमुपसंहारश्च।)

पराशर उवाच

इत्येष कथितः सम्यक् तृतीयः प्रतिसञ्चरः।
आत्यन्तिको विमुक्तिर्या लयो ब्रह्मणि शाश्वते॥ १॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं चैव भवतो गदितं मया॥ २॥
पुराणं वैष्णवञ्चैतत् सर्वकिल्विषनाशनम्।
विशिष्टं सर्वशास्त्रेभ्यः पुरुषार्थोपपादकम्॥ ३॥
तुभ्यं यथावन्मैत्रेय! प्रोक्तं शुश्रूषवेऽव्ययम्।
यदन्यदपि वक्तव्यं तत् पृच्छाद्य वदामि ते॥ ४॥

मैत्रेय उवाच

भगवन्! कथितं सर्वं यत् पृष्टोऽसि मया मुने।
श्रुतञ्चैतन्मया भक्त्या नान्यत् प्रष्टव्यमस्ति ते॥ ५॥
विच्छिन्नाः सर्वसन्देहा वैमल्यं मनसः कृतम्।
त्वत्प्रसादान्मया ज्ञाता उत्पत्ति-स्थिति-संयमाः॥ ६॥
ज्ञातश्चतुर्विधो राशिः शक्तिश्च त्रिविधा गुरो!

---

अनन्तराध्यायोक्तात्यन्तिकलयोपसंहारपूर्वकमादितस्तत् प्रशंसन् सर्वपुराणार्थमुपसंहरन्नाह—'इती'ति चतुर्भिः। ब्रह्मणि लयरूपा या विमुक्तिः स एवात्यन्तिकः प्रतिसञ्चरः कथित इत्यन्वयः॥ १-३॥

चतुर्विधो राशिः 'चतुर्विभागः सन् सृष्टौ चतुर्धासंस्थितः स्थितौ। प्रलयञ्च करोत्यन्ते चतुर्भेदो जानर्दन' इति प्रथमांशोक्तः पूर्व्वाध्यायोक्तो वा। परतत्त्वेश्वर-तदवतार-जगद्रूपा त्रिविधा शक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा। अविद्या कर्म्मसंज्ञाया तृतीया शक्तिरिष्यत' इत्युक्ता। त्रिविधा भावभावना —ब्रह्मभावना कर्म्मभावना उभयभावना चेति॥ ७॥

त्वत्प्रसादान्मया ज्ञातं ज्ञेयमन्यैरलं द्विज।
यथैतदखिलं विष्णोर्जगन्न व्यतिरिच्यते॥८॥
कृतार्थोऽस्म्यपसन्देह-स्त्वत्प्रसादान्महामुने!
वर्णधर्मादयो धर्मा विदिता यदशेषतः॥९॥
प्रवृतञ्च निवृत्तञ्च ज्ञातं कर्म मयाखिलम्।
प्रसीद विप्रप्रवर! नान्यत् प्रष्टव्यमस्ति मे॥१०॥
यदस्य कथनायासैर्योजितोऽसि मया गुरो।
तत् क्षम्यतां विशेषोऽस्ति न सुतां पुत्र-शिष्ययोः॥११॥

पराशर उवाच

एतत्ते यन्मयाख्यातं पुराणं वेदसम्मितम्।
श्रुतेऽस्मिन् सर्वदोषोत्थपापराशिः प्रशाम्यति॥१२॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं कृत्स्नं मयात्र तव कीर्त्तितम्॥१३॥
अत्र देवास्तथा दैत्या गन्धर्वोरगराक्षसाः।
यक्षा विद्याधराः सिद्धाः कथ्यन्तेऽप्सरसस्तथा॥१४॥
मुनया भावितात्मानः कथ्यन्ते तपसान्विताः।
चातुर्वर्ण्यं यथा पुंसां विशिष्टचरिता नराः॥१५॥
पुण्याः प्रदेशा मेदिन्याः पुण्यो नद्योऽथ सागराः।
पर्वताश्च महापुण्याश्चरितानि च धीमताम्॥१६॥
वर्णधर्मादयो धर्मा वेदधर्माश्च कृत्स्नशः।
येषां संश्रवणान् सद्यः सर्वपापैः प्रमुच्यते॥१७॥

---

यथा जगद्विष्णोर्न व्यतिरिच्यते तथा ज्ञातमित्यन्वयः॥८-११॥

वेदैः सम्मितं तुलितम्, सर्ववेदार्थसारोक्तेः.सर्वे दोषा निषिद्धाः क्रियाः तदुत्थः॥१२॥

कृत्स्नपुरणार्थानुवादपूर्वकं तच्छ्रवणादिफल प्रपञ्चयति—'**सर्गश्चे**'त्यादिना॥१३-१५॥

धीमतां ज्ञानिनां चरितानि च॥१६-१८॥

उत्पत्ति-स्थिति-नाशानां हेतुर्यो जगतोऽव्ययः।
स सर्वभूतः सर्वात्मा कथ्यते भगवान् हरिः॥ १८॥
अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्वृकैरिव॥ १९॥
यन्नाम कीर्त्तितं भक्त्या विलापनमनुत्तमम्।
मैत्रेयाशेषपापानां धातूनामिव पावकः॥ २०॥
कलिकल्मषमत्युग्रं नरकार्त्तिप्रदं नृणाम्।
प्रयाति विलयं सद्यः सकृद् यत्रानुसंस्मृते॥ २१॥
हिरण्यगर्भ-देवेन्द्र-रुद्रा-दित्या-शिव-वायुभिः।
किन्नरैर्वसुभिः साध्यैर्विश्वदेवादिभिः सुरैः॥ २२॥
यक्ष-रक्षोगणैः सिद्धैर्दैत्य-गन्धर्व-दानवैः।
अप्सरोभिस्तथा तारानक्षत्रैः सकलैर्ग्रहैः॥ २३॥
सप्तर्षिभिस्तथा धिष्ण्यैर्धिष्ण्याधिपतिभिस्तथा।
ब्राह्मणाद्यैर्मनुष्यैश्च तथैव पशुभिर्मृगैः॥ २४॥
सरीसृपैर्विहङ्गैश्च प्रेताद्यैः समहीरुहैः।
वना-द्रि-सागर-सरित्-पातालैः सधरादिभिः॥ २५॥

---

अवशेनापि यदृच्छयापि यस्य नाम्नि कीर्त्तिते सति। यथाऽकस्मादागतं सिंह दृष्ट्वा त्रस्त्रा हरिणमवरुन्धन्तो वृकाः तं विसृज्य पलायन्ते तद्वत्॥ १९॥

भक्त्या तत्कीर्त्तने फलमाह—**'यन्नामे'** ति। द्वादशाब्दप्रायश्चितैः पापमेव विनश्यति, तत्संस्कारस्तु विशिष्यते। इदन्त्वशेषाणां ससंस्कारणां पापानां विलापन विनाशकम्। न चान्येन निःशेषपापक्षयः स्यादिति दृष्टान्तेनाह, यथा धातूनां सुवर्णादीनाम्, उद्वर्त्तनलक्षणप्रक्षालनादि धात्वन्तरसंयोगजं मलं न नाशयति, किन्तु पावक एव, अतः सर्वोत्तममिदमेवेत्यर्थः॥ २०॥

हरिस्मृतेः फलमाह—**'कलिकल्मष'** मिति। यत्र यस्मिन्॥ २१॥

हिरण्यगर्भादिभिः सहितः ब्रह्माण्डं मेरोः परमाणुर्यथा तथात्यन्तमल्पं यस्य स विष्णुरत्र कीर्त्यत इति षष्ठेनान्वयः॥ २२-२३॥

